तयाऽकुत्वविषयेऽस्योदजधातोः कुत्वविषये गमधातुप्रकृतिकडान्तस्य प्रयोग इत्यत्रैव तात्पर्यङ्कल्प्यते इत्याशयात्॥परे तु दकारोच्चारणन्नाभ्युद्नः समुद्न इत्यत्र दकारश्रवणार्थन्तयोरुपधायान्तकारस्य थकारस्य वोच्चारणेन सिद्धिसम्भवादिति दकारोच्चारणन्न न्द्रा इतिनिषेधप्रवृत्यर्थमेवेत्याशय इति न पूर्वापरविरोध इत्याहुः। अदिद्रियदिति। अत्र दकारस्य संयोगादित्वेप्यादिभूतादचः परत्वाभावान्निषेधो नेति भावः। इतिपक्ष इति। सयतेरिदन्यतरस्याम् लुङ्लङ्लृङ्क्ष्वडुदात्त इति द्विलकारकनिर्देशपक्षे। परत्वादपीति। शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वमिति भावः। अधिकारसूत्रत्वेन। एकाचो द्वे इतिवदधिकारसूत्रत्वेन। एतेन द्वित्वविधायकसूत्रे धातोरित्यस्य सत्त्वात्तदेकवाक्यतासम्भवो ध्वनितः। एवञ्च चङीतिसूत्रेऽप्युपस्थितौ तत्प्रदेशे धातुसंज्ञाकालिकादादेरचः पराः संयोगादयो नदरा द्विर्न भवन्तीति वाक्यार्थः प्रसज्यप्रतिषेधपक्षे पर्युदासन्यायेन तु धातुसंज्ञाप्रवृत्तिकालिकादादिभूतादचः परे ये संयोगादयो नदरास्तद्भिन्ना द्वे भवन्तीत्यर्थान्निषेधाप्राप्तिरिति भावः। किञ्च विधिशास्त्रैकवाक्यतया निषेधस्यान्तर्भूतचङ्निमित्तकत्वे नैतद्दृष्ट्या वहिर्भूयलकारनिमित्तकस्याटोऽसिद्धत्वेन निषेधाभाव इत्यपि बोध्यम्। नाजानन्तर्यपरिभाषा त्वनित्या नास्त्येव वेति बोध्यम्। अलाक्षणिकत्वादिति। एतेन पै इत्यस्य व्यावृत्तिस्सूचिता। अर्त्तिह्रीत्यस्य इति। युगागमविधायके पिवतेरेव ग्रहणमिति हि प्रतिपादितम्। वचनम्। पातेर्णाविति वचनम्। पातेर्णाविति वचने णावित्यस्य निमित्तस्योपादानेन प्रत्ययादर्शनस्योक्तिसम्भवाभावान्न लुक्शब्दस्य संज्ञाभूतस्य ग्रहणमित्यपि बोध्यम्। व्याख्यानादिति। सूत्रेऽन्यतरस्याङ्ग्रहणकरणमूलकव्याख्यानादित्यर्थः। यदि निरनुबन्धकत्वात् क्र्यादेर्लीधातोरादादिकस्य लाधातोः प्रतिपदोक्तस्यैव ग्रहणमभिप्रेतमभविष्यत्तदा धातुभेदेन रूपद्वयसिद्धौ प्रकृतसूत्रेऽन्यतरस्याङ्ग्रहणन्नाकरिष्यादिति भावः। आत्मनेपदविषयेति।

लियः सम्मानतेत्यनेन तत्रात्मनेपदविधानादिति भावः । इदमेव । मता-न्तरमेव । इहापि द्वयोर्ग्रहणं व्याख्यानादिति । अन्यतरस्याङ्ग्रहणेन लीधातुविषये व्यवस्थापकन्यायाप्रवृत्तिज्ञापनमूलकव्याख्यानादित्यर्थः । कारणपरहेतुशब्देन षष्ठीसमासे हेतुपादानमनर्थकमित्याह । हेतुसम्ब-न्धीति । एतत् । इकारप्रश्लेषेण दोषवारणम् । भीस्मीप्रकृतिकेति । प्र-त्यासत्त्या तथा कल्प्यत इति भावः । णाविति चेति । आर्द्धधातुक इ-त्यस्य विषयसप्तमीत्वं प्राग् व्यवस्थापितमिति तत्सामानाधिकरण्यात्तस्मा-वित्यपि विषयसप्तमीति भावः । ओः पुयण्जीतिसूत्रस्थवर्गादिग्रहणज्ञा-पितवचनस्येहाप्रवृत्त्या णौ कृतस्य गाङादेशस्य न स्थानिवत्त्वमित्याह । तत्रादेशस्येत्यादिना । सिध्यतेरपार । अपारलौकिकोऽर्थः प्रकृते धात्वर्थ-फलरूपो विवक्षितः । परलोकः प्रयोजनमस्य पारलौकिकम् । अन्नं सा-धयतीत्यत्र धात्वर्थफलञ्चिप्रप्राप्तिरूपन्तच्च परम्परया यद्यपि ब्राह्मणेभ्यो दानादिना पारलौकिकम्भवति । तथापि साक्षाद्यत्पारलौकिकन्तदेव फ-लमपारलौकिकेत्यत्र प्रतियोगित्वेन विवक्षितमित्येतत्सूचनाय ऐहलौकि-क इति वक्तव्येऽपारलौकिक इत्युपात्तम् । प्रजने वीयतेः । विशेषाभा-वादिति । आत्वभावाभावयोर्विशेषाभावादित्यर्थः । विशेषसम्भावनानि-रासायाह । वचीस्वपीत्यादीति । पक्षयोरिति । तत्र हि काम्यचः कका-रस्य फलाभावादित्संज्ञाभावे उक्ते इदन्तर्हि प्रयोजनमुपयट्काम्यती-त्यत्र सम्प्रसारणं यथा स्यादितिपूर्वपक्षिणोक्ते यजादिभिरत्र कितं वि-शेषयिष्यामः यजादिभ्यो विहिते कितीति समाधायाथापि कथञ्चिदि-त्कार्यं स्यादेवमपि न दोषः सुप आत्मनः क्यच् काम्यच्चेतिचकारस्य प्र-श्लेषेण काम्यचः ककारस्यानादित्त्वं साधितम् । अथापीति । यजादिभिः किन्न विशेष्यते कार्यित्वेन यजादयो निर्दिश्यन्त इति कैयटः । एतेनो-भयोः पक्षयोः फलैक्यम्बोधितम् । यदि सम्प्रसारणयोग्येभ्यो यन्तेभ्यः क्विप्स्यात्तदा णिलोपे क्वौ विधिम्प्रतीति स्थानिवद्भावनिषेधे विहितक्वि-

शेषणाभावपक्षे । सम्प्रसारणस्य विहितविशेषणपक्षे सम्प्रसारणाभावस्य प्राप्तिरिति फलभेदः स्यादिति तादृशेभ्यः क्विबभावः कल्प्य इति भावः । एतेन । पूर्वोक्तव्याख्यानेन । व्याः । व्यौ इत्यादिरूपाणीति । आत्वपक्षे णौ युगागमेऽपि णिजन्तात्क्विपि णिलोपे वल्निमित्तकयकारलोपे व्या इत्यादिरूपम् । वलि लोपे णिलोपस्य स्थानिवत्त्वन्तु न । क्वौ लुप्तमिति निषेधात् । आत्वाभावपक्षे तु मिचूपरत्वेऽपि युगागमो न । शाच्छासेति-सूत्रे आत इत्यस्यार्त्तिह्रीतिसूत्रादनुवर्त्तनात् । अत एवाजूहवदजुहाव-दित्यत्र युगागमाभावः । एवञ्चाचोञ्णितीति वृद्धौ व्यैरित्यादिरूपमि-ति बोध्यम् । ननु णिजन्ताद्विचि सत्यात्लपक्षे युगागमे वलि लोपे णि-लोपस्य स्थानिवत्त्वेन यान्तमात्वाभावे तु व्यैरितिविशेषोऽस्त्येवेत्यत आ-ह । विच इति । वा चित्तविरागे । चित्तम्मनः । तस्य विरागोऽप्रीतिः । स्वीययोग्यार्थग्रहणानुकूलव्यापाराभावरूपा । तस्य । क्रमादेः । अनेन । आखेट इतिव्याख्यानेन । मृगरमणमितिसमुदाय आखेटकपरः मृगपदा-र्थो न विवक्षितः । आखेटश्च ग्रहणानुकूलव्यापारविशेषः । अन्ये त्विति । एतन्मते मृगरमण इत्यत्र मृगपदार्थो विवक्षित एव । यत्र रञ्जधातुर्मृगनि-ष्ठग्रहणाद्यनुकूलव्यापारवाचकस्तत्रैवास्य प्रवृत्तिः । चिस्फुरोर्णौ । अत्र चिशब्देन चुरादिस्वादिपठितयोर्ग्रहणम् । मित्त्वे तु विशेषः । ननु प्रति-पदोक्तपरिभाषया चुरादिणिच एव णावित्यनेन ग्रहणमिति मते चिनो-तेश्चापयतीत्यनुपपन्नमत आह । इदञ्चुरादीति । ननु कृतात्वस्य द्वित्वे-ऽभ्यासेऽकारश्रवणापत्तिरत आह । आत्वस्येति । ननूभौ साभ्यासस्येत्यत्र साभ्यासस्येति कार्यिणो नकारस्य विशेषणं स्याद्गुणानाञ्च परार्थत्वादि-तिन्यायादुभाविति च न नकारस्य विशेषणम्भविष्यति । साभ्यासस्येत्य-नेनैवाभ्यासावयवनकारस्य निवृत्तेर्लाभे सत्युभाविति व्यर्थं स्यादिति सामर्थ्यादुभाविति विधेयस्य णस्य विशेषणं स्यात्तथा चाभ्यासस्योत्तर-खण्डनकारस्य च ञ्रसजो रोपधयोरमन्यतरस्यामित्यत्रेव स्थानषष्ठीनिर्दे-

ज्ञान्निवृत्त्यापत्तिरत आह । साभ्यासस्येति । गुणः कृतात्मसंस्कार इति-न्यायेन प्रकृते गुणानाम्चेत्यस्य बाध इति भावः । व्याख्यानादिति । ल-क्ष्यानुसारिव्याख्यानादित्यर्थः । इदञ्च प्रकृतसूत्रभाष्ये साभ्यासस्य द्व-योरिष्टमित्यनेन स्पष्टम् । अत एव । उक्तार्थस्यैवाभिप्रेतत्वादेव । अत एव । अभ्यासश्रवणस्येष्टत्वादेव । अभ्यासेनेति । विना तद्योगमित्युक्त-त्वेन सहार्थे तृतीया । तदनुवादकम् । अनितेरितिसूत्रसिद्धार्थानुवादकम् । अत एव । उभावित्यस्य विधेयविशेषणत्वादेव । अत्पूर्वस्येतिवदिति । तस्य यथा स्थानिविशेषणत्वेन षष्ठ्यन्ततया निर्द्देशः कृतस्तद्वदित्यर्थः । अन्यथा । उभौग्रहणाभावे । ण्यन्तः सन्नतश्चेत्येवोपात्तन्न तु लिट्पदम-पि तदभिप्रायमाह । ईर्ष्यतेराम इति । आद्यव्याख्याने । तृतीयव्यञ्ज-नस्येतिव्याख्याने ॥

## इति हेतुमण्ण्यन्तविवरणम् ।

धातोः कर्मणः समानकर्तृकात् । अत्र केचित् । प्रकृतसूत्र एवात्म-न इत्युपादेयम् । तदेवोत्तरसूत्रेऽप्युपकरिष्यति । आत्मन इति प्रकृतसूत्रे धातोरित्यस्य विशेषणम् । षष्ठ्यर्थश्चात्र कर्तृत्वमिति समानकर्तृकादित्य-स्य लाभो भविष्यति । तदेवेच्छायामित्यस्य च विशेषणम् । प्रकृतेऽपि षष्ठ्यर्थः कर्तृत्वमेवेत्युभयोरर्थयोर्लाभे समानकर्तृकादिति व्यर्थमित्याहुः । अत्रेदं वक्तव्यम् । आत्मन इत्यत्राकृष्टस्य स्वरितत्वस्य कल्पनयोत्तरत्र सम्बन्धस्य प्रत्यासत्त्या चैकात्मबोधकत्वकल्पनायाञ्च गौरवमिति स्पष्टमेव । किञ्चैकस्यात्मन इत्यस्य परम्परया धातुपदबोध्यविशेषणत्वमिच्छायामि-त्येतद्विशेषणत्वन्तु साक्षादित्येतत्कल्पने समानस्वभावविरोधः । किञ्च सकृ-दुच्चरितस्यात्मन इतिपदस्योभयविशेषणत्वं सकृदुच्चरित इतिन्यायविरुद्ध-म् । आवृत्त्योभयविशेषणत्वे तु मनोव्यापारगौरवमधिकं स्पष्टमेवेति । अत एव । सन आर्द्धधातुकत्वादेव । तद्धि गुणाभावार्थम् । यद्यस्यार्द्ध-

धातुकत्वन्न स्यात्तदाऽत्र गुणस्य प्राप्तिरेव नास्तीति कित्वविधानवैयर्थ्यं स्पष्टमेवेति भावः । कर्मण इत्यस्याभावेऽपि यथा कर्मण इत्यस्य लाभस्तत्प्रकारमाह । प्रत्ययवाच्य इति । प्रत्यासत्त्या । शीघ्रोपस्थितिकत्वेन । धातोरितिपदस्यार्थविशिष्टतत्तद्धातूपस्थापकतया विशेषणतयाऽर्थस्यापि तस्यामुपस्थितौ विषयत्वादिति भावः । दुर्घयेत्युत्तरमिति । कर्मण इत्यस्याभावे समानकर्तृकाद्धातोरित्यनेन यस्य यस्य समानकर्तृकत्वं तस्य सर्वस्योपस्थितौ करणभूतार्थवाचकादपि यत्किञ्चित्कर्मिकायामिच्छायामपि स्यादिति भावः । रुदविदमुष । रुद्साहचर्याद्विदेरेव ग्रहणमिति शङ्कां वारयितुमाह । लक्ष्यानुरोधादिति । अन्यथा । उगनुकर्षाभावे । कित्वाभावेन । इको झलितिसूत्रप्रवृत्तेः प्राक्कित्वाभावेन । एकाजित्येवेति । एकाच उपदेश इत्यत एकाज्ग्रहणमनुवर्तत इत्यर्थः । ननु परत्वेन षत्वकत्वयोरिति । अत्र लक्ष्ये षत्वकत्वयोः प्रवृत्तिर्भवतीत्येतावतैव षत्वकत्वयोरित्युक्तम् त्वेवं क्रमः कत्वात्पूर्वं षत्वाप्राप्तेः किन्तु कत्वे षत्वे च परत्वात् कृते इति विवक्षितम् । षत्वस्येति । कत्वस्याप्युपलक्षणमिदम् । अपवादत्वादिति । कृतेऽपि तेनेडागमोऽस्य प्राप्तेः । एतेन प्रतिपदोक्तत्वेन किरश्च पञ्चभ्य इति कृतेपीट् सनि वेत्यनेन पुनरिट् स्यादित्यपास्तम् । इकोझल् । नन्विदं सूत्रं व्यर्थम् । एतद्धि गुणाभावार्थम् । स च येन नाप्राप्तिन्यायेनाऽज्झनगमामिति दीर्घविधानेन सिद्धः । न च गुणे कृते दीर्घो गुणस्वरूप एव भविष्यतीति फलाभावात्तदा दीर्घाप्राप्तेः कथं येन नाप्राप्तिन्याय इति वाच्यम् । पर्जन्यवल्लक्षणन्यायेन तदापि प्राप्तेः । न च गुणाभाव इव चिकीर्षतीत्यत्रेत्वाभावोऽपि स्यादिति वाच्यम् । दीर्घस्येत्वनिमित्ततया तद्बाधायोगात् । यो दीर्घऋवर्णान्तस्तत्रापि गुणाभावरूपो दीर्घस्योपकारो भविष्यतीति तत्रापि पर्जन्यन्यायेन दीर्घः स्यादेव । मिञ्धातोः सनि दीर्घे मीग्रहणेन तस्य ग्रहणं यथा स्यादित्येवमर्थन्दीर्घत्वस्य चारितार्थ्यान्न गुणबाधकत्वमित्यपि न । तत्र दीर्घाभावेऽपि गुणविषये आत्वे-

कृते माग्रहणेन तद्ग्रहणसिद्धिः । न च कुटादिपठिताभ्यां गुधुभ्यां सनि गुणाभावस्य ङित्वेन सिद्धेर्जुगूषतीत्यत्र दीर्घस्य चरितार्थत्वात्कथङ्गुणबाधकत्वमिति वाच्यम् । उहनीत्येव सिद्धेऽज्ग्रहणस्य गुणाभावप्रवृत्तौ ज्ञापकत्वसम्भवात् । न च व स्यमागतीत्याऽज्झनगमामिति सूत्रेऽजादेशगमेरित्यर्थलाभोऽज्ग्रहणसत्त्वे भवति । सम्प्रति तु कथमिति वाच्यम् । सनीत्यस्यावृत्त्या सन्निमित्तकगमेरित्यर्थेन तल्लाभसम्भवादिति चेन्न । हलन्ताच्चेत्युत्तरार्थत्वात् । न च तत्रैव पठनीयं योगविभागो व्यर्थ इति वाच्यम् । दीर्घविधानस्य विषये बाध्यसामान्यचिन्ता भवताऽवश्यं वाच्याऽन्यथापुरस्तादपवादन्यायेन दीर्घस्य णिलोपबाधकत्वमेव स्यात् । एवं सति यथा गुणस्यायं बाधकस्तथा णिलोपस्यापि बाधकः स्यादिति क्त्विविधानमर्थवदित्यभिप्रायात् । णिलोपोदाहरणं ज्ञीप्सतीति । अत्र हि णेर्गुणदीर्घलोपाः प्राप्तास्तत्र विशेषाभावादनवकाशत्वेन दीर्घत्वमुभयोर्गुणलोपयोर्बाधकं स्यात् । येन नाप्राप्तिन्यायेन गुणस्यैव बाधकन्दीर्घत्वमिति तु न शङ्क्यं बाध्यस्य भेदेनापेक्षायां स न्यायो न तु सामान्यचिन्तायाम् । षष्ठ्या विपरिणम्यत इति । अन्तपदार्थान्वयायेत्यादिः । अज्झनगमां सनि । अत्र गम्शब्दो नानादेशगम्परः । जिगंसत इत्यत्र दीर्घापत्तेरत उक्तमजादेशगमेरिति । एतादृशार्थलाभस्त्वत्रैवाज्ग्रहणेन भवति । एतद्धिअजन्तानामित्यर्थलाभायोपात्तम् । एतदभावेऽप्यचश्चेतिपरिभाषयोपस्थितस्याच इत्यस्याङ्गविशेषणतयाऽजन्तानामित्यस्य लाभः स्यादेव । न चाचश्चेतिपरिभाषयोपस्थितमच इतिपदं हनगम्विशेष्यबोधकमेव भविष्यतीति वाच्यम् । हनगमामितिबहुवचननिर्देशस्यैवं सति वैयर्थ्यापत्तेः । एवञ्चाजितिपदं षष्ठ्यन्तं गम्विशेषणमिति । तादृशार्थलाभस्य सनीतिपदस्यावृत्त्याकल्पने तु न बहुवचनसामर्थ्यकल्पनाक्लेश इत्यवधेयम् । तत्र । गमेरिड्डितिसूत्रे । सर्वोपि । स्वतन्त्र आदेशरूपश्च । व्याख्यानादिति । सनि चेतिसूत्रभाष्यमूलकव्याख्यानादित्यर्थः । स्वतन्त्रस्य ग्रहणन्तु प्रतिप-

दोक्तत्वान्न्याय्यमेव। तथाऽदेशस्यापि ग्रहणम्। तत्र भाष्ये इग्वदिक इत्येव। अधिजिगमिषति। अधिजिगमिषत इत्युक्तम्। अत्रेडागमदर्शने-नादेशस्यापि ग्रहणम्। हलो व्युप। व्याख्यानादिति। दिद्युतिषते। दिद्योतिषत इत्यादीड्घटितप्रयोगदर्शन मूलकव्याख्यानादित्यर्थः। सामान्यापेक्षेतीति। इदमाचार्यानुरोधेन। भाष्यरीत्याह। णौ चङीति। सामान्यापेक्ष ज्ञापकत्वाभावेऽर्धेषिषिषतीत्यस्य सिद्धिमाह। किञ्चेत्यादिना। नैरर्थक्यादिति। एतच्च सनः समात्रस्य द्वित्वमितिमतेन। तदा तस्य।नर्थकतयाऽप्रत्ययत्वेनार्द्धधातुकत्वाभावादिति भावः। यदि तु धात्ववयवषकारसहितद्विर्वचनन्तदोत्तरखण्डस्य ष्य इत्यसनैरर्थक्ये न सन्ग्रहणेनाग्रहणादिड़ागमस्सन्यत इतीत्वस्य चाताप्राप्तिरिति रूपासिद्धिरिति बोध्यम् आप्ज्ञप्। इह ज्ञपीत्यनेन चुरादिण्यन्तस्य ग्रहणे णिच ईकारादेशे ईप्सतीतिरूपासिद्धिरत आह। अवादिभिरिति। अनन्त्य इति। आद्यधसाहचर्याज्ज्ञपिधातोरप्यनन्त्यस्येत्त्वमिति भावः। यदि पूर्वेति। अत्र यदीत्युपादानाद्वृद्धिशब्दसाहचर्याद्दीर्घशब्दोच्चारणेन विहितदीर्घस्यैव ग्रहणे त्वनन्त्यस्येति न वाच्यमिति ध्वनितम्। इदञ्च व्याख्यानं ज्ञपीतिणिजन्तानुकरणमितिमतेन।यदि तु पान्तानुकरणमेव ज्ञपीति त्विका निर्देशस्तदा णिचोऽप्राप्तिरेवेति बोध्यम् अत्र लोपो। अत्रेत्येतद्बोध्याकाङ्क्षाशान्त्यर्थकमाह। सनिमीत्यादीति। लोपस्याविकारत्वादिति। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यतीत्यत्र भाष्ये लोपपदोपादानेऽपि विकारपदोपादानात्। नानर्थक इति परिभाषाप्रत्याख्यान पक्ष आह। यद्वाऽसनीति। ईर्त्सतीत्यत्र शास्त्रप्रवृत्तिक्रममाह। पूर्वत्रासिद्धीयमिति। एतेनात्र यत्केन चिदजादेर्द्वितीयस्येत्यनेन ध्सशब्दस्य द्वित्वमित्युक्तन्तन्निरस्तम्। नन्वाप्ज्ञपीत्यत्र प्रतिपदोक्तत्वाच्चुरादिपठितस्यैव ग्रहणन्याय्यमत आह। ह्रस्वविशिष्टेति। गुणस्य बाध इति। एयल्लोपाविति वचनादित्यादिः। आशङ्कायामर्थेऽनेन सन्निति भ्रमवारणायाह। आशङ्काविषयार्थेति।

व्याख्यानादिति। गामादाग्रहणेष्वविशेष इति परिभाषया माग्रहणेन सर्वेषाङ्ग्रहणे सिद्धे तत्साहचर्यान्मीशब्दांशेऽपि न्यायाप्रवृत्तिः। न चैव दिवादिपठितमीङ्धातोरपि ग्रहणापत्तिरिति मिनातिमिनोत्योरित्यनुपपन्नमिति वाच्यम्। इको झलितिसूत्रभाष्ये मीग्रहणेन कृतदीर्घमिनोतेर्ग्रहणेनोभयोर्ग्रहणस्यैव प्रतिपादितित्वात्। द्वयोरिति। शक्लृ इक्लौ शकविभाषित इत्यनयोः। किन्त्वात्। हलन्ताच्चेति किन्त्वात्। वचनम्। मुचोऽकर्मकस्येति वचनम्। इदमुपलक्षणम्। अभ्यासलोपार्थमित्यपि बोध्यम्। आख्यानादितिवचनपठितप्रकृतिप्रत्यापत्तिरितिवचनस्य ज्ञापकत्वमितित्भ्रमवारणायाह। पुष्ययोगमिति। एतच्च आख्यानादिति वचनस्यप्रकृतिप्रत्यापत्तिरित्यस्य परे तु मतोक्तरीत्या ज्ञापकत्वासम्भव इतिमतेन। तत्परिभाषाभावः। निमित्तापायपरिभाषाभावः। सिद्धे सतीतिन्यायेन स्तौतिण्योरित्यस्य नियमार्थत्वे लब्धे एवकारोव्यर्थ इत्यत आह। एवकार इति। सुषूष इहेति। सन्नन्तादिट्। अयादेशे यलोपः। षेत्युच्यमाने यत्र कृतषत्वस्य सनोऽकारान्तस्य श्रवणन्तत्रापि नियमः स्यादित्यत्र न स्यात्। षणीत्युक्ते तु इड्विशिष्टस्यानार्थकत्वान्न षण्पदेन ग्रहणम्। शपा सहैकादेशेतु विकरणानामनर्थकतया विशिष्टस्यार्थवत्वमस्त्येव। परिषिषिक्षतीत्यत्र स्तौतिण्योरितिनियमेन व्यावृत्तिशंकायामाह। स्तौतिण्योरितीति। प्रतीषिषतीत्यत्र द्वितीयषकारे सन्त्वबुद्ध्या तन्निरूपिताङ्गत्वमस्तीत्यत्र सम्भवेनाऽऽक्लनगमामिति दीर्घः प्राप्नोतीत्यत आह। अत्राभ्यासान्तस्येति। भाष्योक्तरीत्येति। तावेव सुमिङौ यौ ततः परौ सैव च प्रकृतिराद्या समुदायपदत्वमेतेनेति यथोक्तन्तद्रीत्याप्रथमषिशब्दे सर्वे सर्वपदादेशा इतिन्यायेन स्थानिसन्बुद्धौ तत्परत्वन्न तदन्तस्य द्वितीयसनि च न तत्त्वबुद्धिरागन्तूनामन्ते सन्निवेश इति न्यायादिति द्वितीयस्य प्रत्ययपदेनाङ्गसंज्ञासूत्रस्थेन न ग्रहणमिति भावः। अप्रत्ययतयेति। न चादेशप्रत्यययोरिति षत्वमप्युत्सरखण्डाव्य-

वस्य न स्यादिति वाच्यम् । पूर्वत्रासिद्धीयमद्विर्वचन इतिवचनेन कृतषत्वस्य द्वित्वमित्यभ्युपगमात् । ननु यदि नेषीत्यादस्याङ्गत्वन्तदा सनप्रत इतीत्वमपि न स्यादत आह । श्रुतिपापीति । अङ्गावयवेति । न चाभ्यासान्तस्य नाङ्गत्वमिति प्रागुक्तमिति कथं सनि परे यदङ्गन्तदवयवत्वमिति वाच्यम् । सनि सति यत्किञ्चिन्निरूपिताङ्गावयवस्य ग्रहणात् । न च यंस्येतियङन्तात्सनि यंयमिषत इत्यत्रेत्वापत्तिः सन्निमित्ताभ्यासस्या ङ्गावयवस्य ग्रहणात् । अङ्गत्वञ्च सन्निरूपितमन्यनिरूपितं वेत्यन्यदेतत् । एवमपि प्रतीषिषतीत्यत्र षण्परत्वात्स्तौतिण्योरितिनियमेन षत्वमत्र न स्यात्पूर्वत्रासिद्धीयमद्वित्व इत्यनित्यस्यात्वादप्रवृत्तिरितिपक्ष इत्याशयेन कस्य चिच्छङ्कायामाह । धातूपेति । षण्परत्वमिति । इदं वस्तुस्थितिकथनन्न त्वस्येदानीमुपयोगः । न षण्परत्वमिति । एवञ्च तद्विषये शङ्कैव नेति भावः।द्विःप्रयोगपक्षे सन्त्वबुद्धिवत्प्रत्ययावयवत्वबुद्धिरपि सकारेऽस्तीति भावः । प्रत्ययत्वन्तु न सकारे गृह्यते प्रत्ययावयवत्वन्तु गृह्यते इति तु विरुद्धमाभातीति नायम्प्रकारः साधुः किन्तु कृतषस्यस्य द्विर्वचनमित्येव युक्तमिति वक्तव्ये तथानभिधानं स्वरूपव्याख्ययैव पराक्रियेति न्यायेन । भवप्रत्ययान्तादिति । शैशिकादित्यत्राध्यात्मादित्वाठञ् । अत्र शैषिकाच्छैषिको नेतिवाक्येऽपि सरूप इत्यस्य सम्बन्धो बोध्यस्तत्फलमाह । वाक्यमेवेत्येवेति । अत्र शालीयेवाक्यमेवेति मूलपाठः । अत्र । शैषिकादिति वाक्ये । अत एव । शैषिकादित्युपादानेन निषेधादेव । अत्र प्रातिपदिकत्वेन त्वान्तस्याप्युपस्थितिरस्तीति भावः । सत्यभिधान इति । घटत्वत्वमित्यादिप्रयोगाभिधाने । अर्थान्तरे । कुत्साद्यर्थे । तेन । शब्दतोऽर्थतो वेतिकथनेन । षष्ठीसप्तम्यर्थादिति । अत्र यथासङ्ख्येनान्वयः । तच्चापि ब्रुवता । मत्वर्थीयान्मतुबादेः प्रतिषेधं ब्रुवता । समानवृत्तौ । समानार्थवृत्तौ तृतीयवाक्यार्थे विशेषमाह ।सनि त्वर्थेति॥

॥ इति सन्नन्तविवरणम् ॥

धातोरेकाचो हलादेः । द्योतकमिति । एवञ्च पुनः पुनरुत्पत्तिकत्व-रूपम्पौनःपुन्यन्धातुवाच्यन्तत्पुनःपुनःपदसमभिव्याहारे प्रतीयते । न चैकस्याः क्रियायाः पुनपुनरुत्पत्तिर्न सम्भवतीति कथमेतदिति वाच्यम्। यथाऽवयवसमूहरूपक्रियायाः प्रारब्धापरिसमाप्तत्वरूपस्य वर्त्तमानत्वस्या-सम्भवेऽपि विवक्षितक्रियासमूहस्य विलक्षणबुद्धिविषयस्य तादृशवर्त्तमा-नत्वव्यवहारस्तथा सजातीयानेकसमुदायावयवकस्य समूहस्यैकबुद्धिविष-यत्वे नैकत्वविवक्षया तादृशसमुदायस्य समुदायान्तरस्य सजातीयस्य पुनः-पुनरुत्पत्तिर्यत्र तादृशस्थले पापच्यत इतिप्रयोगस्तादृशसमुदायविवक्षया भवति एवञ्च द्योत्यार्थस्य विशेषणतया पुनः पुनरुत्पत्तिकैककर्तृका वर्त्त-माना पचिक्रियेत्यादिरीत्या बोधः पापच्यत इत्यादितो भवति । तस्य । द्विर्वचनविधायकवचनस्य । न तत् । न द्विर्वचनम् । य-त्र तु कृत्स्ना विवक्षिता क्रिया पुनःपुनरुत्पन्नेति विवक्षा तत्र भव-त्येव द्विर्वचनमित्याह । भृशार्थ इति । तथैव पौनःपुन्ये यङि द्वित्वस्य प्रशक्तिस्तु नेत्याह । पौनःपुन्ये यङि त्विति । धातोरेवेति । द्रव्यन्तु स्व-भावतः सिद्धरूपमेव प्रतीयते शब्दशक्तिस्वभावादिति शेषः । भृशमीक्षते इत्यत्र हलादित्वाभावाद्यधोऽभावेऽपि भृशं शोभत इत्यर्थविवक्षायां शु-भधातोः प्राप्तिशङ्कायाम्भाष्यप्रामाण्यादेव यङोऽनभिधानन्तादृशस्थल इ-त्याह। अनभिधानादिति । फलमिदमिति । वार्त्तिकप्रतिपादितेभ्यो यङ्विधानम् । स्पष्टम्भाष्य इति । एवं हि तत्रोक्तम् । एकाऽज्झलादिग्रह-णं किमर्थम् । जागर्त्ति भृशम् । ईक्षते भृशमिति । एकाज्झकादिग्रह-णे चोक्तम् । तत्र तावदुक्तङ्कर्मसमानकर्तृकग्रहणानर्थक्यमिच्छाभिधाने प्र त्ययविधानादकर्मणो ह्यसमानकर्तृकाद्वा अनभिधानदि इहाप्येका-ज्झलादिग्रहणानर्थक्यङ्क्रियासमभिहारे यङ्वचनात् अनेकाचो हलादेर्ह्यनभि-धानमिति । तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणे ह्येका-ज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङार्थस्याभिधानन्न

भवति न भवति तत्रोत्पत्तिः । तद्यथा भृशं शोभते भृशं रोचते । यत्र चानेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याभिधानम्भवति तत्रोत्पत्तिः । अटाट्यते अरार्यते । अशाश्यते । सोसूच्यते । सोसूत्र्यते । वार्त्तिकोक्तमूर्णोतिग्रहणन्तु न कार्यमित्याह । यथान्यासेपीति । लुवद्भावेनास्माद्यथाऽऽमो अभाव इडभावश्च भवति तथा यङपि भविष्यतीति भावः । एतेन । भाष्योदाहरणादितिकथनेन । यस्यतीति । न चैवं स्थण्डिलाच्छयितरीत्यस्य निर्द्देशस्य परिभाषायां ज्ञापकत्ववर्णनासङ्गतिः । प्रकृते यथा द्वित्वम्प्रति कार्यित्वेऽपि दीर्घम्प्रति निमित्तत्वम्भवति तथा प्रकृतेऽपि गुणम्प्रतिकार्य्यत्वेऽपि निषेधम्प्रति निमित्तस्यादितिवाच्यम् । निषेधस्य पर्युदासन्यायेन विध्यङ्गतया विधीयमानकार्यसत्वं स्वन्धिन एकत्वमित्यभिप्रायेण ज्ञापकत्वसम्भवात् । नित्यङ्कौटिल्ये गतौ । अवधारणार्थ इति । नित्यशब्दस्य कौटिल्य एवान्वयो न तु क्रियायाम् । धातोरेकाच इतिसूत्रे भाष्य इति । धातोरेकाच इति सूत्रं यस्मिन्प्रकरणे तत्प्रकरणस्य व्याख्यानपरे भाष्य इत्यर्थः । तेनैवं विधभाष्यस्य नित्यङ्कौटिल्य इति सूत्र एव सत्त्वेऽपि नासङ्गतिः ॥ तद्विषयस्यैव । लुपसदेतिसूत्रविषयस्य । भृशं जपति ब्राह्मणः । भृशं समिधो दहतीत्येव ह्युक्तम् । अतोऽपि । अस्माद्भाष्यादपि । अत एव । गत्यर्थेभ्यः क्रियासमभिहारे यङः सत्त्वादेव । एवमेव । योगद्वयोदाहरणार्थप्रदर्शकवाक्ये विशेषासंप्रत्ययादित्यत्रैवोत्तरयोरित्यस्यान्वयेनैव । यत्र । पूर्वसूत्रे ॥ तत् । नित्यग्रहणम् । तत्प्रत्याख्याने । नित्यग्रहणस्य प्रत्याख्याने । भावगर्हायामेव । भावो धात्वर्थस्तद्गर्हायामित्यर्थः । इदमपि । एवकारघटितवाक्येन व्याख्यानमपि ॥ पूर्वसूत्रस्थनित्यग्रहणस्य सम्बन्धेन हि वृत्तावेवमुक्तम् । कैयटीयं व्याख्यानङ् खण्डयति । यत्त्विति । तस्य न्यायस्य । तक्रकौण्डिन्यन्यायस्य । अचरितार्थेति । उत्सर्गाप्राप्तियोग्ये विषयेऽचरितार्थविषयत्वादित्यर्थः । तथा तु न प्रकृते । कुटिलं व्रजति वाव्रज्यत इत्यत्र क्रि-

यासमभिहाराप्रतीतेरिति । अत एव । अर्थयोर्बाध्यबाधकभावाभावादे-
व । यङुदाहृतो भाष्य इति । अटाट्यते । अरार्यत इति यथा । प्रत्या-
ख्यातमिति । तच्च प्रागुपपादितम् । अनुवर्त्तमानमिति । अत्र लोपोऽ-
न्यासस्येतोऽनुवर्त्तमानम् । ग्र इतिनिर्द्देशस्य गॄ शब्दे इतिक्र्यादिपठि-
तस्यापि सम्भवादाह । गिरतेरेवेति । तुदादेरेवेत्यर्थः । व्याख्यानादिति ।
अचि विभाषेतिसूत्रे यङीत्यस्यानुवृत्तिपक्षे यङ्निमित्तस्य गिरते रेफस्ये-
ति कथनमूलकव्याख्यानादित्यर्थः । अपवादत्वादिति । संयोगादिविषये
ऽपवादत्वादित्यर्थः । अन्तरङ्गत्वञ्चोपसर्गद्योत्यर्थान्तर्भावेन धातोः पूर्वमे-
व वृत्तेः स्वीकारेण यथा पूर्वन्धातुः साधनेन युज्यते पश्चादुपसर्गेणेति-
मतेऽपि टः पूर्वस्प्रवृत्तया सुट् कात्पूर्व इतिसूत्रस्थं कात्पूर्वङ्ग्रहणस्प्रत्या-
ख्यातन्तथाथात्रापि सम्शब्दद्योत्यार्थविशिष्टक्रियाघोया: पौनः पुन्यविव-
या यङः प्रागुपसर्गयोगेन बोध्यम् । सूत्रभाष्यध्वनितेनेति । सुट् सर्वतोऽ-
न्तरङ्गतरको भवतीतिभाष्यध्वनितेनेत्यर्थः । अत एवैतदुन्तरस्भाष्य एव सं-
स्कृषीष्ट ऋतश्च संयोगादेरितीट् प्राप्नोति संस्क्रियते गुणोर्त्तिसंयोगाद्यो-
रिति गुणः प्राप्नोतीतिशङ्कायाः सुटष्टकारमकृत्वाऽभक्तत्वं स्वीकृत्य संयो-
गादित्वाभावेन परिहारे कृते संस्करोतीत्यत्र तिङ्ङतिङ इतिनिघातो
न प्राप्नोतीति दूषणेनाभक्तत्वपक्षस्य परिहारे कृते सति परिहारो न कृ-
तः । एतद्व्याख्यानावसरे कैयटेनापि सुटः परादित्वमुपपाद्येड्गुणयोः
प्रतिषेधो वक्तव्य एवेत्युक्तम् । एतेन सुटः सकारेण संयोगादित्वादृत-
श्चेतिसूत्रेऽसुट इति वक्तव्यङ्गुणोतीत्यत्रासुट इति वक्तव्यमितिप्रतिषेध-
वचनन्ध्वनितन्तथा यङिचेत्यत्राप्यसुट इति वक्तव्यमिति भावः । यत्वत्र
कैयटेनेड्विधावेकाच उपदेशेऽनुदात्तादितिसूत्रादुपदेशपदसंबन्धेनोपदेशे
संयोगादित्वाभावादिटो गुणोर्त्तीतिसूत्रे नित्यञ्छन्दसीतिसूत्रान्नित्यग्र-
हणस्यसम्बन्धेन गुणस्य परिहार इति समाधानान्तरङ्कृतन्तत्तु न युक्त-
म् । संयोगसंज्ञासूत्रभाष्ये प्रत्येकं संयोगसंज्ञेति पक्षे संहृषीष्ट संह्रिय-

त इत्यत्र इग्गुणयोरापादनपरभाष्यविरोधात् । नित्यग्रहणसम्बन्धेनाप्य-धीसङ्गतिरिति तन्नादिशेषे निरूपितम् । तदाह । एतच्चेति । सिचो य-ङि । यद्यप्युपसर्गात्सुनोतिसुवतीतिसूत्रं सात्पदाद्योरितिनिषेधस्य बा-धकन्तथापि सिचो यङीतिसूत्रं सर्वस्य बाधकम् । विनिगमनाविरहात् । श्पा निर्द्देशस्य । कवतेरितिशपा निर्द्देशस्य । कसधातुर्ग्वादिरेवेति । एतेनादादौ कस चिन्मते कसेतिपाठेऽपि तस्य व्यावृत्तिः । अजन्ताभ्यास-स्येति । दीर्घोऽकित इत्यत्र दीर्घश्रुत्योपस्थितस्याचं इत्यस्याभ्यासविशेषण-त्वादेतल्लाभः । अन्तरङ्गत्वात्तुकीति । दीर्घादितितुको वर्णमात्रापेक्षत्वे-नान्तरङ्गत्वादित्यर्थः । अपवादत्वाद्येन नाप्राप्तिन्यायेनापवादत्वात् । ते-षाम् । अभ्यासविकाराणाम् । तेषु व्यवस्थामाह । तत्रेति । अत एव । बाध्यस्य पूर्वस्याप्रवृत्तिरितिस्वीकारादेव । मीमांसत इत्यत्र मान्वधेतिस-त्रविधीयमानदीर्घो यद्यप्यन्तरङ्गस्तथापि पूर्वन्नप्रवर्त्तते लक्ष्यानुसारा-त् । हन्तेर्हिंसायाङ् घ्नीभावो वाच्यः । यद्यप्यत्र घ्नीत्येवास्तु । अभ्या-साच्चेतिकुत्वेनेष्टसिद्धिर्भविष्यति । तथापि प्रक्रियालाघवाय घ्नीभाव एव कृतः । घ्नीभावस्य द्वित्वोत्तरमप्रवृत्तौ दोषादाह । अत्रेति । यङ्लुकि नेति । न लुमतेतिनिषेधात् । अन्योक्तिङ् खण्डयति । एवञ्चेति । अत एव । प्रत्याख्यानस्यानभिप्रेतत्वादेव । अत एव । रुग्रिकौ चेतिसूत्रे ऋ-दुपधस्येत्यस्य सम्बन्धादेव । तृक्षमृक्षादाविति । तृक्ष गतौ । मृक्ष सङ्-घाते । आदिना स्तृक्ष गतौ । वृक्ष वरण इत्यनयोः सङ्ग्रहः । ई घ्रा-ध्मोःह्रस्वेकारादेशोऽप्यकृत्सार्वेति दीर्घेण यद्यपि जेघ्रीयत इत्यादि सि-ध्यति तथाप्युच्चरार्थन्दीर्घोच्चारणमित्याह । दीर्घ इति । अन्यथा विषय सप्तमीत्वाभावे ॥

## ॥ इति यङन्तविवरणम् ॥

यङोऽचि च । व्याख्यानादिति । अच्प्रत्ययपरकस्यैवोदाहरणस्य यो-

यूय इत्यस्य भाष्येऽन्यत्र च प्रदर्शनपरकव्याख्यानादित्यर्थः । स च । वाक्यभेदेन विधीयमानो लुक् च । भाष्यस्वरस इति । तत्र हि यान्ति धियन्ति सुवन्ति अयुवन् । ऊर्णुवन्तीत्येषामसंयोगपूर्वोवर्णस्याजादौ सार्वधातुके इत्यर्थेनानेकाज्ग्रहणेनाटोऽसिद्धत्वेन च सिद्धौ यङ्लुगर्थं हुश्नुग्रहणमित्युक्त्वा योयुवन्तीनां वृषभं रोरुवन्तीनां वृषभमित्यत्र छन्दस्युभयथेत्यनेनार्द्धधातुकत्वात्सिद्धमित्युक्त्वा एवन्तर्हि सिद्धे सति यद्धुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामपि यङ्लुग्भवतीत्युक्तम् । ततो बेभिदीति चेछिदीत्येतत्सिद्धम्भवतीत्युक्तम् । एवं विधप्रयोगद्वयस्यैवोपादानान्न सर्वत्र भाषायाम्भवतीति कल्प्यते । प्रयोगद्वयोदाहरणमुपलक्षणमिति तु प्राञ्चः । अन्तरङ्गत्वादितीति । अत्रान्तरङ्गत्वम्प्राथमिकप्राप्तिकत्वरूपम् । लुक्त्वाच्चेत्यपीति । सर्वविधिभ्यो लुको बलवत्त्वात् । न चायमिति । श्तिपा शपेतिपरिभाषासत्त्ववादिप्राचीनरीत्येयमाशङ्का । तस्य सूत्रस्य । प्रत्ययलोप इतिसूत्रस्य । तन्निषेधाभावे । श्तिपाशपेतिनिषेधाभावे । तदुक्तनियमार्थमिति । अत्रैव यङ्लुगन्तादितिनियमार्थम् । अत एव । अर्थान्तरवृत्तेर्धातोरिदं रूपमित्यस्याभिप्रेतत्वादेव । उक्तरीत्या । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेन । प्रत्ययलक्षणेन । यङ्त्वस्य प्रत्ययासाधारणत्वात् । ननु भूसुवोरितिगुणनिषेधो यङ्लुकि भाषायान्नेति नियमस्वीकारे सुधातोरपि यङ्लुकि भाषायान्निषेधाप्रवृत्तिः स्यादत आह । सङ्कोचे मानाभावेनेति । सुधात्वंशे सङ्कोचे मानाभावेनेत्यर्थः । लोट्येवेति । यद्वा तादृशनियमस्वीकारे यङ्लुकि भाषायान्निषेधाप्रवृत्तिलाभेऽपि छन्दसि लङादावपि निषेधः स्यादत आह । संकोच इति ॥ नियमसंकोचे मानाभावेनेत्यर्थः । तत्र सूत्रे । भूसुवोरितिसूत्रे । सर्वत्र गुण एव लभ्यत इति । एकाच्त्वस्य तत्राभावात । अत एव । उक्तस्य द्विविधनियमस्याभिप्रेतत्वादेव । नोद्भाविततेति । तत्र गुणस्येष्टत्वादिति शेषः । ननु लोट्येवेतिनियमश्चेदभिप्रेतस्तर्हि निपातनवैयर्थ्यम् । छन्दसि सर्व-

विधीनां वैकल्पिकत्वेन लोडतिरिक्ते निषेध।प्रवृत्तेर्लोभादत आह । अत एव । भाष्यायाम्प्रयोगाभावादेव । लेटि उदाहृतमिति । नतु भाषायामिति शेषः । तस्य । यङ्लुगन्तस्य बोभू इत्यस्य । समुदायस्य शब्दान्तरत्त्वादिति भावः । नियम इति । एवञ्च प्रकृतिग्रहण इत्यस्य ज्ञाप्यवचनस्याभावेऽपि निषेधस्य प्राप्तेर्नियमोपपत्तिरिति भावः । प्रकृतिग्रहणे यङ्लुगन्तस्यापीतिवचनस्वीकारेऽपीष्टासिद्धिरित्याह । द्विःप्रयोगत्वेऽपीति । अत एव । समुदायस्य शब्दान्तरत्वादेव । रुत्वमसिद्धमिति । एवञ्च ढ्रलोपपदघटकटशब्दे नैतत्सूत्रविधेयरेफस्य ग्रहणन्न भविष्यतीति भावः । एततसूत्रेति । ढ्रलोपसूत्रेत्यर्थः । नन्वयं ग्रन्थो हल्ङ्याप्सूत्रस्थशब्दरत्नग्रन्थेन सह विरुध्यते तत्र हि हल्ङ्यापः सोरित्येव सूत्रयितुमुचितमिति मनोरमास्थसुपदन्तिस्योरप्युपलक्षणन्तेनाऽविभा राज्यमिति सिद्धमत्रह्याविभर स इति स्थिते सकारस्य संयोगान्तलोपे रेफस्य रो रीति लोपे ढ्रलोप इति दीर्घोऽन्यथा न स्यात्संयोगान्तलोपस्यासिद्धत्वादित्युक्तम् । यदि ढ्रलोपसूत्रस्यपूर्वग्रहणेन पूर्वत्रासिद्धमित्यत्राग्रहणन्तदाऽविभा राज्यमित्यस्यानायासेन सिद्धिर्भवितीति चेन्न । अस्य शेखरग्रन्थस्य सामान्यापेक्षज्ञापकत्वाभिप्रायकत्वं शब्दरत्नग्रन्थस्य तु यथा नसुन इतियोगविभागेनक्वचिदसिद्धत्वाभावः कल्प्यते तथाऽजर्घा इतिभाष्योदाहरणेन प्रामाणिकप्रयोगस्थले प्रयोगदर्शनेनासिद्धत्वाभावसिद्धौ सामन्यापेक्षज्ञापकत्वाश्रयणे मानाभाव इत्याशयात् । वस्तुतस्तु बहुषु स्थलेषु प्रयोगाणाम्प्रामाणिकत्वस्य निश्चेतु मशक्यतया सामान्यापेक्षज्ञापकत्वमेव युक्तमिति बोध्यम् । प्रत्ययलक्षणेन यङ्निमित्तस्यानिदितामितिनलोपस्य शङ्कायामाह । नलोपस्तु नेति । लुका लोपादिति । नलुमताङ्गस्येतिनिषेधादिति शेषः । अन्यथा।सामान्यापेक्षत्वानङ्गीकारे। सूत्रस्थभाष्यविरुद्धमिति । तत्रयथाऽऽर्द्धधातुक इत्यस्य परसप्तमीत्वपक्षे बभूवेत्यत्राभूस्तेरित्यनेन लिटि परत्वाद्द्वित्वे परस्य भूभावे पूर्वस्य श्रवणम्प्राप्नोती-

त्युक्तन्तथा यङन्तत्वाद्धन्तेर्द्वित्वोत्तरं वधादेशश्चेत्स्यात्तदा परस्यैव स्यादितिभाष्यविरुद्धमित्यर्थः । निरूपितमिति । परस्यैव धातुत्वमितिनिरूपितमित्यर्थः । तस्माद्धश्यादित्यस्य प्रामाणिकत्वे यङ्लुकि श्तिपा शपेतिनिषेधानित्यत्वस्य सामान्यापेक्षज्ञापकेन पूर्वोक्तस्य ज्ञापकसिद्धन्न सर्वत्रेतिपरिभाषाया अप्रवृत्तिस्वीकारेणैकाज्ग्रहणघटितस्य तद्विषयकस्य यङन्तद्विर्वचनविधायकवचनस्याप्रवृत्तिरितिप्राचीनरीत्या निर्वाहः कार्यः । यङ्लुकश्छान्दसत्वे तु न कापि क्षतिः । एतेन । इतिमत इत्युपादानेन । वहिरङ्गत्वेनेति । अपरनिमित्तकस्य तपरसूत्रस्यान्तरङ्गत्वेन तद्दृष्ट्या गुणस्य वहिरङ्गत्वादिति भावः । ननु तपरत्वेन चर्चूर्यत इत्यत्र गुणाभाववत्पोपूर्यत इत्यत्र गुणो यङ्लुकोरिति गुणोऽप्यभ्यासस्य न स्यादत आह । उदोष्ठ्य इति । भाष्येति । तथा च भाष्यप्रामाण्यान्न तत्र तपरत्वेन व्यावृत्तिरिति भावः । अकित इत्यस्य न किदकित्तस्येत्यर्थे ह्यकः कित्वाद्दीर्घनिषेधः स्यात्तथा तु न बहुव्रीहिसमासाश्रयणादित्याह । नविद्यत इत्यादिना । तत्सामर्थ्यात् । तादृशसमासाश्रयणसामर्थ्यात् । तद्ग्रहणस्य । ऋत्वच्छब्देन तद्ग्रहणस्य । इदम्माधवेति । यङो वेतिसूत्रविहितस्येडागमस्याभावेऽवर्वत् इत्याकारकस्य रूपस्याभिधानं माधवानुरोधेनेत्यर्थः । यङो लुका लुप्तत्वादिति । अत्र लुकेत्युपादानादन्तरङ्गानपीतिन्यायप्रवृत्तिः सूचिता । लुगुत्तरमपि नेत्याह । लुप्तत्वादिति । ननूरदत्वस्याप्यभ्यासनिमित्तप्रत्ययनिमित्तकतया तस्येह लुकाऽपहारान्न लुमतेतिनिषेधादप्रवृत्तरापत्तिरत आह । उरदत्वमिति । निरूपितमिति । उरदत्वन्न साक्षात्प्रत्ययनिमित्तकङ्किन्त्वङ्गावयवाभ्यासस्य य ऋवर्णस्तस्यात्त्वमित्येवाङ्गत्वस्परन्नित्त्वनिमत्तप्रत्ययनिमित्तकन्तच्च भवत्येवाङ्गसंज्ञायान्न लुमतेतिनिषेधाप्रवृत्तेः । उरदत्वस्याङ्गसंज्ञाद्वारा परनिमित्तकत्वमाश्रित्य स्थानिवद्भावोऽचः परस्मिन्नित्यनेन प्रवर्त्तते वव्रश्चेति भाष्योदाहरणादिति भावः । चाकर्त्तीति । अत्राभ्यासविकारे वाध्यवाधकभावाभावेन पूर्वं ह-

स्वत्वस्य तत उरदत्वस्य प्रवृत्तिस्ततो हलादिः शेषदीर्घयोरिति क्रम इत्याशयेन शङ्कते । न च चाकर्तीत्यत्रेति । तपरत्ववैयर्थ्येनेति । अभ्यासह्रस्वत्वेन सर्वस्य ऋत्त्वत्वादिति भावः। नित्यत्वेन । रीगागमापेक्षया नित्यत्वेन । तदभावात् । ऋत्त्वत्वाभावात् । इत्युपक्रम्येति । रीग्विधायकसूत्रभाष्ये तपरकरणे किम्प्रयोजनम् चाकर्ति चाकीर्त इत्युपक्रम्येत्यर्थः । पचतीत्यत्र यो नयेदिति । इडन्तं एवंविधशब्दं यः परिनिष्ठितत्वेनोपपादयेदित्यर्थः । अन्यत्र । लङ्व्यतिरिक्ते । आरतीति । ऋधातोर्यङ्लुगन्ताल्लटि ऋरदादेशे रुगागमस्योत्तरखण्डादेशस्य यणि रो रीति लोपे ढ्रलोपे इति दीर्घः । यणः स्थानिवत्त्वमिति । अचः परस्मिन्नित्यनेन स्थानिवत्त्वमित्यर्थः । तदनवयवधात्ववयवादेशस्येति । अभ्यासानवयवधात्ववयवादेशस्येत्यर्थः ।अत्र तदनवयवधात्ववयवेति समुदाय उत्तरखण्डपरः । धातुत्वस्योत्तरखण्डे विश्रान्तेः सिद्धान्तिततया धात्ववयवस्याभ्यासानवयवत्वविशेषणस्याव्यावर्त्तकतया यथाश्रुतशब्देनैव निवेशस्यापुष्टार्थत्वापत्तिरन्यथा स्यात् । तथा सत्युत्तरखण्डादेशस्येत्येववक्तव्ये एव सुक्तिवैचित्र्याय । तत्प्रतिबन्धकम् । अभ्यासकार्यप्रतिबन्धकम् । अभ्यासस्यासवर्ण इत्यसवर्णग्रहणेनेत्यस्यासवर्णेति पदं गृह्यते परस्मिन्नित्यर्थेनाभ्यासस्यासवर्णं इति सम्पूर्णसूत्रेणेत्यर्थः । एतद्वीयायेत्यादावभ्यासस्येयङुवङौ स्यातामित्यर्थनारभ्यते । यद्युत्तरखण्डादेशस्य स्थानिवत्त्वं स्यात्तदा सवर्णपरत्वमेवायातीति सूत्रवैयर्थ्यं स्पष्टमेव । अत्र तत्प्रतिबन्धकमित्युपादानादरियियादित्यस्य सिद्धिः ॥ ऋधातोरेव यङ्लुगन्ताल्लिङि तिवादेशे यासुटि रिङादेशेऽपि तस्य स्थानिवद्भावेनाच्त्वादभ्यासावयवस्य रिगागमस्येयङादेशः ॥ न चास्मिन्कृतेऽपि वलि परतो लोपः स्यादिति वाच्यम् । रिङादेशस्य बहिरङ्गत्वेनासिद्धत्वात्स्थानिवद्भावाच्च ॥ अत्रेदमवधेयम् ।यदि रिङादेशान्तरङ्गत्वात्पूर्वमेवेयङादेशस्तर्हि प्रतिबन्धकेतिविशेषणवैयर्थ्यम् ॥ किन्त्वतत्प्रतिबन्धकेत्यस्य निवेशोऽचकाणदित्य-

त्र काण्यादीनामर्वं तिङ्ह्रस्वत्वाभावपक्षे उत्तरखण्डावयवदीर्घस्य स्थानिवद्भावेन ह्रस्वत्वबुद्ध्या सन्वद्भावे सन्यत इतीत्वापत्तिः ॥ एतस्य स्थानिवद्भावस्याभ्यासकार्यप्रतिबन्धकत्वाभावादतो अभ्यासकार्येत्यत्राभ्यासपदमभ्यासत्वाश्रयमात्रपरं वाच्यम् ॥ एवञ्चाचकाणदित्यत्राभ्यासत्वाश्रयस्य सन्वद्भावे कर्त्तव्ये उत्तरखण्डावयवाजादेशस्य स्थानिवत्त्वनिषेधान्न सन्वत्त्वम् ॥ तत्प्रतिबन्धकेतिपरित्याजयमेव उत्तरखण्डपदमुत्तरखण्डावयवाचपरम् ॥ एवञ्चारिरियादित्यत्र रिङादेशापेक्षयान्तरङ्गत्वादियङित्येव स्वीकार्यमिति तत्वम् एवमेबारतीत्यत्रापि दीर्घे कर्त्तव्ये यणादेशस्य स्थानिवत्त्वनिषेधः ॥ अरियूतीतीति ॥ अत्र यणादेशस्य स्थानिवत्त्वादित्युपपादनन्तत्प्रतिबन्धकेत्युपादानेन । पूर्वोक्तरीत्या तस्य परित्यागे तु स्थानिवद्भावस्य निषेधः स्यादत आह । परत्वादिनेति ॥ अत्रादिपदोपादानेनान्तरङ्गत्वस्य परिग्रहः ॥ माधवस्येति ॥ एवञ्च माधवस्तु दीर्घमाहेतिमूलोक्तमसङ्गतमिति बोधितम् ॥ मूले भाष्ये ध्वनितमिति ॥ तत्र हि छ्वोरिति सूत्रे क्ङिद्ग्रहणमनुवर्त्तते उताहो नेति विचारे एतावानेव विशेषः अनुवर्त्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यमननुवर्त्तमाने तु छः शादेशे शान्तत्वादेव प्रष्टेत्यादिरूपसिद्धौ व्रश्चेतिसूत्रे छग्रहणन्न कार्यम् । अत्रै तावानेवेतिवदता ऊङ्भाविभ्यो यङ्लुग नास्तीति ध्वनितमन्यथादिवेर्यङ्लुगन्तस्य देदेति देदेषीत्यादावूठो भावाभावाभ्यां विशेषस्य स्पष्टतया एतावानेवेत्येवकारो विरुध्येतेति ॥ तद्विषयकमिति ॥ तत्रैव विचारकरणात् ॥ ज्वरत्वरेत्यूङ्भाविन इत्युक्तन्तत्र प्रमङ्गादाह । मव बन्धनेति ॥ ज्वरत्वरअत्र छ्वोरितिसूत्रादूडिति एकवचनान्तमनुवर्त्तते क्व चित्तु ज्वरत्वरेत्यूठावित्युच्यते तत्र मतभेदमाह ॥ अत्रोपधाया इत्यादिना। आदेशिभेदेन ॥ अन्त्योपधारूपादेशिभेदेन ॥ इक्परिभाषानिषेधे त्विति ॥ धात्वंशलोपनिमित्तार्द्धधातुके यत्र गुणवृद्धी प्राप्नुतस्तत्रेक्पदन्नोपतिष्ठत इत्यर्थकल्पनेनेक्परिभाषावोध्यनिषेधे सति परिभाषानिषेधः

स्पष्ट एव। असम्बद्धं स्यादिति॥ तथा व्याख्याने भवितेत्यादाविटो गुणः स्यादेवेति तदसम्बद्धमित्यर्थः॥ एवम्॥ गुणवृद्धिनिषेधविधायकत्वे॥ भाष्योक्तरीत्येति॥ तत्र यथा नन्दनदधि कारकदधि इत्यत्र समासाद्यार्विभक्तिस्तस्या लुकि अङ्गत्वाभावात्कथं युवोरनाकावित्यस्य प्रवृत्तिरितिशङ्कायान्न चेह परन्निमित्तमाश्रीयते अस्मिन्परतो युवोरनाकौ भवत इति किन्तर्हिं अङ्गस्य युवोरनाकौ भवतः॥ अङ्गसंज्ञा भवति प्रत्ययलक्षणेनेत्युक्तम्॥ तृज्वद्भावस्येति॥ तत्र यथा पञ्चक्रोष्टृ कुलमित्यत्र तृज्वद्भावो न प्राप्नोतीतिशङ्कायाम्भाष्ये न चापरन्निमित्तमाश्रीयते किन्तर्ह्यङ्गस्य क्रोष्टुस्तृज्वदिति॥ अङ्गसंज्ञा भवति प्रत्ययलक्षणेनेति प्रतिपादितम्॥ अस्यापि॥ अभ्यासलोपस्यापि॥ तदभावे॥ धात्वितिपदाभावे॥ तोतोर्त्तीति॥ तुर्वीधातोरिदं रूपम्॥ भाष्यात्तत्वेषामिति॥ तत्र हि क्ङिति चेतिसूत्रे तन्निमित्तग्रहणं कर्त्तव्यङ्किम्प्रयोजनमुपधारोरवीत्यर्थमित्युक्तम्॥ तत्र रोरवीत्यर्थेन नार्थः॥ छान्दसमेतत्॥ दृष्टानुविधिश्छन्दसि भवतीत्यभिधायाथ वा पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणन्तदनवकाशन्तस्यानवकाशत्वाद्गुणो भविष्यतीत्युक्तम्॥ आर्द्धधातुकग्रहणस्यापि न धातुलोपइतिसूत्रेरोरवीतीत्यस्य सिद्धिः प्रयोजनमुक्तम्॥ यदि तेन न्निषेधाभावेऽप्यनेन निषेधः स्यात्तर्हिं तत्रार्द्धधातुकग्रहणस्य वैयर्थ्यापत्तिरिति भावः॥ अभाव एवेति॥ यदि तोतोर्त्तीत्यादीनामभिधानं स्यात्तदा पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणन्तदनवकाशमित्यनवकाशत्वोक्तिर्व्यर्था स्यादिति॥ भाविज्ञानस्येति॥ भावियत्परत्वेन ज्ञानम्प्रत्ययस्य तद्यत्रास्ति तत्रैव विषयत्वव्यवहार इति भावः॥

## ॥ इति यङ्लुगन्तविवरणम्॥

सुप आत्मानः क्यच्॥ अत्र सुप्पद सुबन्तपरन्तस्यार्थद्वारकमात्मन इ-

ति विशेषणम् ॥ इच्छायामित्यनुवर्त्तते ॥ आत्मपदञ्च कर्तृपरम् ॥ कर्त्रा च प्रत्यासत्त्या इषेर्ग्राह्यः ॥ तत्र सुबन्तविशेषणमात्मन इति किमर्थमिति पृच्छति ॥ आत्मन इति किमिति ॥ इति चेति ॥ चेन पूर्वस्य पदसंज्ञा च प्रयोगजनमिति बोधितम् ॥ तदेव स्पष्टप्रतिपत्तये आह ॥ काम्यचीत्यादि। चेन क्यचि परतोऽपि ॥ तेन राजीयतीत्यादेः सिद्धिः ॥ न च क्यचः प्रथमोपस्थितत्वात्तस्यैवेतरपरित्यज्य काम्यजुपादाने बीजाभाव इति वाच्यम् ॥ नः क्ये इतिसूत्रस्य तदा विधायकत्वात्क्यचि पदत्वस्य सिद्धेः यद्यपि भाष्ये गोसमानाक्षरनान्तादि पठ्यते तथापि क्यजन्यप्रकृतिकादपि भवतीत्यत्र हेतुमाह ॥ गोसमानाक्षरेति ॥ अत एव ॥ तस्यैकदेश्युक्तित्वादेव ॥ वाक्शब्दस्य वच्धातोः क्विपि निष्पन्नतया क्वचित्सम्प्रसारणप्राप्तेराह ॥ अत्रेति ॥ क्यज्विधायकसूत्रे मान्ताव्ययानाम्प्रतिषेध इत्येव वार्त्तिकन्तच्च यथाश्रुतमसङ्गतम्पुत्रमिच्छतीत्यत्रापि प्रतिषेधापत्तेः ॥ सूत्रन्तु द्विवचनबहुवचनान्तात्प्रत्ययविधायकत्वेन चरितार्थमतः शेषपूरणेन सूले व्याख्यातम्मान्तप्रकृतिकेति ॥ अशनायोदन्यधनायाः ॥ एते समुदायाः बुभुक्षादिष्वर्थेषु निपात्यन्ते ॥प्रकृतयर्थोऽत्र न विवक्षितः ॥ उदन्या तु पिपासा तृडितिकोशात् ॥ अशनशब्दः कर्मल्युडन्तः॥ कालान्तरोपयोगार्थं योऽशनमिच्छति स्नानायोदकमिच्छति॥दारिद्र्यपीडितः सन् यो धनमिच्छति तत्र न प्रत्ययः ॥ किन्तु धनेसत्यपि धनेच्छारूपगार्ध्य एव॥अश्वक्षीरेत्यनेन प्रकृतिविशेषोपादानेऽपि वृषस्यन्ती तु कामुकीतिकोशात्प्रकृत्यर्थोऽत्रापि न विवक्षितः॥तथा च मानुष्यामपि वृषस्यन्तीति प्रयोगः ॥ लालसा ॥ उत्कटेच्छा ॥ चिन्त्यप्रयोजनमिति ॥ केचित्तु धेटष्टित्ववद्यत्र काम्यजन्तात्सन्तत्र सति शिष्टमपि नित्स्वरञ्चित्स्वरो बाध्यतामितीत्यर्थं चित्त्वमित्याहुः ॥ कर्तुः क्यङ् सलोपश्च ॥ अत्र चकारोन्वाचये ॥ सेतिलुप्तषष्ठीकम्पृथक्पदम् ॥ तच्च कर्तुरित्यस्य विशेषणम् ॥ सलोपो नेति ॥ कर्तृवाचकस्य सान्तत्वविरहात् ॥ तेन ॥ करङा

सन्नियोगशिष्टत्वाङ्गीकारेण । नाना भातेति । तत्र हि सलोपसन्नियोगेनायं क्यङ् विधीयते तेन यत्र सलोपस्तत्रैव क्यङित्येकवाक्यतयेदं विधायकमित्येकम् । अन्वाचयशिष्टः सलोप इति निष्कृष्टन्द्वितीयम् । सलोपो वा॥ ओजसोप्सरसो नित्यम्। अपर आह सलोपोप्सरस एवेति नाना मतमित्यर्थः ॥ एतत्तत्वमिति ॥ शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनन्ताद्भाषितपुंस्कात्कयङि कयङ्मानिनोश्चेतिपुंवत्वे सपत्नायत इति रूपम् । विवाह निबन्धनसंस्कारविशिष्टे रूढो यः सपत्नी शब्दस्तस्मात्क्यङि भाषितपुंस्कत्वाभावान्न पुंवत्वमित्यादि तत्त्वमित्यर्थः । जातेश्चेतिसूत्रे भाष्ये स्पष्टमिति । इदम्प्रागुपपादितम् ॥ आचारेऽवगल्भेत्यपि सुप् इति प्रक्रान्ते पठ्यतेऽतोऽस्यापि सुबन्तादुत्पत्तिरिति भ्रमवारणायाह ॥ एतानलुक्रम्येति ॥अस्य ॥ क्विपः ॥ भूतपूर्वादपीतीति॥क्विपि सति प्रत्ययान्तत्वादाम्भवति यदा त्वनेकाज्ग्रहणङ्क्रियते तदा तु तत्सन्नियोगेनाच्प्रत्ययस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञाकरणादित्संज्ञया तस्य निवृत्तौ गलभेति नानेकाजिति कथमेत्य आमित्याशङ्कावारणाय भूतपूर्वादपीत्युक्तम् । तत्र प्रमाणमाह । अत एवेति । तादृशार्थस्याभिप्रेतत्वादेव । अवजिगल्भिषत इति । अवेत्यस्य पृथक्करणाद्गल्भशब्दात्सनि गल्भ् इत्यस्य द्वित्वम् । सुबन्तपरतयेति । नमन्त्याख्यातार्थस्मति विशेषणतास्माम्रुवन्तीत्यर्थस्यान्यत्र प्रदर्शितत्वात् । तत्प्रकृतिके । सुबन्तप्रकृतिके अस्यार्थेष्टमित्यस्य । नमन्त्याख्यानार्थस्मति विशेषणीभवन्तीति नासानीत्यर्थस्य सत्वादेव लक्षणेहाश्रिता । पुपुत्रीयिषदस्यैव भाष्ये उदाहरणत्वेन प्रदर्शनात् । कर्मधारयसमासाश्रयणेन नासाभिन्नाद्वालेरित्यर्थे यत्राचारक्विबन्तात्सनि ततः कर्त्तरि क्विप् तत्रैवस्यादिति भाष्योदाहरण विरोधः स्पष्ट एव । तदुक्तोदाहरणे यथेष्टमितंशस्य प्रवृत्तिसम्भुपेतत्र नासधात्वितंशाभावान्न तस्य वचनस्य प्रवृत्तिरितरभिधाय यथेष्टमितंशोऽप्यवजिगल्भिषत इत्यत्र नास्तीत्याह । आचारक्विबन्तेभ्य इति ॥

सन एवानुत्पत्तेरिति । प्रकृते यथेष्टमित्यं शप्रवृत्तिप्रयोजकसन सनोऽनुत्पत्तेरित्यर्थः । तदेवोपपादयति । अकारस्येति । अवेत्यस्य पृथक्करणेन गल्भेत्यस्मात् क्विबन्तात्सन उत्पत्तिर्वाच्या द्वित्वार्थन्तच्च द्वित्वम्प्रकृते न सम्भवति । यत्र नामघटितधात्ववयवैकाच्त्रयसद्भावस्तत्र द्वित्वस्य प्रवृत्तेः स्वीकारादिति भावः । मूले इत्यादि सिद्धिरिति । आचारेऽर्थे इत्यादि सिद्धिरित्यर्थः ॥ वचनम् । आचारेऽवगल्भेतिवचनम् । एषां बोध्यत इति । पूर्ववार्त्तिकेनेति शेषः । प्रत्ययान्तत्वादेवेति । अत एव भाष्ये प्रत्ययान्तादित्यास्यथा स्यादित्येवोक्तन्न त्वनेकाजित्युक्तम् । एकाज्भ्यः। लिङ्गादिप्रातिपदिकेभ्यः । हृत्वनद्याप इतिसूत्रभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विबभावे तु कादिप्रातिपदिकेभ्य इत्यर्थो वा वाच्यः । फलभेदेऽपि वसेस्तव्यदित्यस्य प्रत्याख्यानन्दृष्टं यद्यपि तथाप्यत्र तथा नास्तीत्याह । यत्र भिन्नेति । इत्यपीति । तथा तु नोक्तमतः प्रत्ययशब्दापनयनन्नाभिप्रेतमिति भावः । एवं तदपनयनस्याभिप्रेतत्वे । नन्वल्लोपस्यापि प्राप्तिसत्वात्तस्यानुक्तिः कथमत आह । अतो लोपमिति । फलैक्यायेति । यद्यादन्तेभ्य आचारे क्विप्स्यात्तदा धातुग्रहणसत्त्वे लोपः स्यादनाप इत्युक्ते तु नेति फलभेदः स्पष्ट एव । कस्य स्त्री की । तस्मादाचारक्विबन्ताद्यङ्लुकि लङ्यचेकेदित्यस्य सम्भवाभिप्रायेणाह । इकाररूपेति । असम्भव इति । शपा व्यवधानादसम्भ इत्यर्थः । इको गुणेतीति । अस्य सूत्रस्यभाष्येत्यत्रान्वयः । वदव्रजेतीति । अस्य सूत्रमुपक्रम्येति शेषः । एवञ्चेको गुणेतिसूत्रस्यभाष्यप्रमाण्यादेङन्तेभ्य आचारक्विपोऽभावः ओतः श्यनि आदेच उपदेश इतिसूत्रस्यभाष्यप्रामाण्यादोकारान्तेभ्य इति परित्यज्य सामान्यत एजन्तेभ्य इत्युक्तम् । आद्ये वृद्धिग्रहणस्य प्रयोजननिरूपणावसरे इहार्थमेव सिजर्थं वृद्धिग्रहणं कर्त्तव्यम् सिचि वृद्धिरिक् एव यथा स्यादित्येन्नितरूपणावसरे कस्यानिकः प्राप्नोतीतिशङ्कायां सन्ध्यक्षरस्य प्राप्नोतीति परेण कथिते न वै सन्ध्यक्षरमन्त्यमस्ती-

त्युक्तम् । यद्येङन्तेभ्यः सेगोप्रभृतिभ्य आचारे क्विप्स्यात्तर्हि तद्भाष्यविरो-
धः स्पष्ट एव । द्वितीये ओतः श्यनीत्यत्र शितीति वक्तव्यम् । किम्प्रयो-
जनम् । उत्तरत्र शिद्ग्रहणाभावायेत्युक्तम् । अत्र ष्ठिवुक्लम्विति सूत्रे शिद्ग्र-
हणाकरणप्रयुक्तलाघवन्दर्शितन्न तु तथा सत्योकारान्तादाचारक्विपि लटि
शपि लोपप्राप्तिरुद्भाविता । तत्र कैयटोऽप्याह । न ह्योतः श्यनोऽन्य
ओतः शिदस्तीति । तेन गोप्रभृतिभ्य आचारेक्विबभावो ध्वनितः ॥
तृतीये प्रातिपदिकानाम्प्रतिषेधो वक्तव्यः । गोभ्याम् । नौभ्याम् । स
तर्हि प्रतिषेधो वक्तव्यो न वक्तव्यः ॥ धातोरिति वर्त्तते ॥ क्व प्रकृतम् ।
लिटि धातोरनभ्यासस्य । अथापि निवृत्तम् । एवमप्यदोषः । उपदेश
इत्युच्यते । उद्देशश्च प्रातिपदिकानान्नोपदेश इत्युक्तम् । यद्येजन्तेभ्य आ-
चारे क्विप्स्यात्तदा धातुग्रहणानुवृत्त्या समाधानासङ्गतिः स्फुटैव । भूद्रुश-
ब्दौ पृथवीवृक्षयोर्वाचकौ । वार्त्तिकोक्तमाधवरीत्येति । तत्र तेन यथा सर्वप्रा-
तिपदिकेभ्य इतिवार्त्तिकस्य दध्यस्यति मध्वस्यति दधिस्यति । मधुस्यतीत्ये-
वमर्थमितिशेषादिदन्दधि मधुशब्दविषयमेवेत्युक्तन्तथात्रापि कल्प्यत इति
भावः । भाष्ये स्पष्टमिति । तत्र हि कास्प्रत्ययादिति सूत्रविहितस्यामो
मकारस्येत्संज्ञा कुतो नेत्याशङ्कायामित्कार्याभावान्न भविष्यति । प्रत्य-
यान्ततदयमाम् विधीयते तत्रा नास्ति विशेषः प्रत्ययपरत्वेऽन्तरादचः पर
त्वे वेत्युक्तम्तेन हलन्तेभ्यः आचारे क्विबभावो ध्वनितः । सजातीयापे-
क्षत्वादिति । तस्मिन्सूत्रे ञ्ञावित्युपादानान्तथा कल्प्यते ॥ वृत्रघ्नीत्यसि-
द्धापत्तेरिति । अत्र वृत्रहन्शब्दस्य क्विबन्ततया तत्रानुनाशिकस्येति दी-
र्घः स्यात्तथा चास्मात्पुंयोगात् स्त्रियां वृत्तौ नान्तलक्षणे ङीपि कृतेऽल्लो-
पो न स्यादिति । तदुक्तमिति । कास्प्रत्ययादितिसूत्र इति शेषः । त-
त्र हि सूत्रवार्त्तिकयोः फलैक्यायैकाज्भ्यः क्विपोऽनभिधानमुक्तम् । तदा-
हेति । तदभिप्रायेणाहेत्यर्थः । अत एव । अन्वाचयशिष्टत्वाङ्गीकारादेव ।
चरितार्थमिति । समुच्चयविवक्षायान्तु यत्र हलो लोपसम्भवोलोन्त्यपरि-

आर्षेकवाक्यतया स्यात्तत्रैव प्रत्ययोऽपि स्यादिति भृशग्रहणवैयर्थ्यं स्युर्वार-मिति भावः । बह्वचः पादेति । उपसर्गसमानाकारमित्यादिरूपमित्यर्थः । अनुबन्धासङ्गस्तु तत्रातो गुण इति पररूपेण द्रष्टव्यः । अन्यथा । अत्र स मानाकारमिति पदाभावे । उपसर्गसंज्ञकस्य पूर्वपदमित्येवोक्तौ । यत्रोपस-र्ग एव पूर्वपदन्तत्राव्याप्तिं वारयति । उपसर्गस्यापीति । उपसर्गसमाना-कारेत्युपादानफलन्तु तुन्दपरिमृजादिप्रातिपदिकात्क्यङ्प्रत्ययचिकीर्षाया-न्न तुन्देत्यस्य पृथक्करणम् । पूर्वपदमित्युपादानेनान्दोलयित्वा प्रेङ्खोल-यित्वेत्यत्र आप्रशब्दयोर्धात्ववयवयोर्न पृथक्करणम् यत्र समानावयवत्व-म्पूर्वपदस्य तादृशस्यास्ति तत्रैव पृथक्कृतिर्भवति ।अशाम्रत्येति । अ-न्यथा तस्य सुपस्समुदायप्रकृतिकतया सनस् स् इत्यस्य यस्मात्प्रत्ययवि-हितस्तदादिसुबन्तत्वविरहादसम्भवः स्यादिति भावः । तेन । पृथक्करणे-न।अत एव।जातस्यप्यभावकल्पनादेव।सोपसर्गादित्यत्रोपसर्गपदमुपसर्गस-मानाकारपरम् । अत एव । एकादेशरूपेणेतिव्याख्यानादेव।स्वाशब्दादित्या दौ तूपसर्गसमानाकारस्य सुशब्दादेर्वर्णादेशेन विकारेऽपि पृथक्कृतिर्भ-वत्येवेति भावः । तस्यपृथक्करणेन धातुसंज्ञाप्रयोजके प्रत्यये कृते ततः क्त्वाप्रत्यये च कृते पुनर्यथा समासो भवति तथोपपादयति । अवगल्भेती-ति । धातुना । गल्भेतिशब्देन । सर्वत्र । यत्र पृथक्करणन्तत्रैव यत्र न धातुसंज्ञाप्रयोजकप्रत्ययचिकीर्षा तत्रापि । यथा अच्छगत्येत्यत्राच्छेत्यस्य गत्याशब्दैकदेशगसुपातुल्यकारकसेन सामर्थ्यमिति । मूले आटः प्रतिषेध इति । उपपदान्तादोमाङोश्चेतिप्राप्तस्य पररूपस्य प्रतिषेध इत्यर्थः । एतन्निषेधसामर्थ्यात्प्रकृतेऽर्थवद्ग्रहण इति परिभाषायाः प्रतिपदोक्तपरि भाषायाश्चाप्रवृत्तिरिति बोध्यम् । विशेषापेक्षज्ञापकाभावे तु प्रकृतवार्ति कोदाहरणविषयेऽप्याङः पृथक्कृतिः स्यादिति क्यच्प्रत्यय उस्रशब्दा-त्स्यात्तदन्तादुङि कृते आड़ागम आङः परो जायेत ततश्चोमाङोश्चेत्यस्य प्राप्तिरेव नास्तीतिवार्त्तिकस्योक्तिसम्भवो न स्यादिति भावः । अत एव।

अच्वेरित्यस्यानुवृत्तेः सत्त्वादेव अन्यथा । बाध्यसामान्यचिन्तानाश्रयणे । अत्रेदम्बोध्यम् । इदञ्च ज्ञापकम्भृशादिपठितसुदुस्पूर्वमनस्शब्दे स्वराति रिक्तविषये । तेन चैत्रः सुमनायत इत्यादौ सुविशिष्टस्य निपातस्ततः परस्यानिघातः । अत एवास्य सिध्यर्थम्भाष्यकृता भृशादिषूपसर्गः पराङ्गवत्स्वरविधाविति वचनस्पठितम् । भृशादिपाठे । भृशादिभ्यितराणीत्यनेन भृशादौ पाठे । नित्यात्मनेपदमेवेति । अत्रैव पाठेत्वनेन क्यषि वा क्यष इत्यनेन विकल्पः स्यात् । ककारस्यापीति । न चककारो नः क्ये करस्य विभाषेत्यत्र विशेषणार्थोऽस्तु । लोहितडाज्भ्य एव क्यष्विधानेन फलाभावात् । वा क्यष् इत्यत्रापि वा यष इत्येवास्तु । उक्तभाष्य इति॥लोहितडाज्भ्यः क्यष्वचनम्भृशादिष्वितराणीतिभाष्येत्यर्थः । कष्टाय क्रमणे । कष्टार्थप्रतिपादकप्रातिपदिकप्रकृतिकसुबन्तात्क्रमणेऽर्थे क्यङ् । स च सुप् कष्टायेत्युपादानाच्चतुर्थी । अत्र सूत्रे क्यङ्ग्रहणमनुवर्त्तते । मण्डूकप्लुत्या । न च लोहितादिडाजितिसूत्रे क्यष्ग्रहणमकृत्वा लोहिताडाज्भ्यो ङिच्चेति पठनीयम् । क्यङस्तत्राप्यनुवृत्तिः कार्या । प्रकृते मण्डूकप्लुतिर्न स्वीकार्या वा क्यष इतिसूत्रञ्च न कार्यम् । ङित्वादेवोभयपदसिद्धेरिति वाच्यम् । लोहिनीशब्दात्कर्तरि क्यङ्मानिनोश्चेति पुंवद्भावापत्तेः । कर्तृगामिक्रियाफलविवक्षायास्परस्मैपदाभावापत्तेश्चेति । अन्तरङ्गत्वात् । करोत्यर्थस्य शीघ्रोपस्थितत्वात् । वृत्तिसर्गतायनेषु ॥ तत्रसूत्रेसर्गेत्यनेनोत्साह एव प्रामाणिकैरुक्तः । न चैतत्सूत्रभाष्ये क्रमणेऽनार्जवे क्यङ् निपात्यत इत्युक्तत्वेन विरोध इति वाच्यम् । अनार्जवपदेनालुजुः सम्बन्ध उच्यते । भाष्यप्रामाण्याद्भावार्थकेऽप्युत्तरपदवृद्धिः।अनार्जवे गम्ये कष्टायेति निपात्यते । क्रमणङ्गमनम् । तच्चनार्जवविषयकं विवक्षितन्तेन तद्विषयकोत्साहो गम्यत इत्यभिप्रायेण । मूलकारस्याभिप्रायमाह । कष्टायत इत्युक्त्येति । अन्तरङ्गत्वादिति । करोत्यर्थस्य व्यापारस्य सर्वोपकारकत्वेनान्तरङ्गत्वम् ।

तत्त्वे । पापार्थत्त्वे । अस्य । पापार्था इति कथनस्य । अत एव । तदभिप्रायकत्वादेव । कण्वचिकीर्षायामित्यस्य कण्वचिकीर्षारूपेऽर्थ इत्यर्थः प्रतीयते स न युक्त इत्याह । कण्वचिकीर्षायामिति । कर्मणो रोमन्थ। अत्र यदुक्तं नायामिति व्याख्यातन्तल्लाभप्रकारमाह । वर्त्तीतीति॥अत एव तन्निरूपितकर्मत्वस्यापि सम्भवः। चरेत्यत्र सम्पदादित्वाद्भावे क्विप् । कैयटोक्तौ प्रमाणमाह । उक्तञ्चेति । उभयत्रान्वयाय मन्थश्चर्वणमिति व्याख्यातम् ।शब्दवैरकलह।करणशब्दस्य कारकविशेषबोधकतया करणे कारक इत्यर्थः प्रतीयते स तु न युक्तः । शब्दशब्दाद्यर्थस्याक्रियात्वात्तन्निरूपितकारकत्वासम्भवादत आह । व्याख्यानादिति । सुदिनदुर्दिनेत्यादिवार्त्तिकम् । अत्रत्य चकारेण भाष्योक्तानामटाऽट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टानाङ्ग्रहणम् । वेदनेत्यत्र विदधातोर्ज्ञानार्थकाण्णिचि युच् । प्रत्यासत्तिलभ्यार्थमाह । वेदनाकर्तृसम्बन्धीति । नमोवरिवश्चित्रङः क्यच् ।वरिवस्शब्दोऽव्युत्पन्नम्प्रातिपदिकं सेवार्थकम् । यद्यप्यत्र क्रियासामान्यार्थकङ्करणपदमनुवर्त्तते तथापि भाष्यीयव्याख्यानात्क्रियाविशेषः क्रमेण विवक्षित इत्याशयेनाह । पूजायामित्यादीति । तदुक्तम्भाष्ये । नमसः पूजायाम्॥वरिवसः परिचर्यायाम् । चित्रङ आश्चर्ये । मूले नमस्यति देवानिति । अत्र नमः शब्दस्य योगेऽपि वृत्तिघटकस्यानर्थकत्वान्न तद्योगे नमः स्वस्तीति चतुर्थी । स एवायमितिप्रत्यभिज्ञयाऽर्थवत्त्वमेवेति चेदुपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीयेति भाष्ये उक्तम् । चतुर्थी तु नमोऽस्तु देवेभ्य इत्यत्र चरितार्था । यत्र नारायणन्नमस्कृत्येति प्रयुज्यते तत्राप्युपपदेतिन्यायेन द्वितीयैव । नमः शब्दस्य निपातस्य द्योतकतया करोतेस्तत्र स्वनिऽष्टपकृष्टत्वप्रकारकज्ञानानुकूलव्यापारवाचितया देवानाङ्कर्मत्वात् । अवयवेऽचरितार्थतयेति । अस्य चित्रङ इत्युच्चारणस्य सत्त्वाद्यद्यप्युपदेशेऽयं ङित् । तथापि चित्रीयेतिसमुदायस्य तदन्तत्वाभावादात्मनेपदाप्राप्तेः सामर्थ्यादेवङ्कल्प्यत इति भावः । पुच्छभाण्डचीव

रा । यद्यपि करण इति प्रागुक्तन्तथापि तत्सुखादिभ्यः कर्तृवेदनायामित्यनेन व्यवहितमत आह । अत्र पुच्छादय इति । टिलोप इति । णाविष्ठवत्प्रातिपदिकस्येत्यत्र सामान्यतो णावित्येवोक्तमतोऽस्यापि ग्रहणमिति भावः । तस्य॥टिलोप । तस्य । शब्दान्तरेत्यस्य । कृताकृतप्रसङ्गमात्रेण नित्यत्वस्य लक्ष्यानुरोधादाश्रयणमिति भावः । कैयट इति । एतेन तस्य भाष्यानारूढत्वन्ध्वनितम् । भाष्यसम्मतरीत्या त्वाह । गमकत्वादिति । यद्यपि माणवकम्मुण्डङ्करोतीतिवाक्ये माणवकस्य कर्मसमानाधिकरणत्वमस्ति तथापि वृत्तौ मुण्डीतिणिजन्तस्यार्थो मौण्ड्यानुकूलव्यापार इति मौण्ड्यरूपफलाश्रयत्वान्मुण्डयति माणवकमित्यत्र माणवकपदोत्तरं द्वितीया मौण्ड्याश्रयस्य करणासम्भवादित्याशयेनाह । माणवकमित्यादि । आपुकः प्रातिपदिकावयवत्वाट्टिलोपशङ्कायामाह । विधानसामर्थ्यादिति । एषाम् । सत्यापेतिसूत्रविहितणयन्तानाम् । अत एव । लुङ्यनभिधानकल्पनादेव । आपुडितिभाष्यमिति । तत्र हि सत्यस्यापुगागमे टिलोपस्य प्राप्तिमाशङ्क्य एवन्तर्ह्यापुट् करिष्यते इत्युक्तम् । आपुटो णिज्भक्तत्वात्तस्मिन् टिलोपेऽपि सत्यापयतीति भविष्यतीत्यभिप्रायः । तदुत्तरमथ वा पुनरस्तु आपुगेव । ननु चोक्तम्टिलोपः प्राप्नोति । आपुग्वचनान्न भविष्यतीत्युक्तम्॥एवमुक्तमिति त्वन्यत । अत्र णिच आपुडागमपक्षे टिलोपे च सति ततो लुङि चङि द्विर्वचनेऽससत्यापदिति रूपमापुगागमपक्षे तु णौ चङीतिह्रस्वत्वेऽससत्यपदिति समादिति लुङ्यापुट्पक्षेऽनभिधानमावश्यकमन्यथाऽथ वा पुनरस्त्वितिकथनस्यास्य भङ्गः स्यात् । अयम् । घप्रत्ययः । हलन्तात्करोतीति णिचि तु तुत्वाचयतीत्येव । परत्वात् । पुंवद्भावात्परत्वात् । तदतिदेशसामर्थ्याच्चेति । पुंवद्भावातिदेशसामर्थ्याच्चेत्यर्थः । भवदुक्तरीत्या सर्वत्र टिलोपस्य प्राप्त्या तदतिदेशोऽन्यथा व्यर्थः स्यात् । अत एव । तस्याप्रवृत्तिस्वीकारादेव । अनित्यत्वे असोरल्लोप इति तपरत्वम्प्रमाणमि-

त्वन्यत्रोपपादितम् ॥ अत एव ॥ छन्दस्येतल्लोपसत्त्वादेव । सूत्रे ।
पर्यवबृढदिति। प्रभौपरिवृढ इति निपातनेन ढत्वस्य प्रवृत्तया तत्र यथा
वृढशब्दद्वित्वन्तथोढिशब्दस्य नेतिध्वनयितुमेतदुपादानम् । उपसर्गस-
मानाकारस्य परिशब्दस्यपृथक्कृतिरत्र द्रष्टव्या ॥ तद्भावः । ढिशब्दस्य
द्वित्ववादिनो भावः । ननु ढिशब्दद्वित्वेऽप्यभ्यासावयवस्य चुत्वे ढ-
त्वस्यासिद्धत्वादौजिढदिति स्यादत आह । द्वित्वे कृत इत्यादि ।
वैयाघ्रपद्यवार्त्तिके । शुष्किकाशुष्कजङ्घा च क्षामिमानौजढस्थेति-
वार्त्तिके। तत्रैवोक्तमिति । परे त्विस्यादिना ष्त्वादिघटितधा-
त्वत्तुल्यत्वं यत्र तत्रैव स्थानिवद्भाव इत्युक्तम् ननु यदि स्वशब्दस्या-
प्यचोञ्णितीतिवृद्धिस्तदास्य सूत्रस्यात उपधा इत्यनेन योगविभाग-
स्य सर्व्वार्थमित्येवप्रयोजनमुक्तन्तदसङ्गतमत आह । प्रापतीत्यादि ।
अन्तरङ्गत्वादिति । छ्वोरितिसूत्रे सतुक्कग्रहणाद्धि साऽनित्या ॥ इष्टतर-
मानाभावादिति ॥ पदस्य विभज्यान्वाख्याने हि सतुक्कनिर्द्देशस्य ज्ञा-
पकत्वं सम्भवति ॥ यदि साऽनित्या न स्यात्तदा तया परिभाषया शा-
देशस्याङ्गस्य पूर्वम्प्रवृत्तिः स्यादिति सतुक्कनिर्द्देशो व्यर्थः स्यादितिरीत्या।
यदि तु प्रकृते क्रमेणान्वाख्यानमेव कल्प्यते तदा वार्णशास्त्रस्याङ्गशा-
स्त्राप्राप्तिसमये प्राप्त्या तुकोऽश्रवणाय सतुक्कनिर्द्देशस्यावश्यकत्वेन
तस्यानित्यत्वे ज्ञापकत्वन्न सम्भवतीति भावः । व्याश्रयेऽपीति । समान-
निमित्तिकत्वं समानाश्रयत्वमिति भवत्सम्मतमिति भावः ॥ परत्वात्प्रा-
द्विधिति ॥ न च प्राघ्रादेशविषये टिलोपस्यावश्यप्राप्त्या चारितार्थ्याभा-
वात्कथमेतदिति वाच्यम् ॥ कृतेऽपि टिलोपेऽवशिष्टे आदेशस्य चारिता-
र्थ्यमित्यभिमानात् ॥ वस्तुतष्टिलोपाप्राप्तियोग्ये चारितार्थ्याभावेन प्रा-
घ्रादेशानामपवादत्वमेवेत्याह ॥ किञ्चेति ॥ अन्त्यस्यैव अपवादत्वेन स-
माधानमेव ॥ अत एव ॥ अपवादत्वादेव ॥ उच्चारणसामर्थ्यादिति ॥ अ-
त्राप्यपवादत्वादिति तु नोक्तम् ॥ आदेशात्पूर्वन्तस्याप्राप्तेः॥ननुवर्णभा-

असत्यादेशत्वे सर्वादेशत्वन्तस्य न स्यादत आह॥सर्वादेशत्वमिति॥ आतिदेशिकमिति ॥ त्वादयतीत्यादिमूलोक्तम्॥ ननु स्वादित्वविरहात् कथमत्वमत आह । इष्ठेति। अतिदेशेनेत्यनेन यचि भमित्यस्याप्राप्तिमङ्गीकृत्यैव समाहितम्। न ह्यतिदेशेन णिचः स्वादित्वातिदेशो लभ्यते। इष्ठवदित्यत्र सप्तम्यन्ताद्वतेः स्वीकारात्। अत एव श्वयुवेतिसूत्रघटकस्यातद्धित इत्येतद्बोध्यनिषेधस्याप्रवृत्तिः। ननु श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमितिवार्त्तिककारोक्तेः कथमत्र सम्प्रसारणमत आह। नान्तेति। कथं सम्प्रसारणमिति। नान्तत्वविरहात्कथं सम्प्रसारणमित्यर्थः। वार्त्तिकैकवाक्यतयेति। अस्यास्यापीत्यत्रान्वयः। तत्साहचर्येण। अल्लोपोऽन इत्येतत्साहचर्येण। सूत्रान्तरसाहचर्यन्न व्यवस्थापकमत आह। अर्थाधिकारेति। टिलोपमभ्युपगम्य सम्प्रसारणाभावमुपपाद्य टिलोप एव तावद् दुर्लभ इत्याह। किञ्च षपूर्वेतीति। प्रकृतिभावस्य नस्तद्धित इतिसूत्रबाधकत्वाङ्गीकारेऽपि भाष्यविरोधः प्राप्नोति। यस्येतिसूत्रानन्तरपठितेष्वेव यस्येत्यादौ प्रकृतिभाव इत्यनेन प्रकृतिभावस्य लाभ इति तद्विरोधशङ्कावारणाय तदभिप्रायमाह। यत्त्विति। न च पूर्वोक्तरीत्या तद्धितत्वाभावात्कथन्नस्तद्धित इतिप्राप्तस्यापि प्रकृतिभाव इत्येतदिति वाच्यम्। तद्धितत्वाभावेपि ब्रह्मिष्ठ इत्यत्र तस्य दर्शनेन तदतिदेशस्य सम्भवात्। न च मूलोक्तरीत्या तद्दर्शनमेव दुर्लभमिति वाच्यम्। वक्ष्यमाणरीत्या तद्दर्शनसम्भवात्। तन्न्यायेति। वार्णादाङ्गमितिन्यायेत्यर्थः। टेरित्यस्याप्राप्ताविति। विन्मतोर्लुकस्तदपवादत्वस्य कथनात्। ब्रह्मिष्ठ इतिरूपङ्क्मिन्मतुबन्तस्य उत ब्रह्मन्शब्दस्यैवेति वितर्क्य पक्षद्वयेऽपि दूषणमाह। किञ्चेति। तेन.लुका.न चोत्सर्गस्य टेरित्यस्य प्रवृत्त्युत्तरं यदि विन्मतोरित्यस्य प्राप्तिस्तदास्यापवादत्वं येन नाप्राप्तिन्यायेन स्यात्तदा प्रवृत्तिमात्रबाधः स्यात्सैव तु कथम्। पूर्वस्मिन्ब्रह्मवच्छब्दादिष्ठनि मतुबवयवस्यातो निवृत्तौ ह्यर्द्धाधिकविकारसत्त्वेनैकदेशविकृतन्यायाप्रवृत्तरा मतुत्वबुद्धरसम्भवादिति

धव इत्यर्थः। एवञ्च गोमानासीत्। गोमान् भवितेत्यादावनुपपत्तिः। तदस्यास्त्यस्मिन्नित्यनेन वर्त्तमानसत्ताकर्तृगोसम्बन्धिपुरुषकर्तृकातीतसत्तानेन प्रतिपादयितुमशक्या। गोकर्तृकसत्ताप्रतिपादकधातुप्रयोगाभावेन तेन सम्बन्धस्य प्रतिपादनासम्भवात्। यदि तथा स्यात्तदा गौरस्तीत्यत्रास्तेरनेन सूत्रेणातीतकाले प्रत्ययं विधाय तेन धातुना सम्बन्धः स्यात्। किन्तु विद्यमान एव चैत्रे तद्गवीनासतीतानागतत्वप्रतिपादनायायम्प्रयोगो गोसम्बन्धिनो दरिद्रत्वभवनमेतद्व्यङ्ग्यम्। एवञ्च गोकर्तृकभूतसत्तायाः सम्बन्धवती या गौस्तद्वत्पुरुषकर्तृकभूतभविष्यत्सत्त्यर्थस्य भाष्यसम्मतस्य प्रतीत्यनुपपत्तिः। न च तदस्यास्तीति सूत्रे कालाविवक्षयाऽयम्प्रयोग इति वाच्यम्॥ धनसत्त्वस्यातीतत्वे धनिनङ्गच्छेत्युक्ते शब्दप्रयोगाधिकरणकालजातदरिद्रत्ववत्पुरुषस्यापि प्रतीत्यापत्तेरत आह। धातुशब्देनेति। तदर्थः। धात्वर्थः॥ लभ्यत इति। एवञ्च गोकर्तृकसत्ताप्रतिपादकधातुप्रयोगाभावेऽपि तदर्थस्य गम्यमानतया तस्मिन्सत्तारूपेऽर्थेऽतीतत्वसम्बन्धेनान्वये न तदर्थावगतिरस्त्येव गोमत्त्वस्यातीतत्वात्तद्विशिष्टपुरुषकर्तृकसत्ताया अप्यतीतत्वेन गोमानासीदिति प्रयोगः। शब्देनाप्रयुज्यमानेनसम्बन्धाभावेऽप्यर्थेन बुद्धिस्थेन सम्बन्धो वक्तुं शक्यत एव। एवङ्गोमानभवितेत्यत्र गोकर्तृकसत्तायां भविष्यत्वकल्पनया प्रयोगस्योपपादनङ्कार्यम्॥ मतुपप्रत्ययो यद्यप्यसन्निहितस्तथापि प्रकृतसूत्रे प्रत्यया इत्युपादानसामर्थ्यात्तस्योक्तरीत्योत्पत्तिस्सत्तव्या यदि प्रत्ययपदम्प्रकृतप्रकरणस्यलकारपरमेवस्यात्तदा प्रत्ययाधिकारेणैव सिद्धेऽस्य वैयर्थ्यं स्यात्। न चाधिकृतम्प्रत्ययसंज्ञा परमिति कथमधिकारेण संज्ञिलाभ इति वाच्यम्। सञ्ज्ञ्यन्तरस्येहा निर्देशेन संसंज्ञिपरत्वसम्भवात्। कृतञ्चैतत्प्रत्ययपदमसन्निहितप्रत्ययस्यापि कालान्तरे साधुत्वार्थमिति विज्ञायते॥ न च स्पष्टप्रतिपत्तये क्रियासम्बन्ध इत्येवोच्यतामिति वाच्यम्। मात्रा गौरवात्। न च सम्बन्धे प्रत्यया इ-

त्यं वास्तु धातोरित्यस्याधिकृतस्य षष्ठ्या विपरिणामेन सम्बन्धविशेषणत्वञ्चभविष्यतीति वाच्यम् । सम्बन्धेऽर्थे प्रत्ययविधायकत्वापत्तेः ॥ प्रत्यया इति बहुवचनं विषयबहुत्वाभिप्रायेण ॥ ननु तत्तत्प्रत्ययविधायकसूत्रेणैव प्रत्ययस्य सिद्धौ किमनेन सूत्रेण । अप्राप्तस्य प्रत्ययस्यानेन विधानमिति तु न युक्तम् । यस्मिन्नुपाधौ याभ्यश्च प्रकृतिभ्यो येषाम्प्रत्ययानां विधानमस्तितेषामुपपदान्तरेऽन्यप्रकृतिभ्यश्च विधानमित्यपि कल्पना स्यादत आह ॥ यत्र काल इतीति । एवञ्च प्रत्ययानां यथायोगं विहितानाङ्कालान्यन्वस्यैव प्रतिपादनायैतत्सूत्रमिति भावः । तदेवाह । वर्त्तमानसामीप्य इत्यादिना ॥ एतेन । अर्थायत्तया लटोऽन्यकाले साधुत्वकल्पनेन। प्रयोगे श्रूयमाणानामिति कथनेनास्मिन्प्रकरणे एतत्सूत्रप्राक्तनसूत्रविहितानाम्प्रयोगे श्रूयमाणानां शत्रादीनामन्यकाले उत्पत्तिकल्पना न तु तिङामपीति सूचितम्। एतेन श्रूयमाणपदघटित वाक्यघटकधात्वर्थयोः साक्षात्सम्बन्धे पपा च भवतीत्यादौ चरितार्थमिदं सूत्रमिति गम्यमानधात्वर्थसम्बन्धे गोमानासीद्गोमान्भवितेत्यादौ न स्यादित्ययास्तम् । तिङाम्प्राक्तन सूत्रविहितत्वाभावत् । अत्र सम्बन्धो धात्वर्थयोः समानकारककत्वस्वकारकसम्बन्धिकारककत्वान्यतररूपो बोध्यः। एवं सति यत्राभिनवजातश्मश्रुत्ववत्पुरुषसम्बन्धिग्रामाभिप्रायेण ग्रामो गम्यमान आसीदित्यादिप्रयोगस्तत्राप्युपपत्तिः । सूत्रारम्भकृत्सूत्रकारस्याशयमुपवर्ण्य प्रकृतसूत्रानारंभाभिप्रायकम्भाष्यकारीयकल्पनमाह । भाष्यकृतस्त्विति । पर्यायतयेति । न च भातीत्यत्र भूधातुस्सत्तार्थकस्ततोऽतीते प्रत्ययकल्पनेऽस्तु पर्यायत्वञ्जनिष्यमाणेत्यत्र तु कथम्पर्यायत्वञ्जनधातोरुत्पत्त्यनुकूलव्यापारवाचकत्वमस्धातोस्सत्तार्थकत्वमित्यर्थभेदादिति वाच्यम् । धातूनामनेकार्थत्वे नास्तेरप्युत्पत्त्यनुकूलव्यापारार्थकत्वसम्भवात् । वर्त्तमानत्वं बुद्धिस्थीकृत्य वर्त्तमानत्वमारोप्य । प्रत्ययः । शता ॥ तत्फलम् । आरोपेणैतादृशप्रयोगकरणफलमित्यर्थः । प्रत्ययः ।

प्रतीतिः। प्रकृतसूत्रस्य सरूपाणामिति सूत्रस्यभाष्यप्रयोगोऽप्युदाहरण-मित्याह। ननु चोत्पतवैवेत्यादिना। तत्र हि पृथक् सर्वेषां विभक्ति-पराणामेकशेष इति पक्षे एकशेषेण प्रातिपदिकानान्निवृत्तावपि विभ-क्तिश्रवणापत्तिरूपो दोष उक्तस्तस्य द्वन्द्वे कृते एकशेष इति पक्ष मा-श्रित्योद्धारबोधकमिदं वाक्यन्ननु चोत्पततैव वचनदोषश्चोदितास्मेति॥ अस्यार्थः। उत्पतता विभक्तिपराणामेकशेषपक्षे दोषमुपक्रमता पृथग्वि-भक्त्युपलब्धिस्तदाश्रयत्वादित्यनेन दोषश्चोदिता स्म इति। अत्रोत्पत्य-ततेति शत्रन्तम् तस्य वर्त्तमानार्थकलट्स्थानिकत्वे दोषश्चोदिता इति भूतार्थकनिष्ठाचात्वयानुपपत्तिरिति प्रकृतसूत्रेण वर्त्तमानार्थकोऽपि भूते उपपाद्यः॥ प्रत्याख्यानपक्षे तु वसन्ददर्शेत्यत्रेवोत्पूर्वकपतधातोर्भूते वर्त्तमानत्वारोपेण शतोपपाद्यः। न चोपक्रमतेत्यनुपपन्नम्प्रोपाभ्यां समर्थाभ्यामित्यनेन धातोः प्रारम्भार्थकत्वे आत्मनेपदविधानादिति वा-च्यन्। उपक्रमतेत्यस्य दोषकथनाग्रहवतेत्यर्थात्प्रारम्भाविवक्षणात्। अ-त्राप्युत्पतनक्रियायाश्चुद्धात्वर्थक्रियायाश्च समानकालत्वप्रतीतिरेवं स-ति भवति॥ क्रियासमभिहारे लोट्॥ कालविशेषानुपादानेन विधा-नादयं सर्वकाले भवति एवञ्च लङादिभिरव्याप्तावकाशाभावेनायं सर्वेषा-म्बाधक इत्याशयेनाह। सर्वलापवाद इति॥ लोट एव स्थाने हिस्वा-देशविधानस्य फलमाह। यदीति। एतयोर्हिस्वयोर्यथा परस्मैपदात्मने-पदसंज्ञा भवति तथाऽह। लोडित्यनुवर्त्तते ति॥ द्वितीयवाक्ये लोडित्यनु-वर्त्य लोटो लोड्वद्धिस्वौ भवत इति वाक्यनिष्पत्तिस्तत्र यदि लोड्धर्मस्य कृत्स्वप्रत्ययत्वमात्रस्यातिदेशार्थं लोड्वेदित्यतिदेशस्तर्ह्यतिदेशविधानवैय-र्थ्यं स्थानिवद्भावेन सिद्धेरतो लोट्छब्दः स्वादेशलाक्षणिक इत्याशये-नाह। लोडादेशेति॥ एवमपि नैकादेशसादृश्यबोधनङ्किन्तु विनिगम-नाविरहात्सर्वेषामादेशानान्तौल्यन्तेन परस्मैपदात्मनेपदसंज्ञयोर्लाभः। एवञ्च सामान्यातिदेशे विशेषानतिदेश इत्येषा परिभाषाऽतिदेशविधा-

मसामर्थ्याद्बाध्यत इति भावः ॥ हिस्वयोरतिदिष्टे परस्मैपदात्मनेपदसंज्ञे यथा सङ्ख्येन भवतस्तदाह मूले क्रमेणेति । हिस्वविधानसामर्थ्यादिति । यद्यनयोः पुरुषैकवचनसंज्ञयोरप्यतिदेशः स्यात्तदा युष्मद्युपपद इत्यस्यैकस्यैकवचनमिति च शास्त्रसंवादिनी प्रवृत्तिरनयोः स्यादेवञ्च सामान्यशास्त्रेण वचनद्वयैकवाक्यतया विधायकेन सिद्धावेतयोर्विधानं व्यर्थं स्यादिति भावः ॥ व्याख्यानादिति । ध्वंशब्दसाहचर्यमूलकव्याख्यानादित्यर्थः ॥ मूले हिः कर्त्तरीत्युक्तन्नोपपद्यते अनुप्रयुज्यमानासमभिव्याहारेणैव कर्त्राद्यर्थस्याभिव्यक्तेरेतयोः कर्त्राद्यर्थकत्वानङ्गीकारादत आह ॥ कर्त्रादयश्चेति ॥ ननु स्वातन्त्र्येण क्रियासमभिहारे हिस्वौ विधेयौ न तु लोट् लोड्वदिति च वाच्यमत एव सर्वसामञ्जस्ये लोडिति प्रथमान्तन्न वक्तव्यमिति चेन्न । लोडित्यस्यातिदेशवाक्यघटकस्य लोडादेशबोधकतापत्तेः ॥ लोटः स्थानेऽनयोर्विधाने हि पूर्वोक्तरीत्या लक्षणा भवति ॥ क्रियासमभिहारे विहितोऽयं लोट् तस्याभिव्यक्तये द्विर्वचनमपेक्षते व्यतिलुनीत इत्यादावात्मनेपदेन कर्मव्यतिहारस्य द्योतनेऽपि व्यतिशब्दवत् । अत एवात्र क्रियासमभिहारे द्विर्वचनं वक्ष्यते ॥ यङ्पुनरस्मिन्नर्थे शक्त इति तस्य न द्विर्वचनापेक्षा ॥ समुच्चयेऽन्यतरस्याम् ॥ अनेक क्रियाणां स्वस्वबोधकधातुघटितशब्दबोध्यानां विवक्षा समुच्चयः ॥ प्रकृते समुच्चयशब्दो बहुलग्रहणेन कर्मणि विधीयमानाजन्तोऽयञ्च क्रियापदार्थस्य विशेषणन्तदाह । समुच्चीयमानेति ॥ अत एव । कर्मार्थकाजन्तस्य क्रियापदार्थविशेषणत्वादेव ॥ भावाजन्तत्वे हि विनिगमनाविरहात्कारकसमुच्चयेऽपि स्यादिति भावः । एवञ्चैककारककानेकक्रियाविवक्षायामस्य प्रवृत्तिः ॥ व्याख्यानादिति ॥ पूर्वसूत्रवदस्मिन्नपि सूत्रे वाक्यत्रयकल्पनेन प्रथमवाक्यघटकलोट्कर्तृकभवनस्य पुरस्फूर्त्तिकत्वमूलकव्याख्यानादित्यर्थः ॥ यथा विध्यनुप्रयोगः पूर्वस्मिन् ॥ विधानं विधिः विधिमनतिक्रम्य यथाविधि । विधानस्य सावधिकत्वाद्यस्मादित्यस्या-

ध्याहारः विधानक्रियाकर्म चोपस्थितत्वाल्लोडेव तस्येत्यस्य चाध्याहार इति यस्माद्धातोर्लोड्विधानन्तस्यानुप्रयोगोऽनेन बोध्यते । यद्यपि प्रकृतस्य लोटः कर्त्राद्यर्थानभिधायकत्वेनैतद्वृत्तादपरिसमाप्तोऽर्थ इत्यनुप्रयोगः सङ्ख्याकर्त्राकाङ्क्षाशान्त्यर्थं प्रकृतसूत्राभावेऽपि सिद्ध एव । तथापि यथा विध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । पूर्वस्मिन्निति तु स्पष्टार्थम् ॥ समुच्चये विशेषस्य वक्ष्यमाणत्वात् ॥ कृञ्चानुप्रयुज्यत इति सूत्रविहितानुप्रयोगादस्य वैलक्षण्यमाह । अस्येति ॥ यथा विध्येवेति नियमाद्याहि याहीति यातीत्येव प्रयोगो न तु याहि याहीति गच्छति लुनीहि लुनीहीति छिनत्तीति भवति ॥ समुच्चये सामान्यवचनस्य । सामान्यमुच्यते येन स सामान्यवचनः । सामान्यं समानो धर्मः स च समुच्चितधात्वर्थवृत्तित्वे सति अनुप्रयुज्यमानधात्वर्थवृत्तिरेवञ्च यत्सिद्धन्तदाह । सामान्यवचनत्वञ्चेति ॥ अनुप्रविष्टेति । अनुप्रविष्टः समुच्चितधात्वर्थो यस्मिन्नर्थे तादृशोऽर्थो यस्य धातोस्तत्वमित्यर्थः ॥ भाष्ये स्पष्टमिति । लोड्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवत इत्यनेन स्पष्टम् ॥ अस्वास्थ्यक्रिया इत्यत्रास्वास्थ्यस्य क्रियेति भ्रमवारणायाह । अस्वास्थ्यमिति प्रथमान्तमिति । तेन प्रथमान्तेन क्रियाशब्दस्य प्रथमान्तस्य कर्मधारयसमासः ॥ नन्वभेदान्वयतात्पर्यग्राहकस्येतिशब्दस्य प्रयोगे मध्ये कृतेऽनुप्रयोग इत्यस्य वाच्यार्थविरोध इति चेन्न । अत्रानुशब्दस्यानुवादकपरत्वात् । ननु गान्दोग्धीत्यादौ यथाऽवधित्वफलाश्रयत्वयोर्युगपद्विवक्षायाम्परत्वात्कर्मसञ्ज्ञायाङ्गोशब्दादुत्पन्नद्वितीयया कर्मत्वभानेऽप्यवधित्वम्भासते तथेहापि समुच्चयक्रियासमभिहारयोर्विवक्षायाम्परत्वादनेन लोट्यप्युभयभानम्भविष्यत्यतीत्यत आह । उभयेति ॥ आकाङ्क्षामुत्थाप्येति । अनेन तस्या उत्थितत्वनिरासः । तस्य । पुर्व्यवस्कन्दनाद्यभिन्ना स्वास्थ्यस्य । न च मनोवृत्तिदुःखप्रयोजकव्यापारो ह्यत्रास्वास्थ्यपदेन प्रतीयते न तु मनो दुःखमेवेति अस्वास्थ्यपदेन मनो-

दुःखार्थकेनेत्यसङ्गतमिति वाच्यम् ॥ तादर्थ्यात्ताच्छब्द्यमिति न्यायेन प्रयोजकव्यापार एव मनोदुःखपदस्य प्रवृत्तेः ॥ तत्र । तस्मिन्पद्ये ॥ उपात्तेनेति शेषः ॥ उपादानात् ॥ प्रतिपादनात् ॥ तस्य । रावणस्य ॥ तत्त्वावगतिः । अतीतत्वस्यावगतिः ॥ तदनुपयोगः । अनुप्रयोगानुपयोगः। कालकारकतद्गतसंख्याविशेषावगत्यर्थं सामान्यवचनस्यानुप्रयोगः प्रार्थनीयः । तेषाञ्चावगतिः प्रकरणाद्वाक्यैकदेशन्यायेन भविष्यतीति भावः ॥ विधौ लोट् तदा वक्तव्यो यदि प्रेरणा प्रतीयेतेत्याशङ्कायामाह । स्वसेवकेति ॥ प्रेरणाविषयश्चासौ अवस्कन्दनादिश्चेत्यर्थः ॥ अत एव । गम्यमानस्थलेऽनुप्रयोगानावश्यकत्वादेव ॥ अत एव । प्रकरणसद्भावादेवानुप्रयोगे सिद्धे तदर्थं वचनस्यानावश्यकत्वादेव । प्रत्याख्यातमिति ॥ किमर्थमिदमुच्यते । अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् ॥ हिस्वान्तमनभिव्यक्तपदार्थकन्तेनानुप्रयोगो भविष्यति । यथा विधीति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । समुच्चये सामान्यवचनस्येति वक्ष्यति तत्रान्तरेण वचनं यथा विध्यनुप्रयोगो भविष्यति ॥ समुच्चय एव सामान्यवचनस्यानुप्रयोग इति नियमात् क्रियासमभिहारे यथा विध्यनुप्रयोगो भविष्यतीति भावः । एवम्प्रकारेण प्रथमं सूत्रन्द्वितीयमपि हिस्वान्तमनभिव्यक्तपदार्थकन्तेनापरिसमाप्तोऽर्थ इतिकृत्त्वाऽनुप्रयोगो भविष्यति । इदन्तर्हि प्रयोजनम् । सामान्यवचनस्येति वक्ष्यामि । एतदपि नास्ति प्रयोजनम् । सामान्यवचनस्याऽनुप्रयोगोऽस्तु विशेषवचनस्येति । सामान्यवचनस्यैवानुप्रयोगो भविष्यति लघुत्वादित्यनेन प्रत्याख्यातमित्यर्थः ॥ इदञ्च लाघवङ्क्वचिदेव पर्यायवचनस्थले आद्रियते न सर्वत्र पर्यायेषु लाघवगौरवयोरनादरात्प्रकृते त्वपर्यायत्वं स्पष्टमेवेति भावः। विस्तरस्त्विति ॥ यदि तु पुरीमवस्कन्देत्यत्रावश्यमनुप्रयोगोऽपेक्षित इति दुराग्रहस्तदा चक्र इत्यस्य तन्त्रेणोभयत्रान्वयोऽस्त्वित्यनेनेत्यर्थः ॥

मूले त्वम एवेति । पुरुषांशे वचनांशे चेति शेषः । पूर्वोक्तरीत्यैव निर्णयसम्भवादिति सकलेष्टसिद्धिः ॥

## ॥ इति लकार्थप्रक्रियाविवरणम् ॥

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्ययशःपार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायाञ्चन्द्रकलायां शब्देन्दुशेखरव्याख्यायान्तिङन्ताख्यम्प्रकरणं सम्पूर्णम् ॥ श्रीमत्सीतारामचन्द्रार्पणमस्तु ॥

॥ श्रीः ॥

# चन्द्रकलायाः

अर्थात्

# अगाधमेधश्रीभैरवमिश्रसंकलितायाः शब्देन्दुशेखर व्याख्यायाः

चतुर्थः खण्डः ।

ग्रन्थकर्तुः प्रपौत्रेण श्रीपण्डितगणेशदत्त-
शर्ममिश्रेण ग्रन्थकर्तृहस्तलिखितपु-
स्तकमवेक्ष्य संशोध्य संस्कृत्य र-
सिकजनसौलभ्याय द्विवेदपं-
डितरामनाथशर्मद्वारा



काशिककाशिकायन्त्रालये मुद्रयित्वा प्रकाशितः ।

सं० १९४४ भा० शु० १४

# ॥ अथ कृदन्तप्रकरणम् ॥

श्रीगणेशाय नमः ।

नत्वा श्रीजानकीजानिं सानुजं वरदम्प्रभुम् ॥
कृतां व्याख्यानमधुना क्रियते तत्प्रसादतः ॥ १ ॥

धातोः । अधिकारसूत्रमिदन्तस्य फलमाह । सोपसर्गाणामिति । एतत्सूत्राभावे वर्त्तमाने लडित्यादेर्वर्त्तमानाद्यर्थे प्रत्यासत्त्या तादृशार्थप्रतिपादकेभ्यो लडादयः स्युरित्यर्थे पर्यवसन्ने सति सोपसर्गाणामपि तादृशार्थप्रतिपादकतया तेषामप्यङ्गत्वापत्तावडाद्यव्यवस्थापत्तेरिति भावः । यद्यपि तृतीयाध्यायसमाप्तिपर्यन्तन्धातोरेकाचसूत्रस्थस्य धातोरित्यस्य सम्बन्धेन धातोरेव लडादयो भविष्यन्तीति न सोपसर्गाणामङ्गत्वस्य प्रसक्तिस्तथापि द्वितीयस्य धातोरित्यस्याधिकारसूत्रस्याभावे तिङ्शिदित्यस्यार्द्धधातुकमित्यस्य च धातोर्ये तिङः शितश्च ते सार्वधातुकाभिन्नास्तेभ्यो भिन्नाश्चार्द्धधातुकाभिन्ना इत्यर्थापत्तिः स्यात् । तथा सति क्विबन्तानां लूप्रभृतीनामपि धातुत्वाल्लूभ्याम्पूभ्यामित्यादौ भ्याम आर्द्धधातुकत्वस्य सत्त्वादिडागमः स्याद्द्वितीयस्य धातोरित्यस्य सत्त्वे तु उक्तसूत्रयोर्धातोर्धातोरित्येवमानुपूर्वीकशब्दोच्चारणेन विहितानान्ते संज्ञे भवत इत्यर्थनिष्पादान्न भ्याम आर्द्धधातुकत्वस्य प्रसक्तिः । नन्वातृतीयसमाप्तेर्यदयमधिकारस्तदा स्यादिप्रवृत्तियोग्ये विषये नित्यत्वात् स्यादिषु कृतेषु तदनन्तरं लस्य स्थाने तिबाद्यादेशस्य तेन व्यवधानादप्रवृत्तिर्न स्यात् । सूत्रस्य तिप् तसित्यस्य चारितार्थ्यन्तु टस्य विकरणस्य सार्वधातुकनिमित्तकत्वन्तस्य शबादेर्विषये स्यादत आह । स्यादिव्यवधान इति । तिप् तसिति सूत्रे धातोरित्येतत्सम्बन्धस्य प्रयोजनमाह । लुनातीत्यादाविति । व्याख्यात इति । पूर्वार्द्धे प्रसङ्गतो व्याख्यात इत्यर्थः । वासरूपोऽस्त्रियाम् । असरूप इति छेदः । असरूपत्वञ्च किमपेक्षयेत्याकाङ्क्षायां यस्य स्वविषये सर्वत्र प्रवृत्तिस्तदपेक्षयेति प्रत्यासत्त्या लप्स्यते । एतादृशस्यौत्सर्गस्यैवेति फलितमत उक्तम्मूलेऽसरूपोऽप-

वाद इति । न चापवादेनासरूप उत्सर्गो वा भवतीत्यं वार्थोऽस्त्विति वाच्यम् । तथा सत्यपवादस्यान्यत्र वात्रापि बाधकत्वन्नित्यमेव प्राप्तमिति प्रकृतसूत्रस्यापवादविषयेऽप्युत्सर्गो भवत्विति विध्यर्थः कल्प्यो विकल्पश्च कल्प्य इत्युभयविधायकत्वापत्तौ गौरवापत्तेः । अपवाद इतिकथनादेव विप्रतिषेधविषयतास्य सूत्रस्य प्रवृत्तिः । उभयोरपि सूत्रयोस्तत्र चारितार्थ्ये न कस्यापि सूत्रस्य स्वविषयताव्यापकान्यविषयताकत्वस्याभावात् । तदुक्तं भाष्ये । सापेक्षोऽयन्निर्देशः क्रियते वासरूप इति । न चोत्सर्गवेलायाङ्किञ्चिदपेक्ष्यमस्ति । अपवादवेलायाम्पुनरुत्सर्गोऽपेक्ष्यते । किञ्चिदित्यस्य स्वविषयता व्यापकविषयताकङ्किंचिदित्यर्थः । अपवादवेलायामिति । बाध्यत्वेन यावदुत्सर्गो नापेक्ष्यते तावदपवादस्य प्रवृत्तिर्नास्तीत्यर्थः । अयम्भावः । भिन्नरूपत्वं ह्यसरूपत्वन्तच्च किमपेक्ष्येत्याकाङ्क्षायां तद्विधानसमये यः सन्निधौ उपस्थितो भवति तदपेक्षयेति कल्प्यते एवञ्चोत्सर्गः सर्वत्रापवादविषयं लक्ष्यमाण एव बुद्धावुपारूढ इत्यतस्तदपेक्षयाऽसरूपत्वङ्गृह्यते । न च प्रकल्प्यचापवादविषयमितिन्यायेनोत्सर्गस्याप्यवादापेक्षाऽस्तीति वाच्यम् । तच्च तंस्कारवेलायान्तथाऽपेक्षायामपि वाक्यार्थप्रमितिवेलायान्तदभावात् । अस्याः परिभाषायाः सत्वादपवादशास्त्रस्य च वाक्यार्थबोधजननवेलायामप्येकवाक्यता भवतीति । अस्य सूत्रस्याधिकारत्वन्निरस्यति । अधिकारत्व इति । प्रत्ययत्वस्याविरोधात्यर्थाकल्पनलाघवानुरोधेनाह । यद्वेति । अत एव । उत्सर्गबाधकत्वेन निश्चितस्य भवनविकल्पस्यैवानेन बोधनादेव । यस्य शास्त्रेण विकल्पो बोध्यते तस्यैव पाक्षिकाभावप्रवृत्तिकत्वम्भवतीति यदि बाधकत्वविकल्पोऽनेन शास्त्रेण बोध्येत तदोत्सर्गापवादयोः पक्षे समावेशः स्यादेवेति भावः । ननु बाधक इत्यनेनार्थाद्बाधकशास्त्राभावे एव बोध्यत इत्यत आह । धर्मनिषेध इति । स्वरितत्वादिति । तेनाधिकः कार इत्यर्थाश्रयणात् स्त्रियामित्यधिकारीयप्रत्ययलाभो गोस्त्रियोरुपसर्जनस्येति सूत्रघटकस्योपदेशेनैवेति भावः । तेन । अस्त्रियामित्यत्र स्वरितत्वकल्पनेन । स्त्रियामित्यधिकारीयप्रत्ययविषये तु न विकल्पः । तेन चिकीर्षाजिहीर्षाजिगमिषेत्यादावप्रत्ययादित्यकारप्रत्यय एव । असारूप्यञ्चापेति । एतत्परिभाषैकवाक्यतापन्नस्य तत्तद्विधिशास्त्रस्य लक्ष्यसंस्कारकतया तस्यामवस्थायां यद्रूपमुपस्थितम्भव-

ति तस्यैव ग्रहणमुचितमिति भावः। न दोष इति। परिनिष्ठितरूपेऽप्यूयमाणं यद्रूपन्तत्कृता सारूप्यस्य ग्रहणे क्विपः श्रवणाभावेन तत्र वासरूपपरिभाषाया अव्याप्तिरूपो दोषः स्यादिति भावः। तदप्यनुबन्धभिन्नेति। असारूप्यमप्यनुबन्धभिन्नकृतमेव। उपदेशावस्थायामनुबन्धत्वात्तस्याप्यसारूप्यस्य सम्भवात्। एतेन विकल्पारम्भेण नानुबन्धकृतमसारूप्यमिति परिभाषा सिद्धा। न चानुबन्धानामनेकान्तत्वपक्षे एषा परिभाषा गतार्थेति वाच्यम्। एकान्तत्वपक्षस्यैव स्थिरत्वात्। किञ्च तस्मिन्पक्षे चुटू लशक्वतद्धिते इति सूत्रसम्बद्धस्यादिपदस्य पूर्वसमीपत्वाच्छिक्त्वमवश्यं वाच्यमिति चुञ्चुप्चणपोर्यादित्वकल्पनेन समाधानस्यासङ्गतियकारलोपेऽप्युकारादिसमुदायपूर्वसामीप्यस्याक्षतत्वात्। यकारप्रश्लेषसामर्थ्यकल्पनापेक्षयाऽनुबन्धानामेकान्तत्वपक्षस्यैव युक्तत्वादित्याशयः। कर्त्तरि कृत्। कार्याः शब्दा इति वादिनः शङ्कामपास्य नित्याः शब्दा इति सिद्धान्तानुरोधेनाच समाधातुं कार्यशब्दात्मतत्त्वदुपन्यस्यति न चेति। वाच्यमिति परेणान्वयः। प्रत्ययनियमोऽयमिति। धातोः परः कृत्प्रत्ययः कर्त्तरि-वत्तमानमिवेत्यनेन यो धातोः परः श्रूयते सकर्त्तारं ब्रुवन् सन् कृत्संज्ञः स्यादित्यर्थमेतत्सूत्रं स्यादिति तदाशयः। तत्र वृत्तिरिति। धातोः परत्र वृत्तिरित्यर्थः। यः स्वभावत इति। अर्थस्य लोकतः सिद्धेस्तद्विधानेन शास्त्रव्यापार इति भावः। अत एव अस्य सूत्रस्य संज्ञानियामकत्वादेव। यदि शास्त्रमपूर्वार्थविधायकं स्यात्तदा नित्यत्वस्य हानिः स्यात्। स्पष्टञ्चेदमिति। किमयम्प्रत्ययनियमश्चाहोस्वित्संज्ञानियम इत्यादिना स्पष्टमित्यर्थः। तयोरेव कृत्यक्तखलर्थाः। तथा भूतस्यैव। असत्त्वभूतस्यैव। एतेन संख्यानन्वययोग्यता दर्शिता। एकवचनम्। द्वित्वाद्यभावेनैकवचनम्। तिङन्तवाच्यभावनोऽस्य किञ्चिद्वैलक्षण्यमपीत्याह। स्वभावाच्चेति। शब्दशक्तिस्वभावादित्यर्थः। एतावतैवं सत्त्वप्रधानानि नामानीति निरुक्तस्यापि प्रकृते सङ्गतिः। एवकारः। प्रकृतसूत्रस्यैवकारः। नन्वकर्मकेभ्यो भाव एवेति कर्तृव्यावृत्तिफलकनियमबोधनायैवकारोऽस्त्वित्यत आह। कर्तृव्यावृत्तय इति। एतेन लः कर्मणीतिसूत्रानन्तरं तयोरेव कृत्यक्तखलर्था इतिसूत्रस्य पठनीयम्। ल इतिपदम्परित्यज्य सम्पूर्णसूत्रस्य पूर्वमनुवर्त्तनीयमस्मिन्सूत्रे तयोरेवेति न वाच्यमिति कस्यचिदुक्तिः प्रत्युक्ता। पूर्वसूत्रादस्य

किञ्चिद्विशेषस्यसूचनाय तयोरेवेत्यस्यावश्यकत्वात् ॥ वसेस्तव्यत्कर्त्तरि णिच्च ॥ वसधातोस्तव्यत्कर्त्तरि स्यात्स च णित् स्यात् ॥ भूलेऽयमिति । केलिमरप्रत्ययः । कृत्यचः ॥ उपसर्गादिति रषाभ्यामिति चानुवर्त्तते । तत्स्थात्ताच्छद्वयमित्याशयेनाह उपसर्गस्थादिति । अत्र च । कृतस्थस्येति व्याख्याने च । एतेन कृति परे यतः कृतो विधानन्तदवयवस्योपसर्गस्थान्निमित्तात्परस्य नस्येत्यर्थ उचित इति निरस्तम् । प्रत्या सत्त्याऽजपि कृत्स्थ एव ग्राह्य इति शंकां वारयति । अजपीति । णेर्विभाषा ॥ अत्र णेरिति विधानक्रिया निरूपितापादाने पञ्चमी त्याशयेन ण्यन्ताद्विहित इति व्याख्यातन्तस्यायमाशयः । अट्कुप्वाङित्यस्य सम्बन्धेन रषाभ्यामित्यंस्ये निष्टपिद्विरभाषाबाधेऽपि णेरिति पञ्चमीदर्शनेन तदंशे निर्द्दिष्टपरिभाषाबाधे मानाभाव इति ॥ एतत्फलञ्च सूत्रकारेणैव दर्शितम् । इजादेः सनु ॥ इजादेर्हलन्तादिति यदत्र व्याख्यातन्तदस्य सूत्रस्य नियमार्थत्वसम्पत्तये । एवं व्याख्याने ह्यस्य सूत्रस्य ण्यन्तेऽप्रवृत्तिर्लभ्यते तदाह । विहितविशेषणञ्चेति । व्याख्यानादिति । अट्कुप्वाङिति सूत्र एव नुम्ग्रहणस्यानुस्वारसामान्यार्थकत्वेन तस्येहानुवृत्तिमूलकव्याख्यानादित्यर्थः ॥ वा निंसनिक्षनिन्दाम् ॥ कृत्यच इत्यतः कृतीत्यनुवर्त्तते । तच्च तत्र यद्यपि नकारविशेषणन्तथापीहनिमित्तमित्याह ॥ कृतीति ॥ ण्यन्तभादीनामुपसङ्ख्यानमिति वार्त्तिकारम्भस्य बीजमाह ॥ प्रभायमानमित्यादाविति ॥ भादीनां । भावे लट् । शानच् । यक् । अत्र यका व्यवधानाद्धाधातोः परत्वाभावात्कृतो निषेधो न स्यादतो वेपामिति पञ्चम्यर्थे षष्ठी विहितविशेषणञ्चावश्यकम् । एवञ्च ण्यन्तस्य शब्दान्तरत्वादप्राप्ते निषेधे निषेधविध्यर्थं वार्तिकमिति भावः ॥ अत्र । णत्वप्रप्रकरणोपरिपाठे ॥ कृतो बहुलमिति । बहुलग्रहणेनान्येषाङ्कृता ग्रहणापेक्षया लाघवात्कृतो बहुलमित्येव युक्तमिति भावः ॥ तव्यदादिषु यतः पाठेऽयमप्युत्सर्गः । अस्य विशेषविहितत्वात्सत्वद्वाधक इति भावः । नन्वज्ग्रहणसत्त्वे दित्स्यन्दित्स्यमित्यादौ यति सन्निपातपरिभाषयाऽतो लोपो न प्राप्नोति तदकरणे तु प्राप्नोतीति फलभेद इत्यत आह । अज्ग्रहण इति । ननु यतो ण्यता बाधोऽधुनाऽवश्यं वाच्य इति यतस्तव्यदादिषु पाठे यत्साहचर्यात्तव्यदादयोऽपि ण्यता बाध्येरन्नित्यत आह । वासरूपेति । न च ण्यत्तव्यदादिषु पठनीयः । अ-

ग्रहणञ्चासुयुवपीन्यत्र कार्यम् । हल्ग्रहणन्न कार्यमित्येव कुतो नोक्तमिति वाच्यम् ॥ ऋशब्दस्य तत्र पाठे धातुसाहचर्येण ऋधातोर्ग्रहणमिति कल्पनस्यापि सम्भवात् ॥ नन्वजन्तभूतपूर्वादपि यद्यथा स्यादित्येवमर्थमज्ग्रहणमस्तु । अत एव दित्स्यन्धित्समित्यादावार्द्धधातुकसामान्ये बुद्धिस्थेऽतो लोपे कृतेऽपि इयङ् भवति । तेन यतोऽनाव इत्येषस्वरो भवति । अतो लोप इतिसूत्रसम्बद्धार्द्धधातुकपदे विषयसप्तमीस्वीकारेऽपि यस्य बुद्धिर्यस्य प्रवृत्तौ नियामिका तस्य तन्निमित्तकत्वव्यवहारः । अत एव गणयतीत्यत्राल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभाव इति चेन्न । भाष्यकारस्य तथैवेष्टत्वेनेष्टापत्तेः । अत एव भाष्यकृतोक्तारोत्याज्ग्रहणवैयर्थ्यमुपपाद्य इदन्तर्हि प्रयोजनमजन्तभूतपूर्वादपि यथा स्यादित्युक्तम् ॥ मूलन्तु तस्यार्द्धधातुकपदस्य परसप्तमीत्वाभिप्रायेण ॥ प्रकृताज्ग्रहणेनैवार्द्धधातुकपदस्य विषयत्वार्थकसप्तम्यन्तत्वाभिप्रापकमिति तु भाष्यकृतामाशयः । यत्तु दरिद्रातेरार्द्धधातुकविवक्षायामाकारलोपे भूतपूर्वाजन्तत्वेन यत्सिद्धिरज्ग्रहणफलमिति ॥ तन्न ॥ दरिद्रा इत्यस्य चाच्कत्वेन ण्यद्यतोर्विशेषाभावात् ॥ इत्यत्र नेति । यत्प्रत्ययो न । किन्तु ण्यत् । एवञ्च यतोऽनाव इत्यस्य तदनुबन्धकपरिभाषयाऽप्रवृत्तौ तित्स्वरितमिति प्रत्ययस्य स्वरितत्वम्भवति ॥ हनो वा यद्वधश्च वक्तव्यः ॥ हन्धातोः सकर्मकत्वात्कर्मणि यत् स चार्हे कृत्यतृचश्चेति योग्यतायाम् ॥ यत्र तु न योग्यता किन्तु बलावष्टम्भेन हन्यते स घात्य एव ॥ तद्धितो वेति भाष्यात् ॥ तत्र हि तद्धितो वा पुनरेष भविष्यति बधमर्हतीति बध्यः । दण्डादिभ्य इति यत् ॥ यदि तद्धितान्तोऽयन्तदा समासविधायकलक्षणाभावादसिवध्यो मुसलवध्य इति न प्राप्नोति । यदि षष्ठीसमासस्तदान्तोदात्तत्वापत्तिः । यदि हन्धातोर्यत्तदापदन्तस्याद्युदात्ततया तेन सह साधनङ्कृता समासे गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वरे आद्युदात्त्वमेव भविष्यतीत्येवमर्थमिदं वार्त्तिकम्भाष्यकृता स्थापितम् । भाष्ये स्पष्टमिति ॥ एवञ्च कृदुत्तरपदप्रकृतिस्वरेणालभ्यशब्दे स्वरितस्यैवावस्थानम्भवति ॥ उपात्प्रशंसायाम् । प्रशंसायाङ्गम्यमानायाम् । प्रत्ययस्तु प्राप्त्यर्थकात्कर्मण्येव । तेन यस्य यस्माद्वा लाभे सति प्रशंसा तस्य लाभहेतुका भवति तदिहोदाहरणम् अत्रापि यीत्यनुवर्त्तमाने विषयसप्तम्येव । तेनान्तस्वरितकत्वसिद्धिः । इत्येके

इति ॥ यदि पुनरर्थाभावशब्दस्य नञ्घटिततया सूत्रगृहीताव्ययेन समासाभाव इति प्रागुक्ता रीतिस्तदा नाव्ययीभावस्य प्रसक्तिरित्यस्वरसः । समासस्तु नञ्तत्पुरुष एव । पञ्चम्यर्थे सप्तमी ॥ नियमार्थमितीति । यमेर्यदि यत्तदोपसर्गाभाव एवेति नियमार्थमित्यर्थः ॥ मूले नियमे साधुरिति वेति ॥ यदि पूर्वोक्तनियमस्याबाध एवेति स्वीक्रियते तदा नियमशब्दात्तत्र साधुरिति यत् । नचैवं सति त्वयेति तृतीयानियमपदार्थभूतक्रियान्वयविवक्षया वाच्या सा न सम्भवति कर्तृकर्मणोरिति षष्ठ्या बाधात् । कृद्योगे तु कृत्यानाङ्कर्तरि वेति विकल्पात्सा भविष्यतीति वाच्यम् । कर्तुः करणत्वविवक्षया तस्याः सिद्धेः ॥ अजर्यं सङ्गतं अत्र सङ्गतशब्दोऽर्थविशेषे रूढ इत्याशयेनाह ॥ सङ्गच्छतीति ॥ निपातनादिति ॥ अतो बाधाभावाय निपातनस्यावश्यमाश्रयणीयतया तत एवायङ्गतरीत्यर्थकल्पनमपि भविष्यतीति बहुलग्रहणेनैषा कल्पना न कार्येति भावः वदः सुपि क्यप् च । उपसर्गग्रहणन्नेति । तथा च सुप्ग्रहणमुपसर्गभिन्नसुबन्तलाक्षणिकमिति भावः । लक्षणायाम्मानमाह । सत्सू इतीति ॥ तत्र हि ज्ञापकमनुपसर्गग्रहणमन्यत्र सुब्ग्रहणे उपसर्गग्रहणन्नेत्यर्थस्येति भावः । भाव इत्यस्यापकर्षे निमित्तमाहकर्मकत्व इति । उत्तरत्रभुवोऽभाव इति सूत्रे ॥ व्यर्थत्वादिति ॥ तथा च पूर्वसूत्र एव तस्य सम्बन्धेन तत्सफलमिति शेषः उत्तरसूत्रेऽपि तस्य साफल्यमाशङ्क्य निराचष्टे ॥ यद्यपीति न तद्ग्रहणमिति ॥ भूप्राप्तावित्यस्यान्तर्भावितण्यर्थस्यास्य च न ग्रहणमित्यर्थः । एवञ्च तत्त्वम्भावग्रहणमेतत्सूत्रार्थमेवेति भावः ॥ इदञ्चिन्त्यमिति ॥ वदः सुपीति सूत्रार्थमेव तत्सूत्रस्थ भाव इतीति चिन्त्यमित्यर्थः । ननूत्तरार्थमिति कुतस्तस्मिन्नपि सूत्रे अनुपूर्वकभूधातोस्सकर्मकान्मा भूदित्यथन्तस्यावश्यकत्वादित्यत आह ॥ सोपपदस्येति ॥ ब्रह्माद्युपपदसहितस्येत्यर्थः । सोपसर्गस्य व्यावृत्तिस्तु गदमदेति सूत्रादनुपसर्गाग्रहणानुवृत्त्या भविष्यति । यद्यपि भाष्ये भुवोभाव इतिसूत्रेप्यनुपसर्गग्रहणसम्बन्धो दर्शितस्तथापि सोपपदस्येति सोपसर्गस्याप्युपलक्षणमित्येतत्तात्पर्यकमत एव सत्सू इति सूत्रस्थमुपसर्गेऽपीतिपदन्तस्य सुब्ग्रहणे उपसर्गग्रहणन्नेत्येतज्ज्ञापकत्वपरतया वर्णयपरसत्सू इतिसूत्रस्थपरग्रन्थविरोधो न सकर्मकत्वादिति । वदेस्सकर्मकत्वात्तयोरेवेत्यस्य प्रवृत्तिर्या-

र्थ्येवेतिभाव इत्यस्यापकर्षणेन प्रमाणमिति भावः। नन्वेवम्ब्रह्मोद्यमित्यस्य का गतिरत आह भाव इति। अत एव। भाव इत्यस्यापकर्षणाभावादेव। प्रत्युदाहृतमिति। वृत्यादाविति शेषः। भाष्ये तु सुवाद्यमपवाद्यमिति प्रत्युदाहृतमिति बोध्यम्। पूर्व्वोक्तमेवार्थन्द्रढयति। ण्यत्वस्मादिति। हनस्त च। नन्वस्य सूत्रस्य हन्तेस्तकारः प्रत्ययः क्यप् त्वेवार्थः किन्न स्यादत आह। व्याख्यानादिति। ब्रह्महत्या वर्त्तत इति भाष्यीयोदाहरणदर्शन मूलकव्याख्यानादित्यर्थः। घात इति। भावे घञ्। तदप्राप्तेरिति। तयोरेवेति नियमादिति भाव.॥ ब्रघात्य इति। कर्म्मणि ण्यत्। शुना घात्य इत्यर्थः। अनुपसर्गे किमिति। वदस्सुपीतिसूत्रादुपसर्ग्ग भिन्न सुपि लाक्षणिकसुप्पदानुवृत्तिः किमर्थेत्यर्थः। असाध्विति। विनापि प्रत्ययमित्यस्याश्रयणे प्रमाणसद्भावे तु साधुरेव। केचित्तु हनस्तः क्यप्यचिस्सलोरित्यनेन सूत्रेण कापि तकारादेशो विधेयः प्रकृते तु हन्भुगभाव इति सूत्रङ्कार्यमेतावतैव सिद्धो हनस्त चेति पृथक्सूत्रकरणमस्य क्वचिदनुपपदेऽपिप्रवृत्त्यर्थम्। तेन निरुपपदेऽपि हत्येति साध्वित्याहुः॥ तत्र। भाष्यानुक्तत्वात्। शब्दशक्तिस्वभावादेतद्विहितक्यबन्तस्य स्त्रीत्वम्। एतिस्तुशा। ननु यस्माच्छासेरङ् तस्य शासिरुपधाया इत्वमिति कथं शास्तेरित्वमत आह। शास इदङ्हलोरिति। अत्र निरोधस्येति अत एव भाष्ये क्यप्विधौ वृञो ग्रहणङ्कर्त्तव्यम्। इह मा भूत्। वार्या ऋत्विज इत्युक्तम् निरोधश्च देशविशेषे स्थापननियमाचरणादिरूपः। ननु पूर्व्व सूत्रे चकारवशात्क्यपः सम्बन्धादस्मिन्सूत्रे तदसम्बन्धात्क्यब्ग्रहणमस्त्वित्यत आह। तकारस्येति स्पष्टत्वेदर्शित। पुनः क्यवुक्तो ण्य द्वाधकत्वं स्पष्टम्। तत्र हि क्याबलि वर्त्तमाने पुनः क्यप्ग्रहणङ्किमर्थम्। क्यबेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूत्। किञ्चान्यत्प्राप्नोति। ण्यत्। ओरावश्यके इत्युक्तम्। ननु हलन्तत्वात्ण्यतापि रूपसिद्धिर्भविष्यतीत्यत आह। ण्यति त्विति॥ ई च खनः। अत्र खनधातोरीकार आदेशो विधीयते न प्रत्यय इति विधेयस्य प्रत्ययान्तरस्याभावात्क्यपोऽनुवृत्तिः सिद्धैव चकारस्तु कार्यद्वयसमावेशार्थ एवेति क्यपश्चानुकृष्टत्वाभावादुत्तरत्र सम्बन्धो भवत्येवेति बोध्यम्। ननु ये विभाषेति सूत्रेणेकारादेशे कृतेऽप्यात्वम्प्राप्नोतीति तद्बाधनायेकारान्तरस्य प्रश्लेषसूचको दीर्घनिर्द्देश इति ह्रस्वः सुपठ इत्यसङ्गतमत आह। ये

विभाषेत्यत्रेति । विषयसप्तमीत्वेऽपीति ॥ कीर्यते स्वयमेवेत्यत्राच: कर्तृय-कीत्याद्युदात्तत्वसिद्धये तास्यनुदात्तेदितिसूत्रादुपदेशपदानुवृत्त्योपदेशेऽजन्ता-नामित्यर्थस्यावश्यकत्वे यक्पदेन सम्बन्धाद्यगुपदेशेऽजन्तानामिति वाच्यमे-वञ्च जायते स्वयमेवेत्यत्र स्वरो न स्यादिति ये विभाषेत्यत्र विषयसप्तमीत्व-माश्यकमिति भाव: । अत्र तदप्राप्त्येति । ये विभाषेत्यस्य यादि प्रत्ययविवक्षा-यामेव प्रवृत्तिस्तदा प्रत्ययोत्पत्ते: प्रागेवेत्वन्ततो यादि: प्रत्यय इति यादि प्रत्ययप्रकृतिपरामर्शकाल एव सौत्रक्रमलोचनेपर्य्या न पूर्वकाल इति तस्मिन् कालेऽयमीकारान्त इति भाव: । ह्रस्वपाठेऽप्ये वमेवात्वाप्राप्तिर्बोध्या । एतत्क्ले-शपरिहारायैवेति । यदि यादिप्रत्ययविवक्षायामात्वन्तदाऽऽत्वमुक्तरीत्यानान्तर-ङ्गमिति ई च खन इति सूत्रप्रवृत्ते: प्राक् तस्याप्रवृत्त्या रूपासिद्धि:,स्फुटैवेति दी-र्घपाठेनेकारान्तस्य प्रश्न षसामर्थ्यान्न पूर्वमीत्वमित्यन्तरङ्गस्यात्वस्याप्राप्ति: । यदि तु ई चेति सौत्रक्रमानुरोधेनादावीत्वन्तत: क्वचितिक्रमकल्पनया यादि-प्रत्ययोत्पत्तिकालपूर्वस्मिन्कालेऽन्तरङ्गस्यात्वस्याप्राप्तिरिति कल्पना तदा क्लेश इति भाव: । भृञोऽसंज्ञायाम् । भार्या वधूरित्यत्र संज्ञायां समजेति क्यप: प्रा-तिमाशङ्क्य विभर्त्ते: क्रादेर्वा ण्यति भार्या वधूरित्यस्य सिद्धि: संज्ञायां समजेति क्यप् तु भरतेरेवेत्युक्तम्मूले अत्रेदम्बोध्यम् । यो विभर्त्ति डुभृञ्धार-णपोषणयोरिति तस्य तदनुबन्धकपरिभाषया क्यब्विधौ न ग्रहणम् यस्तु भृ-भर्त्सन इति क्रादिस्तस्य अकारानुबन्धकत्वाभावान्न ग्रहणमिह स्वराधिका-रस्थसूत्रे च अकारानुबन्धकस्य ग्रहणादिति । अत एव सामान्येनोक्तम् । क्यप् त्विति । अयमिति । भृञोऽसंज्ञायामिति विहित: । स्वराधिकारस्थ: । संज्ञायां समजेति सूत्रविहित: । युक्त: । भृञ् इति अकारमात्रानुबन्धकोच्चारणरूपयु-क्त: । इहत्यभरतेरेव भवनकथनन्तु स्वरूपनिर्णयाय । न तु भार्या वधूरि-त्यस्य समाधानाय । संज्ञात्वादिहत्यस्य तत्राप्राप्ते: । नन्वेवम् । विभर्त्ते: क्रादेर्वा क्यपोऽप्राप्तौ । भरतेर्भार्यायां क्यप्वारणायेति । भार्यार्थं विव-क्षितयां भरते: क्यप्वारणायेत्यन्वय: । भार्यायामित्यस्य भर्त्तव्यायामिति नार्थ: किन्तु स्त्रीविशेषे योगरूढो यो भार्याशब्दस्तत्रेत्यर्थ: न चेह संज्ञायां समजेत्यस्य प्राप्तिस्तस्य भावे प्रवृत्ते: । तदुक्तम्भाष्ये भाव इति तच वर्त्तते

तत्र भुज्विषये भाव एवेष्यत इत्यर्थः । सूत्रे भार्यशब्दो बहुवचनान्तः । चजोः कुघिण्ण्यतोः । रागादित्यादीति । तेन रक्तं रागादिति निर्देशादित्यर्थः । आदिना त्यागरागहासेत्यस्य सङ्ग्रहः । एषु । न्यंक्वादिषु । क्यपो वडितीति । यद्वा वृञ् वरणे इति धातोः क्यप् तदेत्यर्थः । निपातनात्कृत्तरीति । तयोरेवेति नियमात्कर्तर्यप्राप्ते निपातनमावश्यकम् । तत्त्वेन । धनत्वेन । विपूयविनीय । पूडितीति । पूर्जिति क्वचित् पाठ । न्यूनताभङ्गायाह । तैला-द्राविति । एषु चतुर्ष्विति । गम्यमानेष्विति शेषः । ननु पत्रशब्दस्य नपुंसकत्व-विशिष्टार्थाभिधायकत्वेन युग्यशब्दस्य विशेष्यसमानलिङ्गकत्वं युक्तमेवेति सामान्ये नपुंसकत्वमित्यभिधानमनुचितमत आह । पत्रपात्रेति । एतेन । उक्तरीत्या पुंस्त्वस्यापि सम्भवेन । अभावस्यदन्यतर । वारणायेति । तकारोच्चारणेन ण्यतो निश्चयादिति शेषः । यथोत्तरमित्यनेन वार्त्तिककारोक्तेः सप्रमाणत्वं यदुक्तन्तदुक्तमेवेत्याह । वार्त्तिकस्येति । शोक इत्यस्यासिद्धिरिति । निष्ठायां सेट्त्वाद् घञि कुत्वस्याप्राप्त्याऽसिद्धिरित्यर्थः । एवञ्च शोकशब्दस्य वार्त्तिकेन निष्ठायामनिट इति पूरणेन सिद्धिः सूचिता । बाहाविति । करबोधकाद् भुजशब्दादजित्यर्थः । इत्येतद्द्वावृत्तय इति । एतेन निपातनेन स्तोः श्चुनेति सूत्रानन्तरम्युद्जेर्ब इति वचनङ्कार्यमित्यनुमीयते । तत्र स्तोः श्चुनेति सम्बध्यते । उद्जेः स्तोः श्चुना योगे बो भवति । एतस्य वचनस्य सन्यङोरित्येतद्दृष्ट्याऽसिद्धत्वादुब्जिजिषतीत्यत्र जिशब्दस्यैव द्वित्वम् । समुद्र इत्यादौ पदस्य विभक्त्यान्वाख्यानमिति पत्राश्रयेण बकारादेशविधायकस्यानुमितवचनस्यासिद्धत्वात् त्वमादौ भवति । एतद्वचनस्योक्तविषयेऽर्थविशेषे न्युब्ज इत्यस्य प्रवृत्तिर्नत्वन्यत्रेति बोधनाय च निपातनमन्यथा न्युब्जेरचापि सिद्धे निपातनं व्यर्थमिति शङ्का स्यात् ॥ अत्र ॥ यजयाचेति सूत्रे ॥ व्याख्यानादिति ॥ भक्ष्याभक्ष्यप्रकरणेऽतादृशस्यापि स्मृतौ निदर्शनमूलकव्याख्यानादित्यर्थः ॥ ओरावश्यके ॥ अवश्यमित्यव्ययान्मनोज्ञादित्वाद्भावे वुञि परेऽव्ययानामिति टिलोपेऽस्य साधुत्वम् । द्योत्य इति । प्रकरणादिनावश्यकत्वस्य प्रतीतिः । अवश्यकर्त्तव्य इत्यर्थेऽवश्यं शब्दो वर्त्तते वाक्यैकदेशन्यायेन । न च लाव्यमित्यनेनैवावश्यकत्वस्य प्रकरणादिना प्रतीतिसम्भवादवश्यं शब्दस्य प्रयोगोऽनुचित इति वाच्यम् । श-

ष्यमानार्थस्यापि स्पष्टप्रतिपत्तये प्रयोगस्य बहुशो दर्शनात् । व्यतिलुनीत इ-त्यादौ यथा । अवश्यलाव्यमित्यादौ मयूरव्यंसकादित्वादवश्यं शब्दार्थस्यैकदे-शान्वयेऽपि समासः । कृदुत्तरपदप्रकृतिस्वरोऽप्येवमेव निपातनात् । लुम्पेद-वश्यम इत्यन्तलोपः ॥ आसुयु ॥ प्रकृतसूत्रे सुग्रहणेन सुञ एव ग्रहणमित्यत्र प्रमाणमाह । सुनोतेरित्यादाविति ॥ ननु निरनुबन्धकस्यैव निरनुबन्धकपरिभा-षया ग्रहणं युक्तमत आह । निरनुबन्धकेति ॥ इति पाठ इति ॥ आङः सत्वे-नोदात्तोपदेशस्येति निषेधविधायकसूत्रस्यानाचमेरित्युक्तत्वादप्रवृत्तिर्भवतीति भावः ॥ दक्षिणाग्निविशेष एवेत्यत्र विशेषपदोपादानादाह ॥ योगार्हेति ॥ द्वौ दक्षिणाग्नी तयोर्मध्ये यो गार्हपत्यादानीयते तस्मिन्नेव निपातनन्तथैव शि-ष्टाचारानुसारिव्यवहारात् ॥ मूले वैश्यकुलादेरिति । वित्तवद्वैश्यकुलादेरित्य-र्थः॥ आदिना भ्राष्ट्रपरिग्रहः ॥ प्रणाय्योऽसम्मताविति बहुव्रीहिरित्यनेन यस्मिन्नर्थे निपातनमत्र,चौरादौ क्रियते तस्य बोध्यत्वं सूचितम् । सम्मतिरित्यत्र सम्पूर्वं क्तान्मनधातोः प्रीतिभवनानुकूलव्यापारार्थकात्कर्मणि बाहुलकात्क्तिन् । भावे क्तिन्प्रत्ययेनैवेष्टसिद्धौ तावत्पर्यन्तानुसरणं व्यर्थमित्याशयेन मूले भोगेष्वादर इति ॥ सा यत्र लोकानान्नास्तीत्यर्थविवक्षायां सप्तम्यर्थे बहुव्रीहिः ॥ अथ वा सम्मतिशब्दः पूर्ववदेव । सा यस्य नास्तीति षष्ठ्यर्थे बहुव्रीहिर्वा ॥ तदुक्तमन्ते-वासीति ॥ प्रणेयोऽन्य इति । घटादिरिति शेषः ॥ अत्र कर्मणि यत् ॥ पाय्यसा-न्नाय्य ॥ मानकरणेऽर्थे पाय्यमिति निपात्यते तस्य द्वाभ्यामपि धातुभ्यामुपपत्ति-रित्याशयेनाह ॥ मिनातीति ॥ पयोदधिवेत्यर्थ इति ॥ ऐन्द्रन्दध्यमावास्याया-मैन्द्रम्पयोऽमावास्यायामित्युक्तत्वादिति भावः । ऐन्द्रं हविरित्यत्र हविः सा-मान्ये प्रयोगस्तु लक्षणया ॥ मूले धाय्या ऋगिति । सामिधेनीनाम्मध्ये ऋ-ग्विशेषः ॥ क्रतौ कुण्डपाय्य ॥ अत्र कुण्डपाय्ये यत्प्रत्ययो द्रष्टव्यः । कुण्डपाय्ये यद्विधिः । कुण्डपाय्ये यद्विधेयः । कुण्डपाय्यः क्रतुरिति भाष्यात् । पाधातोर्यति तस्य युग्निपात्यते तेन यतोऽनाव इत्याद्युदात्तत्वम्भवति । तत उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणाकारोदात्तकोऽयम् ॥ सञ्चाय्यशब्दे तु ण्यत्प्रत्यय एव । प्रकरणात् । निपातनत्वायादेशस्य ॥ क्रतौ किम् । कुण्डपानम् । सञ्चेयः का-ष्ठादिः ॥ अग्नौ परिचाय्योपचाय्य ॥ सूत्रेऽग्निपदं स्वधारणार्थं यदिष्टकाच-

यनादिनिमित्तं स्थलन्तत्र लाक्षणिकम्। निपातनञ्च स्थादायादेशयोः। एवमे-वोपचाय्येऽपि बोध्यम्॥ समूह्ये तु सम्पूर्वकाद्वहधातोर्ण्यति सम्प्रसारणन्दी-र्घश्च निपात्यते॥ अत एव प्रत्युदाहरणोपपादनावसरे संवाह्यमित्युपात्तम्॥ अत्र यो विशेषस्तमाह। वह्निसमानार्थ इति॥ चित्याग्निचित्ये च॥ चित्यश-ब्दे कर्मणि क्यबन्तो निपात्यते॥ अग्निचित्यशब्दे तु भावे क्यबन्तोदात्तत्वयो-र्निपातनम्। अत एवाग्निचित्ये त्यन्तोदात्तो भाव इति भाष्यसंवादः॥ सर्वो-पकारकत्वात्प्रकरणान्ते आह। प्रैषातिसर्गप्राप्तकालेति सूत्रे॥ लोटा बा-धेति। लोटस्तत्र विशिष्यविधानादिह प्राप्तो बाधो नेत्यर्थः॥ वा सरूपन्या-येन बाधाभावसिद्धौ पुनरपि कृत्यग्रहणवैयर्थ्यमत आह। स्त्र्यधिकारादिति॥ अत्र स्त्र्यधिकारादूर्ध्वमित्यस्त्रियामित्यस्यार्थकथनम्। प्राच्यांशस्तु वासरूप-विधिः क्वचिन्नेत्येव॥ अत एव। एतादृशस्य प्राच्यांशस्य सत्त्वादेव॥ न नि-त्यम्बाध इति॥ अयम्भावः। समानकर्तृकयोः पूर्वकाल इति सूत्रस्य समानक-र्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तेर्धातोः क्त्वाप्रत्यय इत्यर्थेन पूर्वकाल-कत्वं क्त्वाप्रत्ययद्योत्यन्तच्च प्रकारतयाऽसित्वा भुंक्त इत्यत्रासनक्रियायाम्भासते। तादृशी चासनक्रिया स्वसमानकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन भुजि-क्रियायाम्प्रकारतया भासते। उक्तोभयसम्बन्धेन पूर्वकालिकासनविशिष्टभोज-नमिति बोधः। आस्यते भोक्तुमित्यत्रापि तुमुन्ण्वुलौ क्रियायाङ्क्रियार्थायामिति सूत्रे क्रियार्थायामित्युपादानात्तुमुन्प्रकृत्यर्थक्रियापूर्वकालत्वस्यासनक्रियायाम् फलार्थकतुमुन्समभिव्याहारात्प्रतीयते॥ एवञ्चोभयोः प्रयोगयोः समानार्थक-त्वादास्यते भोक्तुमित्यर्थे आसित्वा भुङ्क्त इत्येव स्यात्। न तु आस्यते भोक्तु-मिति। न च तुमुना क्त्वाप्रत्ययस्य बाधशङ्का भवति। क्त्वाप्रत्ययविधायकसूत्रे पूर्वकाल इत्यस्य साक्षादुपादानात्। तुमुन्विधायके तु कार्यार्थकार्थशब्दोपादाने न कारणत्वङ्गम्यते। कारणत्वस्य च पूर्वकालघटितत्वेन तत्र पूर्वकालत्वङ्गम्यते तेन क्त्वाप्रत्ययेन तुमुनो बाध उक्तः। वा सरूपन्यायस्य प्रवृत्तौ तु भुज्धातो-स्तुमुनि कृते सति तत्समभिव्याहारेणासने पूर्वकालकत्वङ्गम्यत इति नासधा-तोस्त्वाप्रत्ययः किन्तु लट्। एवञ्च यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्व-न्तत्र तद्द्योतकः क्त्वाप्रत्यय इति॥ तदुक्तं समानकर्तृकयोरिति सूत्रभाष्ये

इह कस्मान्न भवति आस्यते भोक्तुमिति । कुतः कस्मान्न भवति । किमासेः आ-
ह्वाः स्विद्भुजेः । भुजेः कस्मान्न भवति । अपूर्वकालत्वात् । आसेस्तर्हि कस्मान्न
भवति । यस्मादत्र लङ्भवति । एतदत्र प्रष्टव्यं लडत्र कथम्भवतीति ॥ लट्चात्र
वासरूपेण भविष्यतीति ॥ अत्र लट्चात्र वासरूपेणेत्युपादानाद्यत्र धातोः
पूर्वकालविविशिष्टक्रियावाचकत्वन्तत्र क्त्वाप्रत्यय इति ध्वनितमन्यथा लटः पू-
र्वकालार्थकत्वाभावेन कथं वा सरूपेण तदुपपादनम् ॥ न च वा सरूपोऽस्त्रिया-
मितिसूत्रे स्त्रियामित्यनेन स्त्र्यधिकारात्पूर्वं वासरूपविधिर्नेति स्त्रियामित्यधि-
कारन्दृष्ट्वावासरूपविधिर्निवर्त्तत इति वाऽर्थे इति क्त्वाविषये कथं स इति वाच्यम्।
अस्त्रियामित्यस्य स्त्र्यधिकारे नेत्यें वार्थो न तु तन्दृष्ट्वेति ।एवञ्च स्त्र्यधिकारा-
दूर्ध्वमपि वासरूपविधिर्भवति परन्तु क्व चिदेवेत्याशयेनात्र मूले क्व चित्पदो-
पादानमिति । मूले:क्त्युडिति ॥ हसितव्छात्रस्ये त्यर्थे हसनमित्यर्थे च घञ्।नर्द्ध
षत्पानः सोम इत्यत्रातो युजित्यस्य विषये खल्न ॥ इच्छति भोक्तुमिति तुमु-
न्विषये इच्छार्थेषु लिङ्लोटाविति लोड्न ॥ लिङ् तु भवत्येव । क्वचिन्नेत्यु-
क्तेः ॥ अर्हे कृत्यतृचश्च ॥ अत्र चकारेण लिङ् यदीति सूत्राल्लिङनुकर्षः । अने-
न लिङा कृत्यतृचोर्बाधस्य प्रसक्तिः ॥ भव्यगेयप्रवचनीय । यदुक्तम्मूले कर्त्तरि
वा निपात्यत इति तस्योपपत्तिमाह । कर्त्तरि कृदित्यत इति ॥ इति कृत्यप्रक्रि-
येति । न च कृत्याः प्राङ् ण्वुल इत्युपादानात्कृत्याधिकारस्य प्रागेव निवृत्ते-
र्भव्यगेयेति सूत्रस्य कृत्येषु व्युत्पादनमनुचितमिति वाच्यम् । कर्त्तरि कृदिति
सूत्रभाष्ये कर्त्तरीतिसूत्रस्यानिर्दिष्टाइतिन्यायेन प्राप्तस्य स्वार्थत्वस्य वारकतया
सार्थकत्व मुक्त्वा घञ्विधायकेन भाव इति सूत्रे णज्ञापकेनपुनः स्वार्थत्वाप्रसंग-
माशंक्योक्तोभावभेदोभाष्यइत्यनेन तस्य सूत्रस्य चारितार्थ्यम्प्रदर्श्य कृतांस्वार्थि-
कत्वापत्तिवारकतयाकर्त्तरीत्यावश्यकमित्युक्तम् । ततः ल्युन्विधायकेऽआद्यति
सूत्रे करण इति पाठेन कृत्यविषयेतयोरित्यनेनविशेषविहितेन बाधेसिद्धेतयो-
रेवेतिसूत्रस्थैवकारस्य तत्रभव्याद्यर्थमित्यनेन कृत्यसंज्ञया कृत्संज्ञायाः समावे-
शसूचनेनगेयोमाणवकः साम्नाम् । गेयानिमाणवकेनसामानीत्युदाहरणप्रदर्श-
नेन च भव्यादीनामपिकृत्यान्तत्वमनुमीयतइत्यभि प्रायेणभव्येतिसूत्रस्यकृत्यप्र-
क्रियायां व्युत्पादनात् । भव्यादिष्टकायदादयः ।कृत्याः ।कर्त्र्थावाधककर्मार्थं-

कत्वतात्पर्यकत्वादितिन्यायस्यध्वननादिति ॥

## इति कृत्यप्रक्रियाविवरणम् ।

ण्वुल् तृचौ । अत्र तृच: प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे चकारोऽप्तृन्तृजि-त्यत्र विशेषणार्थ: । तस्मिन् सूत्रे तृ इत्युच्यमाने मातरौ मातर इत्यत्र प्राप्नोति स्वसृनप्तृग्रहणन्नियमार्थं भविष्यति एतयोरेव योनिसम्बन्धयोर्नान्येषां योनि-सम्बन्धानामिति । एवञ्च तत्रानुपयुक्तत्वाच्चकारस्य प्रयोजनमाह । तृच इति । यद्यपि कालविशेषोपादानं कृत्वा एतौ न विहितौ तथापि भाष्यप्रामाण्याद्व-र्त्तमानकाल एवानयो: प्रयोग इत्याह । अनयोरिति । तदुक्तं भाष्ये तृजादिषु वर्त्तमानकालोपादानमध्यापकवेदाध्यायाद्यर्थम् । अध्यापक: वेदाध्याय: अ-धीतवति अध्येष्यमाणे वा मा भूदिति, न वा कालमात्रे दर्शनादन्येषाम् न वा कर्त्तव्यम् । किं कारणम् कालमात्रे दर्शनादन्येषाम् कालमात्रे अन्ये प्रत्यया दृश्यन्त इति अन्येषाम् ण्वुल् तृज्व्यतिरिक्तानाम् एतेन वर्त्तमान-कालोपादानञ् क्रियते तदा तस्याधिकारत्वात्प्रत्ययान्तरेषु दोष: स्यादिति वर्त्तमानाधिकारो न कार्य: अनयो: कालान्तरे अनभिधानमिति ध्वनितम् । न ह्यध्यापकोऽध्येता प्रयोगोऽधीतवत्यध्येष्यमाणे वा दृश्यते । आशिषि च । अत्राशिषीति प्रकृत्यर्थस्य विषयतासम्बन्धेन विशेषणम् । न तु प्रत्ययार्थ: कर्त्तरि कृदिति कर्त्तरि प्रत्ययविधानात् । सा चाशी: प्रयोक्तृसमवेताऽप्राप्त-प्राप्तीच्छा । एवं च जीवक इत्यादौ जीवधातो: शब्दप्रयोगकालावधिकोत्तर-दीर्घकालावच्छिन्नप्राणधारणेच्छाविशिष्टजीवने लक्षणा । एतादृशस्य धात्वर्थ-स्य वुन्प्रत्ययस्य समभिव्याहारेण प्रतीति: । एवमेव नन्दक इत्यादावपि बोध्य-म् । तदाह । शास्यमानेति । कर्मण्यण् । धातोरण् प्रत्यय: कर्म चोपपदसंज्ञं भ-वतीत्यर्थ: । मूलेऽनभिधानादिति । अनभिधाने मानन्तु प्रकृतसूत्रस्थभाष्यमेव। तत्र हि कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् इह मा भूत् आदित्यं पश्यति हिमवन्तं शृणोति ग्रामङ्गच्छतीति निर्वर्त्य कर्मस्वरूपञ्च हरिणा दर्शि-तम् । सती वाऽविद्यमाना वा प्रकृति: परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वमाचक्षते इति । यस्य सती परिणामिनी प्रकृति: कार्यसामानाधिक-रण्येन यदा न विवक्ष्यते तदा तन्निर्वर्त्यङ्कर्मोच्यते । यथा कुम्भङ्करोतीति ।अत्र

कुम्भस्य विद्यमानापि मृद्रूपा प्रकृतिः कुम्भसामानाधिकरण्येनाविवक्षितेति कुम्भात्मकं कर्म निर्वर्त्यम् । यदा तु प्रकृतेः कार्याभेदेन प्रतीतिर्जायतामितीच्छया मृदङ् घटङ्करोतीति प्रयोगस्तदा तद्घटादिरूपङ्कर्मविकार्यमेव । अन्योभयोपादानेन कार्यस्य घटस्य रूपान्तरपरिग्रहः प्रतीयते इति घटात्मकं कर्म विकार्यम् । तदुक्तं हरिणा विकार्यं कर्म । प्रकृत्युच्छेदसम्भूतङ्किञ्चित्काष्ठादिभस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवदिति । एतदुत्तरार्द्धोपात्तं विकार्यकर्मत्वन्तदा घटादेरस्त्येव । इदानीम् घटादिकं कर्म विकार्यमेव न तु प्राप्यम् । क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यत इति तल्लक्षणात् । दर्शनात् प्रत्यक्षात् । यदा तु प्रकृतेः कार्याभेदेन करणत्वेन सम्बन्धित्वेन वा विवक्षा मृदा मृदो वा घटङ्करोतीतिरीत्या तदा घटादिकं कर्म निर्वर्त्यमेव । अनुमानेन कर्मरूपाप्रतीतिर्यत्र तत्कर्म निर्वर्त्यमेव । यथा पुत्रः सुखं करोति । अत्र पुत्रस्य चेष्टादिदर्शनेन पित्रादिनिष्ठं सुखात्मकङ्कर्म सुखविकासादिनानुमीयत इति । अत्र कर्मणः सुखस्याविद्यमाना प्रकृतिः कार्याभेदेन न प्रतीयत इति यद्यपि तथापि सुखस्य प्रकृतिरन्तःकरणीयविलक्षणज्ञानाकारा सा प्रकृतिरनुमिति गोचरा भवतीति प्राप्यत्वाभावान्निर्वर्त्यत्वम् । प्रकृतेः सामानाधिकरण्येन विवक्षाया अभावात् । एवञ्चादित्यम्पश्यतीत्यादावादित्यादिः प्राप्यङ् कर्मेति स्पष्टमेव । ततः कर्मणि निर्वर्त्यमाना विक्रियमाण इति वेदेदाध्यायादीनामुपसङ्ख्यानम् । वेदाध्यायः चर्चापारः । ह्वर्यादिहनीवहिभ्यस्येति वक्तव्यम् । भारहरः कमण्डलुग्राहः उष्ट्रप्रणायः भारवाहः । अपरिगणनं वा न वार्थः परिगणनेन कस्मान्न भवति आदित्यं पश्यति हिमवन्तं शृणोति ग्रामङ्गच्छतीति । अनभिधानात् अनभिधानादेवात्र न भविष्यतीति । अन्यत्राप्यनभिधानं क्व चिदाश्रयमित्याह । ओदनपचादय इति । मूले आरम्भसामर्थ्यादिति । सुपीत्यनेन सिद्धेऽस्यारम्भसामर्थ्यादित्यर्थः । आरम्भसामर्थ्यात्पूर्वापेक्षया स्य इतिसूत्रविषये किञ्चिद्वैलक्षण्यमवश्यं वाच्यमिवञ्चार्थनियामकस्य कर्त्तरीत्यस्यानुपस्थितिरेव कल्पते । एवञ्चानिर्दिष्टार्थत्वाद्भाव इति लभ्यम् । अत एवैतद्विहितप्रत्ययान्तस्य नित्यैकवचनान्तत्वमेव । लिङ्गसिद्धिस्तु लोकाश्रयत्वात् । उपपदसमाससिद्धिफलकमयं योगः । तेन घञर्थे

कविधानमित्यनेन सिद्धिर्न शङ्कनीया। घञर्थे कविधानमित्यस्य कर्तृकारका- ऽर्थत्वात्प्रतिष्ठतेऽस्मिन् धान्यादिकमित्यर्थे प्रस्थशब्दस्य सिद्धिः। वयसि च। वय- सि गम्यमाने इत्यर्थः। कवचहर इत्यनेन कवचस्यातिगुरुत्वेऽपि तद्धरणेन म- ध्याव्यमानेन वा कर्तुः पौगण्डाद्यवस्थाविशेषो गम्यते। रुणातेरिति। तत्र हि पुनर्धातुग्रहणेन टप्रत्ययस्य बाधनमुक्तं कुमारवाडवस्त्वाह नैषा शङ्का शङ्क- रेषा रुणातिः शब्दकर्मा तस्यैव प्रयोग इति प्रतिपादितम्। स्थः क चेत्यत्र भाष्य इति। तत्र हि किमर्थं स्थः कक्विपावुच्येते न क्विप्सिद्धः अन्येभ्योऽपि दृश्यते इति। कस्तातोऽनुपसर्गे क इति। न सिध्यति। विशेषविहितः कः सा- मान्यविहितं क्विपम्बाध्येत वासरूपेण क्विबपि भविष्यति इदं तर्हि शंस्थः शं- स्थाः उक्तमेतत् शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थमिति स यथैवाच् टम्बाधते एवङ् कक्विपावपि बाधितेत्युक्तम्। अत्र शंस्थ इतिप्रयोग- सिध्यर्थं को विधेयः अयञ्च कोऽज्बाधकत्वेन चरितार्थ इत्यस्य क्विबपवादत्वङ्ग- तमिति वासरूपन्यायानवसरात्क्विपः परत्वात्केन नित्यम्बाधः स्यादिति क्विब- पि विधेयः न चाच्प्रत्ययेन शंस्था इति भविष्यतीति वाच्यम्। भसंज्ञानिमित्त- प्रत्यये आतो लोपानापत्तेः। पुरस्तादपवादन्यायेन टस्यैव बाध इति तु न शक्यम्। येन नाप्राप्तिन्यायेन क्विबेव बाध इत्यपि वक्तुं शक्यमित्यस्य भाष्यस्य बाध्यसामान्यचिन्तामाश्रित्योभयबाधकत्वतात्पर्यकत्वात्। शंस्थाशब्दे घुमा- स्थेतिसूत्रविहितत्वस्य भाष्यकारीयप्रयोगादेवाप्रवृत्तिः ईत्वमवकारादाविति वार्त्तिकन्तु धीध्यायतेर्दधातेर्वेति ध्यायतेः सम्प्रसारणमिति वार्त्तिकव्याख्याना- वसरे उक्तत्वेन प्रत्याख्यातमेव। अथ वा क्विपदं साद्दृश्यादिच उपलक्षणम्। चरेष्ट इत्यत्र भाष्यमिति। तत्र हि कुरुं चरतीत्यत्र टप्रत्ययमाशङ्क्य चरेर्भिक्षा- ग्रहणं ज्ञापकङ्कर्मण्यप्रसङ्गस्येत्युक्तम् भिक्षाशब्दे उपपदे भिक्षासेनेत्यनेन टो विधीयते यद्यनेन कर्मण्युपपदे टः स्यात्तदानेन तत्र टविधानं व्यर्थं स्यात्। अत्र चरतिश्चरणकरणेऽर्जने वर्त्तते भक्षणार्थको वा। ज्ञापकपरभाष्यप्रामा- ण्यात्तत्रैवास्य प्रयोगः। एतच्चाधिकरण इत्यस्य कर्मणीत्यस्य च सम्बन्धप्रदर्श- नेन यथायोगं सम्बन्ध इति ध्वनितमिति भावः। चरेष्टः। अधिकरण इतीति। ज्ञापकेन कर्मण्युपपदेऽस्याप्रवृत्तावधिकरण इत्येव परिशेषाल्लब्धम्। प्रत्ययाव-

यवत्वादिति । उणादीनां व्युत्पन्नत्वाभिप्रायेण । अन्तकरशब्दस्य नञा समासेऽनन्तकरस्य तु नेष्टस्य सिद्धिः । अनन्तशब्दे उपपदे कृञष्टे उपपदे समासे कृदुत्तरप्रकृतिस्वरस्य प्रवृत्तिर्भवति नञाऽन्तकरशब्दस्य समासे तु तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरापत्तेः । यदुक्तम्परत्वादिति तस्योपपत्तिरच्प्रत्ययस्य टप्रत्ययाप्राप्तियोग्ये विषये चारितार्थ्ये सति घटत इत्याशयेनाह । अजहेत्वादाविति । किदीत्यादिना यत्तच्छब्दयोः परिग्रहः । एतेषां ग्रहणसत्त्वे त्वहेत्वादावपि किमादिषूपपदेषु सूत्रेण टस्य प्राप्त्याऽच्प्रत्ययस्य चारितार्थ्यं न स्यादिति भावः । अभिमान इति कथनवीजन्तु भाष्यकृता सूत्रस्थकिमादिग्रहणस्याप्रत्याख्यानेनाच पर्यायेण द्वयोरपि टाचोः प्रवृत्तिरिष्टैवेति । किञ्च पुंयोगाविवक्षायामपि स्त्रियाः कर्तृत्वे किङ्करीति सूत्रकारमतसिद्धस्य भवदुक्तरीत्याऽसिद्धिरपि द्रष्टव्या । कर्मणि भृतौ अत्र कर्मणीत्यनुवृत्त्यैव सिद्धे पुनः कर्मणीत्युपादानात्कर्मणीति कर्मशब्दपरम् । अस्य कर्मशब्दस्य । व्रीहिवत्सयोरिति वक्तव्यमितिवार्त्तिकस्य समुदायेन प्रतिपादयितुमिष्टयोरित्यर्थः । तेन तयोः प्रत्ययार्थकर्तृविशेषणत्वमेवाभिप्रेतमिति बोध्यम् । फले ग्रहिरात्मम्भरिश्च । फलेग्रहिशब्दस्यार्थविशेषे रूढिम्प्रदर्शयति स्यादवन्ध्यः फलेग्रहिरित्यमरः । यस्य वृक्षस्य फलग्रहणयोग्यता तस्मिन् वृक्षे चायम्प्रयोगः फलोत्पत्त्यनवच्छेदककालसम्बन्धेऽपीष्यते । एजेः खश् । अत एव । एयन्तादिति व्याख्यानादेव । चरितार्थमिति । शकारोच्चारणमस्य सार्वधातुकत्वे शप् यथा स्यादिति कृतम् । केवलादयजेर्यद्ययं स्यात्तदा शपि सत्यसति वा फलतो न विशेषः । न चोत्तरार्थमस्य शित्वमस्त्विति वाच्यम् । इहार्थत्वस्यापि सम्भवे उत्तरार्थत्वमात्रत्वस्यायुक्तत्वादिति भावः । न नुमिति । अनव्ययस्य सम्बन्धेऽपि न सर्वत्राव्ययस्य प्रतिषेधः । उपकुम्भम्मन्ये इत्यादौ मुमागमस्येष्टत्वात् । एतच्चाव्ययीभावस्य लुङ्मुखस्वरोपचारेष्वेवाव्ययत्वस्वीकारेण लभ्यते । नासिकास्तन । मूले यथासंख्यं नेष्यते इति । प्रकृतसूत्रे भाष्ये स्तने धेटः नासिकायां धमश्चेति कथनादिति भावः । नाड़ीमुष्ट्योश्च । इदन्नासिकानाड़ीमुष्टीघटीखरीष्विति वक्तव्यमिति नासिकास्तनेति भाष्ये दर्शनेन वार्त्तिकमिति प्रतीयते यद्यपि तथापि वृत्तावष्टाध्यायाञ्च पृथक् पाठाद्यथासङ्ख्यसूत्रस्थभाष्यस्वारस्याच्च सूत्रमेवेति प्रतिपन्नाः । यथासंख्यसूत्रस्य

सामान्यतः प्रवृत्तौ करणाधिकरणयोरित्यनुवर्त्तमानेऽवं तृस्तोर्घञितिसूत्रेण घञि विधीयमाने तृस्तौ द्वौ करणाधिकरणे द्वे तत्र संख्यातानुदेशः प्राप्नोतीत्यादिना भाष्ये सङ्ख्यातानानुदेशात्ति प्रसङ्गमाशङ्क्य समानयोगि संख्यातानुदेशं वक्ष्यामीत्यनेन समाधाय घाधेटोर्नाडीमुष्ट्योः खलगोरथात् इनित्रकटचश्च सिन्ध्वयकराभ्यां कन् अणञौ चेत्यत्र संख्यातानुदेशो न प्राप्नोतीति तादृशोक्तौ दोष उक्तः। एतदग्रे यथासङ्ख्यमनुदेशः समानां स्वरितेनेत्यनेन सिद्धान्तितम्। तत्र दोषप्रतिपादनपरभाष्ये खलगोरथादित्यस्य सिन्ध्वपकराभ्यामित्यस्य च यथा सूत्रत्वन्तथा नाड़ीमुष्ट्योरित्यस्यापि सूत्रत्वमिति समभिव्याहाराप्रतीयते। वस्तुतस्तु नाड़ीमुष्ट्योर्विषये संख्यातानुदेशो न प्राप्नोतीति यथासंख्यसूत्रस्यमेकदेश्युक्तिः। नासिकास्तनयोरिति सूत्रभाष्यविरोधेनात्र यथासंख्याभावस्येष्टत्वात्। तथाहि। स्तने धेटः नासिकायां ध्मश्च धेटश्चेति वक्तव्यमित्यनेन यथासंख्याभावार्थं वार्त्तिककृता योगविभागो दर्शितः। तत्राप्यव्याप्तिमुद्भावयन् भाष्यकार आह। अत्यल्पमिदमुच्यते नासिकानाड़ीमुष्टिघटीखरीष्विति वक्तव्यम्। नासिकन्धमः नासिकन्धयः नाडिन्धमः नाडिन्धयः मुष्टिन्धमः मुष्टिन्धय इति रीत्या प्रतिपादितम्। उदि कूले रुजिवहोः अनोदीति नोपपदम्। हरतेर्दृतिनाथयोरितिसूत्र इवोन्कूलयोरितिद्विवचदनिर्देशे कर्तव्ये उदि कूल इति विभिन्नविभक्तिनिर्देशसामर्थ्यात् किन्तूदि सति कूले उपपदे रुजिवहोरनन्तरः प्रत्यय इत्यर्थस्तेन यत्किञ्चदन्तदाह मूले उत्पूर्वाभ्यामिति। अत एव यथासंख्यसूत्रे भाष्ये उक्तन्नोदिरूपपदम्। किं तर्हि विशेषणमिति। युक्तत्वादिति। द्वितीताया इति शेषः राजदाराणाङ्गुप्तप्रतिशय प्रतिपादनपरमेतद्वाक्यम्॥ एवं ता गुप्ता यन्निवारणानर्हदर्शनमपि सूर्यन्न पश्यन्तीति॥ प्रियवशे वदः खच्। अत्र चकारः खचि ह्रस्व इत्यत्र विशेषणार्थ उपायतस्तस्य वैयर्थ्यमुपपादयति। खचश्चित्त्वमिति। खे ह्रस्व इत्युच्यमाने कुलात्खः इति कुलशब्दात् खप्रत्यये कुलीन इत्यत्र यस्येति लोपस्य स्थानिवद्भावेन लकारस्योपधात्वेऽपि नातिप्रसङ्ग इत्याह। णावित्यनुवृत्त्येति। नन्वचश्चेतिपरिभाषयाऽच इत्यस्योपस्थितौ खचि यददन्तस्योपधाया अच इत्यर्थेन कुलीन इत्यस्य सिद्धिर्भविष्यतीति णावित्यनुवृत्तिर्व्यर्थेति चेन्न। ऊदुपधाया इतिसूत्र-

दुपधापदसम्बन्धे सति निर्दिष्टस्थानिकत्वेनाचश्चेति परिभाषाया अनुपस्थितिरित्याशयात्। किञ्च खचि यदङ्गं तदुपधाया अच इत्यर्थश्चेत् स्यात्तदा द्विषन्तपयोस्तापेरितिसूत्रस्य यदुदाहरणमिच एकाचोऽमितिसूत्रीयभाष्ये उक्तम्। वृत्तिकारादिसर्वजनसिद्धन्द्विषन्तपः परन्तप इति तस्यासिद्धिः स्यात् ह्रस्वत्वे चिकीर्षिते णिलोपस्य स्थानिवद्भावेन खच्परमङ्गं णिजन्तमेव तदुपधाभूतस्य पकारस्याच्त्वाभावात्। णावित्यनुवृत्तौ तु खच्परे णौ यदङ्गन्तदुपधायाऽज्व्यभिचारादचपरिभाषाया इहानुपस्थितिरेवेत्याशयः। णावित्यस्याभावे यदि कुलीन इत्यत्र लकारस्य यस्येतिचेत्यल्लोपस्य स्थानिवद्भावेनोपधाभूतस्य ह्रस्वः स्यात्तदा लृकारः स्यात् तस्मिंश्चेकारनिमित्तकयणादेशापेक्षयाऽन्तरङ्गत्वादुकारस्य यण् स्यादन्तरङ्गत्वञ्च पट्व्या मृद्व्या कर्त्रेतिवल्लक्ष्यभेदेन लक्षणस्य भेदकल्पनया पूर्वोपस्थितनिमित्तकत्वरूपस्बोध्यम्। भाष्यप्रामाण्यादिति। तत्र ष्यु पपदविधौ भयाढ्यादिग्रहणमित्युक्तम्। व्याख्यानादिति। संज्ञापदापकर्षसूत्रकव्याख्यानादित्यर्थः। इयञ्च संज्ञायातौदनेनातिथ्यादिर्भोजितो भवतितावत्प्रमाणकस्य। अलोन्त्यपरिभाषयैव सिद्धे दारावाहन इत्यत्रान्तशब्दोपादानमर्थकमत आह। अन्तग्रहणं स्पष्टार्थमिति। वार्तिकेषु प्रायो लाघवगौरवचर्चा नाद्रियत इत्यस्यार्थस्य स्पष्टप्रतिपत्त्यर्थमित्यर्थः। चरितार्थमिति। भविष्यद्वर्तमानयोः प्रत्ययविधायकतया चरितार्थमित्यर्थः। आढ्यसुभग। च्विप्रत्ययस्य वैकल्पिकत्वेनच्विप्रत्ययाभावेऽपि च्व्यर्थत्वन्न विरुध्यते। सूत्रे निषेधसामर्थ्यादिति। च्व्यन्ते उपपदे ख्युनो निषेधेऽपि यदि ल्युट् स्यात्तदा प्रतिषेधोऽनर्थकः स्यात्। रूपस्वरे विशेषाभावात्। च्व्यन्तस्याव्ययत्वेन सुम्कृतस्य च्व्यन्तस्य गतिसंज्ञकत्वेन नित्यसमासकृतस्य च विशेषस्याभावात्। भाष्यमतेत्विति। कर्तरि भुवः खिष्णुच्खुकञावित्युत्तरत्रानुवृत्त्यर्थत्वेनाच्वावित्यचारितार्थ्यस्य प्रदर्शनात्। तेनाढ्योभवितेत्यत्र तौ नेति पूर्वसूत्रविषये ल्युड्भवत्येवेति भावः। णुच तु नेति ग्लाजिस्थश्चेतिसूत्रार्थं विभक्तं यङुवश्चेतिसूत्रन्तस्य लोकसाधारणत्वस्य वक्ष्यमाणत्वात्प्रामाण्ड्ष्णु च तु नेत्यर्थः यद्यपिभुवश्चेतिसूत्रव्याख्यानावसरे सूत्रे छन्दसीत्यस्य णिश्छन्दसीत्यतोऽनुवर्तमानस्य सम्बन्धो दर्शयिष्यमाणस्तथाप्याढ्यसुभगेतिसूत्रभाष्ये पूर्वोक्तरीत्याऽच्वावित्यस्य वैयर्थ्यप्रदर्शनं उत्तरार्थन्तर्हि प्रतिषेधो वक्तव्यः

कर्त्तरि भुवः खिष्णुच्खुकञौ अच्वावित्येव आढ्यीभविता अथेदानीमनेन उक्तस्ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवति रूढिशब्दप्रकारास्ताच्छीलिकाः न च रूढिशब्दा गतिभिर्विशेष्यन्ते न हि भवति देवदत्तः प्रदेवदत्त इतीष्णुजापत्तिपरम् भाष्यमेव भुवश्चेत्यस्य लोकवेदसाधारणत्वे प्रमाणमिति भावः । न च कर्त्तरि कृदिति सूत्रेण कर्त्तर्यस्य सिद्धेः कर्त्तरीति व्यर्थम् । करण इत्यस्यानुवृत्तिभ्रमवारकतयाऽस्य चारितार्थ्यात् । यदि करण पदस्यास्वरितत्वेनैवासम्बन्ध इति कल्प्यते तदा तु कर्त्तरीति व्यर्थमेव । ननु भूधातोरुदात्तत्वेनेटा भविष्णुशब्दः सिद्ध एवेति खिष्णुच इकारो व्यर्थः । एवञ्च प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे चकारोऽप्यत्र न कार्य इत्यपरं लाघवमिति चेन्न । नञः परत्वं यत्र ष्णुजन्तस्य तत्र कृत्योकेष्णुच्चार्वादयश्चेत्युत्तरपदान्तोदात्तत्वसिध्यर्थमिहेकारस्यावश्यकत्वात् इडागमे सत्ययमपि ष्णुजेवेति तु वक्तुमशक्यम् लाक्षणिकत्वात् । स्पृशोऽनुदके क्विन् । अनयो र्नकारो भाष्यकृता प्रत्याख्यातः । तथाहि । नायं स्वरार्थः । स्पृशेरेकाच्त्वात् । नाप्युत्विगित्युत्तरार्थः तत्र दधृक्शब्दस्य द्विर्वचनान्तोदात्तयोर्निपातनात् । क्विन्प्रत्ययस्येत्यत्र विशेषणार्थ इत्यपि न तत्रापि क्विप्रत्ययस्येत्येव सिद्धिः । क्विपो व्यावृत्तिस्तु तदनुबन्धकपरिभाषया भविष्यतीति न च स्पृश्धातोर्यङ्लुगन्तादत्र क्विन्तत्रायुदात्तत्वसिध्यर्थं नित्वमस्त्विति वाच्यम् । नकारप्रत्याख्यानपरभाष्यप्रामाण्येन यङ्लुकस्यानभिधानस्य । कल्पनात् । सामर्थ्यादिति । स्पृश्धातोरेकाच्त्वात्क्विन्क्विपोः स्वरेऽपि विशेषाभावात् । कुत्वकृतो विशेषस्तु न । क्विन्प्रत्ययस्येति बहुव्रीह्याश्रयणात् । सत्सूद्विषद्रुह । अत्र सदादिषु केषाञ्चिद्धातूनां सकर्मकात्सुपीत्यनुवर्तमानेऽपि कर्मण्युपपदत्वम्प्राप्नोतीत्यतो भाष्ये उपसर्गग्रहणं कर्तव्यमित्युक्तम् । तेन कर्मणीति निवृत्तमित्यन्वाख्यातम्भवति । अनुपसर्ग इत्यस्येति । आतोऽनुपसर्गे इतिसूत्रस्थस्यानुपसर्ग इत्यस्येत्यर्थः । यत्तु वदः सुपीतिसूत्रेऽनुपसर्गग्रहणानुवृत्तिप्रदर्शनपरं वार्त्तिकन्तदपि नापूर्वङ्किन्तु प्रकृतज्ञापकसिद्धार्थानुवादएव । सप्तम्यन्ते तरादिति । द्युसदितिप्रयोगे सप्तम्यन्तेतरत्पूर्वपदमित्यर्थः । एवञ्च सदधातोर्गत्यर्थत्वात्कर्मण्युपपदे प्रत्ययः सप्तम्यन्तेप्युपपदे क्विप् दृश्यते । आदितेयादिविषद इत्यत्र यथा अत्र सुषामादित्वात्ष-

त्वम्। द्युसदित्यत्र पूर्वपदादितिप्राप्तमपि षत्वञ्छन्दसीत्यनुवृत्तेर्न। उपनिषदित्यत्र तु सदिरप्रतेरिति षः। स्पृष्टश्चेदश्माष इति। तत्र क्ष्रदोऽनन्ने इत्येव सिद्धे क्रव्यग्रहणं वा रूपनिवृत्त्यर्थमित्युक्तमिति। ननु क्रव्याद इत्यस्य पृषोदरादित्वात्साधुत्ववत्क्रव्यादित्यस्यापि सिद्धौ क्रव्ये चेतिसूत्रवैयर्थ्यमत आह क्रव्ये चेतिसूत्रन्त्विति। विचोऽपि सम्बन्ध इति। विजुपे छन्दसीतिसूत्राद्विजग्रहणं सम्बध्यते छन्दसीतिनिवृत्तमित्यर्थः। दृशिग्रहणाद्यथा प्रयोगो दृष्टस्तथैव साधनीयमिति लभ्यते तेनोपपदस्य व्यभिचारोऽपि लभ्यत इत्याह। दृशिग्रहणादिति॥ अन्तः। अनितेरितिवर्त्तते। अत्रान्त इत्यस्यानितेरिति न विशेषणमव्यभिचारात्किन्तु पदस्येति तदाह। मूले पदान्तस्येति। हे प्राण्। अन् प्राणने क्विप् अनुनासिकस्येति दीर्घः। न ङिसम्बुध्योरिति नलोपस्य निषेधः। सुप्यजातौ णिनिस्ताच्छील्ये। अजाताविति सुपीत्यस्य विशेषणम् जातिप्रवृत्तिनिमित्तकस्याजातावित्यनेन निषेधः। उष्णभोजीत्यादावुष्णादिशब्दो गुणप्रवृत्तिनिमित्तकः। अत्रोपसर्गभिन्नः एवेत्यस्य यथा लाभस्तथ्प्रकारमाह। सुपीतीति। भाष्ये तीति। एवं हि भाष्ये उक्तम् सुपीति वर्त्तमाने पुनः सुब्ग्रहणं किमर्थम् अनुपसर्ग इत्येवंतदभूत् इदं सुम्मात्रे यथा स्यात्॥ उदासारिण्यः प्रत्यसारिण्य इति। साधुकारिणीत्यत्र साध्विति क्रियाविशेषणम् यः सकृदपि साधु यथा स्यात्तथा ददाति साधु करोति स एवमुच्यते अत एव आक्केरितिसूत्रे तच्छीलापेक्षया तत्साधुकारीत्युपात्तम्। व्रते। अव्रतशब्दे उपपदे इति नार्थः। अश्राद्धभोजीतिभाष्योदाहरणात् किन्तु प्रयोगोपाधिपरम्। एवञ्च यत्सिद्धन्तदाह। सुप्युपपदे इत्यादिना। स्थण्डिलशायीत्यत्र यथा व्रतङ्गम्यते तथाह। स्थण्डिल एवेति। भाष्योदाहरणे त्वसमर्थसमासो द्रष्टव्यः। नञ् एवायम्भुजिप्रतिषेधवाचिनः श्राद्धशब्देनासामर्थसमास इति भाष्यात्। अत एवात्र व्रतङ्गम्यते। श्राद्धशब्देन नञा समासे तु सर्वेषामिव तथात्वेन व्रतत्व प्रतीयेत। बहुलमाभीक्ष्ण्ये। अत्राभीक्ष्ण्ये इति धातोर्विशेषणमर्थद्वारकम्। तेन द्योत्य इत्यस्य लाभः। व्रत इतिसूत्रभाष्य इति। तत्र श्राद्धभोजीत्यत्र व्रतस्यगम्यमानतायान्दृष्टान्तत्वेनोपात्तम् यथा स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदास्य व्रतलोपो भवतीति। मनः। सुपीति व-

तते। अत्र मन इत्यनेन मन्यतेरेव ग्रहणम्। न तु तनादेः। उत्तरसूत्रे दिवादेरेव ग्रहणेनार्थाधिकारात्। आत्ममाने खश्च। मननं मानः भावे घञ्। आत्मशब्दः प्रत्ययवाच्यत्वे नोपस्थितकर्त्तृपरएव। कर्मषष्ठ्या समासः। न तु कर्त्तृषष्ठ्या आत्मशब्दोपादानसामर्थ्यात् तथा च यत्फलितन्तदाह। स्वकर्मकेति। अत्र भाष्ये कर्मकर्त्तृग्रहणं कर्त्तव्यम्। कर्मापदिष्टो यक् यथा स्यात्। श्यन्मा भूदित्युक्तम्। अत्र कर्मकर्त्तृग्रहणङ्कर्त्तव्यमित्यस्य कर्तुः कर्मवद्भावः। पूर्वोक्तरीत्या कर्तुर्लकारवाच्यत्वस्याभावेन कर्मस्थक्रियया तुल्यक्रियत्वसत्वेन चाप्राप्तो वाच्य इत्यर्थः श्यन्मा भूदित्यनेन हि अत्र दिवादेर्ग्रहणमिति स्पष्टमेव। ततः श्यनैव सिद्धो कर्मवद्भावो न वाच्यः रूपे स्वरे च विशेषाभावादिति प्रतिपादितम्। पूर्वपश्चिम इति। परन्तप इत्यादौ मुमागमे सति मोऽनुस्वारे चिकीर्षिते बहिरङ्गपरिभाषयामुमोऽसिद्धत्वाश्रङ्कायामिदमुक्तम्। अत एव। श्रियम्मन्य इतिरूपस्येवासिद्धत्वस्य प्रवृत्याऽभप्रेतत्वादेव। न च यदि न सुपो धात्विति लुकः प्राप्तिस्तर्हि पुंसि चरितार्थस्य मुमो नपुंसकत्वे श्रियम्मन्यङ्कुलमित्यत्र लुक्स्यादेवेति वाच्यम्। पूर्वपदस्योत्तरपदस्योत्तरपदार्थेन सह भेदान्वयान्नपुंसकत्वाभावात् स्वमोर्नपुंसकादितिसूत्रे सुशब्दसाहचर्येणार्थवत एवामो ग्रहणस्य वक्तुं शक्यत्वाच्च। भूते। इदं धात्वर्थस्य विशेषणम्। अत एव भूतार्थादित्युक्तिसङ्गतिः। सोमेन लताविशेषेणेति। अत्र सोमशब्दस्य द्रव्यपरत्वेऽपि न क्षतिरितिभावः। अग्निष्टोमशब्दस्य रूढ्यर्थाभिधायकत्वाभिप्रायेणाह। अग्निष्टोमसंस्थाकेति। अग्नेः स्तोमः स्तुतिर्यत्र क्रतौ स क्रतुरग्निष्टोमः। रूढोऽयं शब्दः अग्निष्टोमसंस्थाकेत्यस्याप्यग्निष्टोमेति संस्थावाचकः शब्दो यस्येत्यर्थः। समुदायार्थन्निरूप्यावयवार्थन्निरूपयति। यजेस्त्वेत्यादिना। त्यागश्च मन्त्रकरणको देवदत्तोद्देश्यको हविःकर्मको विवक्षितः एतादृशत्यागकरणकभावनाया भाव्याकाङ्क्षायां यद्यपि स्वर्गकामादिपदोपस्थितस्य स्वर्गस्य भाव्यत्वमन्यत्रोक्तन्तथापि तस्य कालान्तरभावितया भावनायास्तदव्यवहितपूर्वकालवृत्तित्वाभावेन भावकत्वन्न सम्भवत्यतोऽपूर्वस्य भाव्यत्वमाह। पूर्वं भावितवानिति। ननुव्यापाररूपा या भावना तया त्यागात्मकम्फलन्तज्जन्यत इति तदेव भाव्यत्वेन कुतो नान्वेतीत्यत आह। धात्वर्थत्यागस्येति। धातुप्रतिपाद्यर्थघटकतया करणत्वेनोपस्थितेरित्य-

र्थः। त्यागकरणकेन व्यापारेण कम्भावयेदिति याऽकांक्षा सा पूर्वानुभूतार्थातिरिक्तविषयविषयिण्येवोचितेति भावः। ननूपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभाव इति न्यायेनोपस्थितस्यैव समानशब्दोपात्तत्वप्रत्यासत्या तथात्वमुचितमत आह। पुरुषार्थत्वाभावाच्चेति। यज्ज्ञातं सत्स्वसम्बन्धित्वेनेष्यते स पुरुषार्थः। तत्वञ्च सुखदुःखाभावान्यतरस्य साक्षात्तत्साधनस्य वा त्यागश्च तेभ्यो भिन्न इति भावः। अपूर्वम्। परमापूर्वम्। ननु करणस्य कार्यपूर्ववृत्तित्वमन्यत्र दृष्टन्त्यागस्तु भावनायाः कार्यन्न तु भावनापूर्ववृत्तीति कथं करणमत आह। त्यागस्य करणत्वञ्चेत्यादि। भावनायाः भाव्यो भावना भाव्यः भावना भाव्यम्भावयति जनयतीति भावना भाव्यभावकस्तत्वम्। अस्ति चेदृशं करणत्वं त्यागे भावनाभाव्यपूर्वम्प्रति यागस्य जनकत्वात्। सर्वत्र। नकेवलं फलांशस्यैव किन्तु सर्वत्र दण्डेन घटं करोतीत्यत्रापि दण्डस्य भावनाभाव्य घटोत्पत्तिम्प्रति जनकतायाः सत्वात्। धातोरंशद्वयाभिधायकतयो प्रायः फलांशस्य भावनाम्प्रति भाव्यत्वेन सम्बन्धात्कर्मत्वं क्वचित्तु करणत्वेन सम्बन्धित्वविवक्षा तदा तृतीया तदभिन्नार्थवाचकपदात् अग्निष्टोमेन यजेतेत्यादौ यथा। अत्र च करणे यज इतिसूत्रमेव मानम्। पूर्वोक्तो बहुव्रीहिः। संख्यावाचकपरत्व एव सम्भाव्यते इत्याशयेनाह। संख्यावचनस्यापीति। क्वचित्तु ज्योतिष्टोमशब्दस्येतिपाठस्तु ज्योतिःष्टोमेन स्वर्गकामो यजेतेतिवाक्याभिप्रायकः। ईशानाम्। भाव्यतयाभावनाम्प्रतिसम्बन्धिनाम्। यत्र तु फलांशस्यैव भाव्यत्वेन सम्बन्धिविवक्षा तत्र करणाकाङ्क्षावद्भिर्भूतकरणवाचकपदेन पूर्यते काष्ठैः शोभनम्पचतीत्यादौ वाह्यफलाकाङ्क्षायास्तूपतये तण्डुलम्पचतीत्यादौ यथा। पूर्वोक्तां लक्षणामसहमान आह। के चित्विति। सङ्कल्पद्वारा प्रवृत्तिं प्रति प्रयोजको यः सङ्कल्पः ज्योतिःष्टोमेन स्वर्गो जायतामितीच्छारूपस्तद्द्वारा शब्दार्थयोस्तादात्म्याज्ज्योतिःष्टोमशब्दार्थवज्ज्योतिष्टोम शब्दस्यापि तादृशेच्छाविषयतया तदिच्छाम्प्रति विषयविधया जनकत्वेन तद्द्वारा भावनाम्प्रत्यपि करणत्वमिति भावः। अग्नौ चेः। सुपि कर्मणीति सम्बध्यते। अग्नौ कर्मण्युपपदे चितेः क्विप्। अत्रापि चतुर्विधो नियम इति काशिकायाम्। श्येनचिदितिसमुदायः स्थलविशेषे इष्टकानिर्मिते आहवनीयधारणार्थे रूढः॥ तदुपलक्षितेति। अनुबन्धोप-

लक्षितेत्यर्थः । का काक इव वदत्तगृहमित्यत्रास्थिरेण काकेन वेदिकापुण्डरीकादिकं यथोपलक्षितं तद्वत् । यद्रूपमिति । कृते इयङि यद्यान्तं रूपन्तदनुकरणमेतत् । एवञ्चानुकरणस्यानुकार्योपस्थापकतया चि चये चि निवासगत्योरित्येतद्वयोरपि ग्रहणे तत्रापि तयोर्ग्रहणापत्तौ भावे कर्मणि वा यत्र निष्ठा तत्रातिप्रसङ्गवारणाय दीर्घग्रहणमिति भावः । चितः काम इत्यत्र चिधातोरन्तर्भावितण्यर्थकत्वेन सकर्मकत्वात् कर्मणि क्तः । भावे तु चितङ्कामिनेति बोध्यम् । दीर्घविधायकवृत्ताविति । दीर्घविधायकस्य सूत्रस्य वृत्तौ विवरणवाक्ये रदाभ्याम् । पूर्वत्वस्य सावधिकत्वेन प्रथमे वाक्ये निष्ठाया उपस्थितत्वात्तस्या एवावधित्वङ् कल्प्यत इत्याशयेनाह । निष्ठापेक्षयेतीति । पूर्वग्रहणमिति । रदाभ्यान्निष्ठातो नो दश्चेत्येव कर्तव्ये कृतं यत्पूर्वग्रहणन्तदित्यर्थः । ल्वादिभ्यः । यदुक्तं मूलकृता एकविंशतेरिति तद्भावस्तु यद्यपि गॄधातू तत्र दृश्येते तथापि ताभ्यान्निष्ठाया रदाभ्यामित्येव सिद्धमिति । ज्याधातोर्निष्ठायाः संयोगादेरित्यनेन सिद्धिर्नत्वस्यासिद्धतया प्रथमं सम्प्रसारणे यणवृत्ताविरहात् । ग्रासकर्मकर्तृकस्येति । ग्रास एव कर्मकर्ता यस्येत्यर्थः । पिण्डीक्रियमाण ओदनादिर्यदा व्यञ्जनदध्यादिसम्बन्धेन स्वयमेव झटिति ग्रासताम्प्राप्नोति तदेतदुदाहरणम् । व्याख्यानादिति ॥ उत्तरसूत्रारम्भमूलकव्याख्यानादित्यर्थः । विभाषाऽभ्यव । अत्र विभाषा भ्यवादिति सिद्धे पूर्वग्रहणङ्किमर्थमत आह । पूर्वं ग्रहणमिति । पूर्वशब्दाभावे तस्मादितिपरिभाषयाऽभिसंशीनमित्यत्र समा व्यवधानान्न स्यादिति भावः । स्फोकारीत्या व्यवस्थितविभाषा भाष्योक्तस्थल एवेत्याशयेनाह । एतदपीत्यादि । अच्योनपादाने । अनपादाने । इत्यसमर्थसमासोऽसूर्यललाटयोरितिवत् । अपादानवाचकस्य प्रयोगे नेत्यर्थः । तदर्थात् । प्रकाशार्थात् एतेन व्यक्तमित्यत्र नत्वापत्तिर्निरस्ता । उदक्तमुदकङ्कूपादित्यस्य कूपापादानकोद्धरणकर्मोदकमित्यर्थः । यस्य विभाषा । अध्या इति । शब्दाध्याहार इत्यर्थः । यस्येति षष्ठ्यर्थस्यार्द्धधातुकस्येत्यत्रान्वयः । यदीयार्द्धधातुकस्येड्विकल्पेन विहितस्तस्मान्निष्ठाया इडन स्यादित्यर्थः । निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु । वृक्ण इति । ओव्रश्चू छेदने अस्मान्निष्ठायां ग्रहिज्येति सम्प्रसारणम् । ओदितश्चेत्यस्य निष्ठादेशविधायकस्यासिद्धत्वात्स्कोरिति सलोपः । यस्य विभाषेतीड्

भावः। निष्ठादेशस्य नत्वस्य त्रश्चेति षत्वे कर्तव्ये सिद्धत्वात्परत्वान्नत्वे षत्वाभावे चोः कुरिति कुत्वम्। खरप्रत्यय योरिति। उभयोरुदाहरणमित्यर्थः। चोव्धातोर्निष्ठाया इटि कृतेऽनुपसर्गात्फुल्लेत्यनेनेट्सहिततकारस्य लोपे निपातनेन स्वरे प्रत्यये च कर्त्तव्ये यदि निष्ठादेशस्यासिद्धत्वं स्यात्तर्हि चत्रत्वान्निष्ठादेशे सत्यपि स्वरानापत्तिर्नाइच इति छस्य न स्यादिति क्रमेण बोध्यम्। तकारमात्रस्य लोपनिपातनपक्षे तु इडागमे कर्त्तव्ये तस्य लोपस्य सिद्धत्वादिड्भावे स्वरे कर्त्तव्ये तल्लोपस्यासिद्धत्वेऽपि इच्क एवयमिति स्वरो भवत्येव परिस्कन्दः प्राच्य इदन्निपातनन्निष्ठान्तस्यात्तप्रत्ययान्तस्य वेतिमतभेदेनाह। अत्रवेति। प्रत्ययभेदेन स्वरभेदस्तु भवत्येव। प्रतिस्तब्धनिस्तब्धौ च। सौत्रस्य स्तन्भुधातोर्निष्ठायां यस्य विभाषेतीडभावे स्तन्भेरिति षत्वे प्राप्ते तदभावस्य निपातनमिदम्। निर्वाणोऽवाते। समानपदत्वाभावाण्णत्वाभावे प्राप्ते निपातनमिदम्। कर्तर्येव निष्ठा वाधातोर्गत्यर्थात्। भाष्ये त्विति। कर्तर्येव निपातनमितिनियमाभावाद्भावे कर्मणि वा प्रत्यय उभयथा समुदायेन वातानभिधाने णत्वमित्यर्थः। अनुपसर्गात्फुल्ल। निरनुबन्धकपरिभाषया फलनिष्पत्तावितयस्यैवेदन्निपातनं युक्तमित्याशङ्कायामाह। व्याख्यानादिति। भाष्याच्चरध्वनितव्याख्यादित्यर्थः। तत्र हि फलेर्लत्वे उत्पूर्वस्योपसंख्यानं कर्त्तव्यम् उत्फुल्लोऽन्तङ्क्षयति। अस्यत्वमिदमुच्यते उत्पूर्वादिति उत्फुल्लसम्फुल्लयोरिति वक्तव्यमित्युक्तम्। अत्र फलेर्लत्वे इत्यभिधानेनफुल्ल विकसने इतरस्य नेदन्निपातनङ् लत्व इत्येवोक्तन्तु इडभाव इत्यपि तेनेड्भावस्यादितश्चेतिसिद्धिः सूचिता। एवञ्चञिफलाधातोः क्ते इडभावेऽपि चरफलोश्च त्यनेनोत्वमत्र त्येवेति तस्मिन्सूत्रे उभयोर्ग्रहणमस्तीति। भाष्ये स्पष्टमिति। तत्रहि अनुपसर्गादित्युच्यते तत्रेदन्न सिद्ध्यति। परिकृशमिति। एवमाशंक्य क्रशिः क एष विहितइगुपधात् नेतन्निष्ठान्तम् किन्तर्हि कृश एषइगुपधात्को विहितः नैवं शक्यम् स्वरे हि दोषः स्यात्। निष्ठान्तस्य चेद्रूपन्तदा तनूकरणार्थकाद्धातोः कर्मणि क्तप्रत्यये गतिरनन्तर इत्यनेनपरिकृशशब्दस्याद्युदात्तत्वं भवति। तनूभवनार्थात्कृशेः कर्तरिकप्रत्यये थाथघञ्क्ताजिवित्यनेनान्तोदात्तत्वमप्रसज्ज्येतेत्यर्थः। एवमाशङ्क्यएवन्तर्हि पदस्य लोपोत्र द्रष्टव्यः पर्यागतः

कार्श्येन परिकृश इत्युक्तम्। तत्र कैयटः। गम्यमानार्थत्वादप्रयोगएव लोपस्त-त्रगमिम्प्रति परिरुपसर्गो न तु कृशिम्प्रतीत्यनुपसर्गत्वात्परेर्निष्ठान्त एव कृश शब्द इति तत्पुरुषे तुल्यार्थेत्यव्ययस्वरेणाद्युदात्ततेति। ननु तावत्वेकदेश-स्यापि निपातनमिष्यते इत्यनुपपन्नम्भाष्यानुक्तत्वात् अत आह। वृत्तिकारैरिति। ननु निष्ठादेश इतिवार्त्तिकेनेड्भावे सिद्धे तादेशनिपातनस्वीकारो व्यर्थोऽत आह। निष्ठादेश इति। आदितश्च। नन्विदं सूत्रं विभाषा भावादिकर्मणोरि-तिसूत्रेण सहैव पाठमिवञ्च तत्रेड्विकल्पाद्यस्य विभाषेति निषेधेनान्यत्रेड्भावे सिद्धे योगविभागवैयर्थ्यमिति चेन्न। यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति ज्ञापनार्थत्वात्। तेन विभाषा गमहनेत्यनेन विशिसाहचर्याच्छविकरणस्य विकल्पविधानात्तस्मादेव निष्ठाया इण्निषेधो न तुलुग्विकरणान्निष्ठाया इति फलसिद्धेरिति भाष्ये स्पष्टम्। व्याख्यानादिति। वित्तो भोगीतिसूत्रभाष्यसम्मत-व्याख्यानादित्यर्थः। तत्र हि विन्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। वि-त्तेर्वित्तश्च विन्नश्चभोगे वित्तश्चविन्दतेरित्युक्तम्। ऋणमाधमर्ण्ये। ऋणशब्दस्या-धमर्ण्यशब्देन बहुव्रीहिः ऋणस्याधमत्वं च दुःखप्रदत्वात्। ततो भावे ष्यञ्। तदन्तस्य च तादृशव्यवहारे लक्षणा एवञ्च विषयत्वनिरूपकत्वान्यतरसम्ब-न्धेन तादृशव्यवहारसम्बन्धिनि गम्यमाने ऋणमिति निपात्यते। निरूपकत्व-निवेशे मानं तु धारेरुत्तमर्ण इति निर्देश एव। नन्विह निष्ठायामित्येव सूत्रमस्तु नित्यार्थत्वञ्चास्यारम्भसामर्थ्याद्भविष्यति विकल्पस्य निरः कुष इत्यनेन सिद्धेरत आह। निष्ठायामित्येतत्त्विति। न च निरः कुषोऽनिष्ठायामित्येव सूत्रमस्तु एवञ्चानिष्ठायामित्यनेन निष्ठायां विकल्पस्य व्यावृत्तौ पर्युदाससा-मर्थ्याच्च यस्य विभाषेति निषेधस्यापि बाधे सिद्धे इहेड्ग्रहणं व्यर्थमिति वाच्यम्। वेः स्कन्देरनिष्ठायामितिवत्कृत्येव विकल्प इति शङ्कास्यादतः पृथ-ङ्निष्ठायामित्यस्या वश्यकत्वात्। एवञ्चेहेड्ग्रहणाद्वाशब्दस्यासम्बन्ध इति सिद्धम्। तोषसहेत्यादावुत्तरत्र तु सम्बध्यत एव। आरोप्येति। वर्तमाने यत्र प्रत्यय-स्तत्रापि यत्किञ्चिदवयवसद्भावे क्षणे सर्वेषामवयवानामविद्यमानत्वेऽपि तस्मि-न्समूहत्वारोपेण वर्तमाने प्रत्ययस्तथेहापीति भावः। उपदेशइत्यनुवृत्तेरिति। तच्चोकारस्य विशेषणम्। प्रत्ययोपदेश इति प्रत्यासत्त्या कल्पना कार्या तेन

लुआदिभ्यः क्ते निषेधस्य सिद्धिः । न च जागरितमित्यत्रापि निषेधापत्तिरि-ति वाच्यम् । एकाज्ग्रहणस्याप्यनुवृत्तेः सम्प्रसारणत्वस्य स्थान्यल्वृत्तित्वेनानल्विधाविति निषेधे प्राप्ते आह । अत्रेति । ननु हल इत्ये तत्सामर्थ्यादित्यसङ्गतमेकादेशे कृतेऽपि परत्वादन्तवद्भावस्य प्रवृत्त्या सम्प्रसारणत्वस्य सुलभत्वादत आह । तत्सामर्थ्यादिति । हलइतिसूत्रारम्भसामर्थ्यादित्यर्थः । अयम्भावः । यद्यप्यन्तादिवच्चेति सूत्रम्परन्तथापि विप्रतिषेधसूत्रे परशब्दस्येष्टवाचकतया पूर्वोप्यचः परस्मिन्निति स्थानिवद्भावःस्यात् । तत्र दृष्टान्तमाह । कृदतिङ्सूत्रस्थभाष्यरीत्येति । तत्र यथाऽतिङ्ग्रहणाभावे चिकीर्षतीत्यत्र शपा सहैकादेशे कृते यदि तिङः । कृत्संज्ञा स्यात्तदातुक् स्यादितिप्रयोजनमुक्त्वा पूर्वविप्रतिषेधेनान्तवद्भावस्या चः परस्मिन्निति स्थानिवद्भावेन बाधनात्तु कोऽप्यस्याऽतिङ्ग्रहणम्प्रत्याख्यातम् । तथेहापि प्राप्तोऽचः परस्मिन्निति स्थानिवद्भावो न भवति हल इतिसूत्रारम्भसामर्थ्यादिति । मूले अनायाससाध्य इति । क्षुण्णमौषधमुष्णोदके प्रक्षिप्तञ्चेत्तस्मिन्नेव काले यज्जायते तत्फाण्टमिति । धृषिशसी वैयात्ये । विकल्पे प्राप्त इति । आदिकर्मणि यत्र निष्ठेत्यादिः । भावादिकर्मणोर्वैयात्ये धृषेर्वृत्त्यभावे मानमाह । मूले अतएवेति । तत्र वृत्तित्वाभावादेव । अविनीतेति । विरुद्धं यथा स्यात्तथा यातो वियातस्तस्य भावो वैयात्यमितिव्युत्पत्त्याऽविनीतत्वं पुरुषवृत्तिधर्म उच्यते । ञिधृषाधातोरादित्त्वादिड्भावे सिद्धे नियमार्थोऽयं योग इति भावः । एवं सति वैयात्याभावेऽस्मान्निष्ठाया इडिष्ट एव चेद्धृषेरादित्वाभावेसिवैयात्ये इड्भावोऽस्य सूत्रस्य विधायकत्वेऽपि भविष्यतीति धृषेरादित्वं व्यर्थमिति हरदत्तमतं खण्डयति ।अत्रारुचीत्यादिना । आदित्वसामर्थ्यादेवानभिधाने प्रमाणमस्तीतिकल्प्यत इति भावः । अभेशाविदूर्ये । अत्राविदूरशब्दाद्भावे ष्यञ् ब्राह्मणादित्वात् । न नञ्पूर्वादितिनिषेधस्त्वत एव निपातनान्न । णेरध्ययने वृतम् । अधीयत इत्यध्ययनङ् कृत्यल्युट इति बाहुलकात्कर्मणि ल्युट् । तदाहाधीयमान इति । दो दद्घोः । अयमादेशस्थान्तः । इद्दजश्त्वे कृते निर्दिष्टस्य तान्तादेशपक्षेऽप्युपपत्तिरित्याशयेन मूले तान्तो वायमादेश इत्युक्तम् । दस्तीति सूत्रस्य दाधातोर्यस्तान्तादेशस्तस्मिन्सत्युपसर्गस्य दीर्घ इत्यर्थाभि-

प्रायेण शङ्कते। न चैवमिति। एवम् । आदेशस्य तान्तत्वे । दाधातोर्यस्त कारादेशस्तस्मिन्नित्यर्थे यस्मिन्विधिरितिपरिभाषया तदादिविधिः स्यात्तथा च तकारादावुत्तरपदे दीर्घ इत्यर्थाभिप्रायेण समाधत्ते । तकारादाविति। प्राचीनसम्मतसूत्रार्थरीत्याव्याख्याय भाष्यसम्मतसूत्रार्थाभिप्रायेणाह । स्वज्ञा-स्त्रित्यादि। तान्तदाधाताविल्यर्थे खरि चेति चर्त्वे कृते आदेशस्य तान्तत्वमेवे-ति व्यावर्त्याभावेन नेदं व्याख्यानयोग्यङ्किन्तु यस्मिन्विधिपरिभाषालभ्यमेवेति शङ्काम्बारयति। परिभाषासम्मतव्याख्याने चर्त्वं स्यासिद्धत्वेनादेशस्यातान्तत्वपत्ते दीर्घव्यावृत्तिर्विशेषणस्य फलमिति बोध्यम्। तथ परिभाषाशाभेन व्याख्यानमे-वोचितमिति भावः । दोदद्वित्यनेन थान्तस्यादेशस्यविधानमेवेत्यत्र भाष्यस-म्मतिमाह। तान्ते दोष इति। ध्वनितत्वादिति। तत्र द्विवचहभिरित्यत्र नलोपे कृते ऐस्भावस्य प्राप्तौ सन्निपातरिभाषया तद्वारणरूपस्य प्रयोजनस्य नलोपः सुप्स्वरेत्यनेन नलोपासिद्धत्वेन वारणेनान्यथासिद्धिः कृता न त्वसि-द्धस्य सन्निपातविघातकपदेनाग्रहणमित्यर्थप्रदर्शनेन ध्वनितमित्यर्थः । भाष्य-कारेण दान्तत्वे निष्ठानत्वस्य धान्तत्वे धत्वप्राप्तिरिति यदुक्तन्तस्योपपत्ति-माह ।जग्धमित्यादाविति । अच उपसर्गात्तः । तस्यैवानुवर्तमानङ् घोरि-ति विशेषणम् । अत्राच इति पदमावर्तते एकमुपसर्गस्य विशेषणन्तेन-तदन्तविधिः द्वितीयमादेशस्य तकारस्य स्थानिबोधनाय । अन्यथोपसर्गादि-तिपञ्चमीनिर्देशादादेःपरस्येति स्यादिति भावः । इति भाष्यमिति। तत्र हि द्यतेरित्वादचस्त इत्येतद्भवति विप्रतिषेधेन द्यतेरित्यस्यावकाशः निर्दित्तन्निर्दि-त्तवान् अचस्त इत्यस्यावकाशः प्रत्तम् अवत्तम् । इहोभयम्प्राप्नोति नीत्तम् वीत्तम् अचस्त इत्येतद्भवति विप्रतिषेधेनेत्युक्तम् यद्यपि दद्भावस्येत्वमपवा-दस्तथापि तदत्तत्वमप्यपवाद इत्यपवादयोर्विप्रतिषेधे परत्वात्तत्त्वाम्प्रवर्तत इति भावः। कपिष्ठलोगोऽत्रे । गोत्रेऽभिधित्सिते कपिष्ठल इतिनिपात्यते। यः कपिष्ठलशब्दो गोत्रप्रत्ययप्रकृतित्वेन इष्ट इति यावत्। भाष्यस्वरस इति। त-त्र हि कपिष्ठलः कापिष्ठलिः कापिलायन इतिरूपस्य गोत्रे यनिच सिद्धये क-पिष्ठलोगोत्रप्रकृताविति वार्तिककृतोक्तम्। इदञ्च वार्त्तिकं यो इष्टइत्यस्याध्या-हारेण प्रत्याख्यातमिति त्वन्यत्। क्तोऽधिकरणे च । अत्र चाद्यथा प्राप्त-

मित्युक्तन्तत्र स्थैर्यार्थात्कर्तरि प्राप्तिं दर्शयितुमाह । प्रायेणाकर्मकाद् इति य-थास्थैर्यार्थक आस्धातुरकर्मकस्तस्माद्गत्यर्थाकर्मकेत्यनेन कर्त्तरि प्राप्तिः अ-यमेवाधिपूर्वश्चेत्तदा सकर्मकः एवमुपपूर्वश्च सकर्मकस्तदापि कर्त्तरि प्राप्तिः आशित ओदनन्देवदत्त इति । अत्र हि न कर्मणि प्रत्ययः । ओदनपदाद्द्वितीया-दर्शनात् । सकर्मकत्वाद्भावेऽपि न । कर्तरि त्वप्राप्त इत्याद्युदात्तस्येत दृशस्य प्रयोगस्येष्टत्वेनेत्यर्थः । अत एव प्रकृते कर्मणोऽविवक्षाया अभावादेव यदि त-था स्यात्तदा भावे प्रत्ययेऽयुक्तोऽर्यन्निर्देश इत्यप्युक्तम् स्यात् । ननु यदि गत्यर्थेति-सूत्रेणाविवक्षितकर्मकाणामकर्मकत्वे चेद्भावे प्रत्ययं कृत्वाऽच्प्रत्ययान्तस्य प्रयो-गस्तर्हि दत्तवानित्यर्थे दत्त इत्यपि स्यात् । कर्मक्तान्तान्मतुपि यथा दत्तवानिति भवति तथा तदन्तादजपि स्यात् । भावक्तान्ताद्वा तस्मिन्सति स्यादत आह । दत्तवानित्यर्थ इति । निष्ठाप्रसङ्गात्तत्सम्बन्धिकार्यजातं समुद्भाव्य प्रकृतं व्या-चष्टे सुयजोर्ङ्वनिप् । सुनोतेरिति । अत्रोभयपदिना यजिना साहचर्यात्सुनो-तेरेव ग्रहणन्न तु सु गतौ षुप्रसवैश्वर्ययोरित्यनयोः । जीर्ण इति । अत्र जॄधातोः कर्तरि प्रत्ययः । ध्वनितमिति । प्रकृतसूत्रभाष्य एव न च क्वसोर्वा वचनञ्छन्द-सि तिङोऽदर्शनादित्युक्तत्वेन ध्वनितमित्यर्थः । छन्दस्युभयथेत्यनेन त्वादेश-गतवैरूप्यमादाय लकारविषये वासरूपन्यायो न प्रवर्तत इत्येव ज्ञापनमिति भावः । यत्तु वृत्तौ छन्दसि लिट इतिसूत्राल्लिङ्ग्रहणानुवृत्तौ विभक्तिविपरिणा-मेन च सिद्धे पुनर्लिङ्ग्रहणेन लिट्सामान्यस्यादेशो ज्ञाप्यत इति प्रकृते वा व-चनमित्युक्तम् । तन्न प्रकृतभाष्यविरोधात् । तत्र हि कानच्क्वसोर्वा वचनञ्छन्द-सि तिङो दर्शनात् । छन्दसि तिङपि दृश्यते । अहं सूर्यमुभयतो ददर्श । अहं द्यावापृथिवी आततानेति । न वाऽनेन विहितस्यादेशवचनात् । न वा एतत्प्र-योजनमस्ति । किङ्कारणमनेन विहितस्यादेशवचनात् एवमुक्त्वा केन विहितस्या-देश इत्याकाङ्क्षायाञ्छन्दसि लुङ्लङ्लिट इति लिङः श्रवणम्भविष्यतीति समाधाय तदेतद्वाचनन्तिष्ठतु तावत्साभ्यासिकमित्युक्तम् । तत्र तदेतदितिप्रतीकमुपादायो-त्तरत्रोपयोक्ष्यत इत्युक्तं कैयटेन केचित्तु तस्य धातुसम्बन्धे विधाने नाधातुसम्बन्धे पक्षे भूतसामान्ये । लिट्स्थानिकतिङः श्रवणार्थमिदमावश्यकमित्याहुः । अक्नू-प्रकृतिकमुपरमितीति । अत्रापि प्रकृतसूत्रस्थभाष्यमेव मानम् ॥ तत्र हि असं-

योगाश्लिट् किदित्येव किन्त्वे सिद्धे कित्करणं संयोगान्तार्थमित्यभिधाय ह्र-
नस्य यद्ददधानस्य रोधसी त्वमर्णवान्ववद्धानामरम्णाः अद्भे: आजिवानित्यु-
दाहरणानि प्रदर्श्य छान्दसौ कानच्क्वसू लिट्च छन्दसि सार्वधातुकमपि
दितिङित्वादुपधालोपो भविष्यतीत्यभिहितम् । ववधानस्येति । वन्ध
बन्धने छान्दसत्वादभ्यासधकारस्य निवृत्यभावे भष्वाज्ज्ञश्भ्हसीति जश्
त्वम् । एतद्भाष्यग्रन्थेऽद्भे: आजिवानितिप्रयोगस्य छान्दसस्य प्रदर्शनेनाच्छ-
प्रकृतिकक्वसुपरमितिकल्प्यते। यदुक्तमेकाज्ग्रहणसामर्थ्यं लब्धमिति तदेतदुपपा-
दयति । तद्धीति । व्याख्यानादिति । भाषायां सदादिभ्यो वा लिड्वक्तव्यः कि-
म्प्रयोजनम् तद्विषये लुङो निवृत्यर्थमिति भाष्यकारोक्तिमूलकव्याख्यानादित्य-
र्थः । इ्यिवानिति । इण्धातोः क्वसौ द्वित्वोत्तरमभ्यासेन सह सवर्णदीर्घेऽस्य कृत-
द्वित्वैकाच्त्वसत्त्वादस्य कित्वादवसामितीड्ति भावः । पचति ब्राह्मण इति । न
च सामानाधिकरण्यमेकार्थविशेष्यकप्रतीतिजनकत्वन्तच्च प्रकृते नास्ति प्रत्य-
यार्थकर्तृविशेषणत्वादिति वाच्यम् । काल्पनिकस्य प्रथमासामानाधिकरण्य-
सत्वात् । यथा शतृशानच्प्रत्ययान्तस्य प्रयोगे सति प्रधानभूतयोः कर्तृकर्मणोः
प्रतीतिर्न तु लकारस्य प्रयोगे इति लटोऽप्रथमान्तेन सामानाधिकरण्ये इत्यनु-
वादोऽनुपपन्न इति प्रक्रियादशायांकल्पिते स्थानिनि लकारेऽप्रथमासामाना-
धिकरण्यमपि कल्पितं शास्त्रप्रवृत्तिनिर्वाहकन्तथा च कृदन्ते सत्त्वप्रधानानि
नामानीति वचनात्कर्तृकर्मणोः प्राधान्यदर्शनेनायं लकारः प्रधानकर्त्राद्यभि-
धायकस्तथा विधाऽनुवादविषयत्वादित्यनुमानेन कृदन्तदृष्टान्तेन काल्पनि-
कमेव तत्प्रक्रियानिर्वाहकन्तादृशकल्पना प्रकृते चाहार्या संभवत्येव । जाते
त्व देशे भावप्रधानमाख्यातमितिवचनेन श्रूयमाणप्रत्ययार्थस्य तिङन्तु विशेष-
णत्वं कृत्सु विशेष्यत्वमिति स्वन्यत् । वस्तुतस्तु सामानाधिकरण्यं समानार्थक-
त्वमात्रन्न तु तत्र प्राधान्यनिवेश इति नाहार्यायास्तस्याः कल्पनेति बोध्यम् ।
क्व चिदित्यस्य लाभस्तु नञ्वोर्विभाषेतिसूत्राद्विभाषापदानुवृत्याऽनयोरादेशयो-
र्विकल्पेन प्रवृत्या कल्प्यते सा चानुवृत्तिः सम्बन्धानुवृत्यो मण्डूकगतिवद्वा
कार्या । प्रथमासामानाधिकरण्येपि क्व चिदित्यस्य लाभः पुनर्लड्ग्रहणस्य क-
रणेन दर्शिता सा न शब्दाधिक्यादर्थाधिक्यमितिकल्पनया किन्तु पुनर्लड्ग्रहणे-

न पुनर्विधिः । स हि पूर्वेण विधिनाऽप्राप्तेपि विषये प्रवर्त्तते इति वृत्तिकारीत्या व्याख्यातः ।भाष्ये त्विति । अयम्भावः । यदीह लट्ग्रहणन्न स्यात्तदाऽस्य प्रत्ययान्तरत्वन्न स्यात्तया च कर्त्तरीत्यस्योपस्थित्या कर्मत्वभावापत्तिरतो योगविभागेन लट् एवस्थानेऽयमादेशो विधेय इति । सम्बोधने च ॥ प्रथमासामानाधिकरण्येऽप्ययम् । सम्बोधनविषये लटः शतृशानचौ स्तः । लक्षणहेत्वोः॥ यथायथन्योत्यं लक्षणत्वादेर्दर्शयति ॥ शयनमित्यादिना ॥ एवञ्च परिचायकशयनकर्तृपवनाभिन्नानेककर्तृका वर्त्तमाना भुजिक्रियेति बोधः । प्रथमात् ॥ द्वितीयात्तु फलभूतार्जनकर्तृकर्तृको वास इति तृतीयाच्च जनकहरिदर्शनाश्रयनिष्ठो मोक्ष इति बोधः ॥ अर्जयन्पुरुष इतिरीत्या प्रथमासामानाधिकरण्यबोध्यम् । विदेः शतुर्वसुः । अत्र विदेरितिनिर्देशस्य समानत्वेऽपि वेत्तेरेव ग्रहणमित्यत्र मानमाह ॥ सत्त्यादिना । शतृप्रत्ययस्योगित्वात्स्थानिवद्भावेनैवोगित्कार्ये सिद्धेऽस्योगित्वं वसोः सम्प्रसारणमित्यत्र ह्वसोरपि ग्रहणार्थमन्यथाऽस्य संग्रहार्थं वस इति कथनीयम् ॥ तथा सति निरनुबन्धकत्वादस्यैव ग्रहणं स्यात् ॥ एवन्निर्देशे तु तदनुबन्धकपरिभाषा न प्रवर्त्तते उकारोच्चारणसामर्थ्यात् ॥तौ सत् ।शतृशानज्मात्रे। मात्रशब्दोऽत्र कार्त्स्न्ये । तेन लटस्थानिकत्वरूपधर्मपरित्यागेन स्वरूपमात्रं शतृशानचोः संज्ञीत्युक्तम्भवति । एतत्फलमाह । द्विषन्नित्यादि । द्विषोऽमित्रे । लृटः सद्वेतिसूत्राभ्यां विहितावेतौ । प्रकृतसूत्रे भाष्यकृतैवैतदुक्तम् । तौग्रहणं क्रियतेऽसंसर्गार्थमिति । वर्त्तमानत्वादिविशेषणासंसृष्टयोरपि सङ्ग्राहार्थमित्यर्थः । लृटः शङ्का । लृट इत्यनेन भविष्यदधिकारे विहितो यो लृट् शेषे चेति लृट् स एव गृह्यते । स्पष्टञ्चेदमनवक्लृप्त्यमर्षयोरितिसूत्रभाष्ये । तत्र ह्यकिंवृत्तेऽपीत्यस्योपपदसंज्ञारूपप्रयोजनमभिधाय किम्प्रयोजनमिति प्रश्ने उपपदमतिङिति समाससिद्धिरित्युक्तेऽतिङिति प्रतिषेधात्समाससिद्धिर्न प्रयोजनमित्यभिधाय यदा तर्हि लृटः सत्संज्ञं भविष्यतीति प्रयोजने परेणाभिहिते सिद्धान्तिनोक्तम्भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्यते अविशेषविहितस्यायमिति । तदेतदाह । भाष्ये स्पष्टमिति । पूङ्यजोः शानन् अयं स्वातन्त्र्येण विधीयते न तु लृटः स्थाने । लृटः इत्यस्याननुवृत्तेः । कर्त्तरि चायम् । तौ सदितिसूत्रे भाष्ये पूङ्य-

नोः शानन् । ताच्छील्यवयोवचनशक्तिषु चानश् ।इङ्धार्योः शत्रकृच्छ्रिणीतिविहितप्रत्ययान्तरत्वं लादेशत्वं वेतिविचारेऽलादेशत्वं व्यवस्थाप्य सोमम्पवमानः । नटन्निघ्नान इत्यादौ कर्तृकर्मणोर्विहितषष्ठ्या लादेशयोगे निषेधः सोऽत्र न प्राप्नोतीत्याशङ्क्य लटः शतृशानचावितिः॥तृशब्दमारभ्य तनो मकारात्तृन्निति प्रत्याहार इत्याश्रयणेन तन् ग्रहणेनैतेषामपि ग्रहणेन न लोकेतिनिषेध उक्तः तेनैतः प्रत्यया न्तरमेवेति सिद्धम् ॥ ताच्छील्यवयोवचन ॥ अयम्परस्मैपदिभ्योपि ॥ लादेशश्चैवात्मनेपदसंज्ञाविधानात् ॥ अत एव शत्रुं निघ्नान इत्यस्य सिद्धिः । ताच्छील्यन्तत्स्वभावता । यथावहवोऽत्र मण्डयमानाः । अनेकेऽत्र पठमाना इत्यादौ । वयोवचन इत्यस्य वयोविशेषस्य प्रतिपादन इत्यर्थः । यथा कवचम्बिभ्राणा इत्यादौ यौवनादिरूपा शरीरावस्था प्रतीयते । शक्तिः सामर्थ्यम् । सा यत्र गम्यते तत्र चानश । यथा शत्रुन्निघ्नाम इत्यादौ । सुञो यज्ञसंयोगे । सुञः शतृप्रत्ययः स्यात् । यज्ञेन संयुक्तं कर्तरि शक्रान्तश्च वृत्तिश्चेत् । संयोगइत्यत्रकर्मणि घञ् अत्र सुञो यज्ञे इत्येव यज्ञविषयस्तेत्सुनोत्यर्थ इति व्याख्यया सिद्धे संयोगग्रहणाद्यत्र प्रधानकर्त्तारोऽभिधीयन्ते तत्रैवानेन योगेन प्रत्ययः तादृशमत्र याग इत्याशयेनाह । मूले सर्वे सुन्वन्तः । सर्वेयजमानाः । यज्ञयोग इति किम् । आङ्क्ते स्तच्छी । अत्र आङ भिव्याप्तौ तच्छब्दो धात्वर्थस्य परामर्शकः । भाष्ये स्पष्टमिति ।तत्र ह्यन्नावित्यस्य कर्तरि भुव इतिसूत्रे ऽनुवर्त्तमानस्याव्वीभवितेत्यत्र भूधातोः खिष्णुजनुत्पत्तिरूपमप्रयोजनमुक्त्वा अथेदानीमनेन उक्तो ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवतीति प्रश्ने रूढ़िशब्दप्रकारास्ताच्छीलिका न च रूढ़िशब्दा गतिभिर्विशेष्यन्ते न हि भवति देवदत्तः प्रदेवदत्त इत्युक्तम् ॥ ताच्छीलिक इष्णुज्भुवर्श्चेतिसूत्रविहितः रूढिशब्दप्रकारो रूढिशब्दसदृशाः ॥ यथा रूढ़िशब्दानां गतिभिः सम्बन्धो न भवति । तथा ताच्छीलिकेष्वपि अयमत्र विशेषः ॥ ये अत्यन्तं शब्दा एवं ते अतताप्यवयवार्थेन व्युत्पाद्यन्ते ॥ क्वचित्तु अवयवार्थसद्भावेऽपि । यथा गायक इति ताच्छीलिका अपि क्रियाविषयन्ताच्छील्यमुपादाय प्रवर्त्तन्ते क्रियाविशेषाभावेपि । कामुक इति । अत्र गतिसम्बन्धो न भवति । न हि भवति प्रकामुक इति । क्वचित्तु गतिभिः सम्बन्धो भवति । आगामुकः

प्रवर्षुक इति यथा । अत एवोक्तम्प्रायेणेति । यत्र तु सोपसर्ग एव रूढिशब्दास्तत्रापि वाह्येन गतिना न भवति सम्बन्धः । यथा व्याघ्र इति । अत्र प्रव्याघ्र इति न भवति । शीलं स्वभावः । फलांशविषयकाकाङ्क्षाराहित्यम् । सा शीलं यस्येति बहुव्रीहिः । तद्धर्मा । तत्क्रियाचारकर्ता । अत्रैतत्क्रियाचरणम्मम धर्म इति ज्ञानम्प्रयोजकम् । साधु कारी तु तौ विनापि यो धात्वर्थं साधु करोति सः । कर्ता कटानिति । ताच्छीलेऽत्र कृधातोस्तृन्प्रत्ययः । अलंकृञ्निराकृञ् । अत्र कृञ्ग्रहणेन प्रसिद्धत्वात्करोतेरेव ग्रहणम् । उत्पचादिषु प्रत्येकसुदः पाठो नियमार्थः । तेनोदः प्रयोग एवेष्णुच् । उत्तरार्थ इति । भुव इत्यस्यैव ग्लाजिस्थेतिसूत्रे चकारेण संग्रहार्थः । भाष्य स्वरस इति । प्रतिपादितमेतत्प्राक् । स्पष्टप्रतिपत्तये इह तमेवाह । तत्र हीति । इतिभाष्यमिति ॥ विनुणकर्मकानामित्येवन्तत्रोक्तम् ॥ विनाशेत्यत्र ख्यन्तविनाशेः कृतणिलोपेन निर्देशः । अकारउच्चारणार्थः । मूले ण्वुलासिद्ध इति । असूयतिभिन्नेभ्य इत्यादिः । अन्यथाऽत्र स्वरे विशेषसत्त्वेन ण्वुला सिद्ध इत्युक्तिर्विहता स्यात् ॥ अनभिधानमिति । अत्र प्रमाणम्प्रकृतसूत्रस्थभाष्यमेव ॥ तत्र हि पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरितिसिद्धत्वादित्यभिधाय अयम्पदेरुकञ्विधीयते लषपतेति स विशेषविहितसामान्येविहितं युचम्बाधेतेति प्रतिपाद्य एतज्ज्ञापयत्याचार्यस्ताच्छीलिकेषु ताच्छीलिका वासरूपेण नभवन्तीति प्रदर्शितम् । यदि सकारादपि पदेः स्यात्तदा ज्ञापकत्ववर्णनमसंगतं स्यात् । ज्ञाप्यते इति । निन्दहिंसेतिसूत्रे वासरूपविधिना टजादयो नेत्युक्तमिह तु परस्परं स नेत्यभ्युवधायीति विशेषः । शीङो वाच्य इतीति नेदम्वार्त्तिकम् । किन्त्वर्थसिद्धमित्येतत्प्रतिपादयति । लुश्प्रत्ययइत्यादिना । प्रयोजनाभावादिति । न च स्वरे विशेषः । यदिलस्येत्संज्ञा स्यात्तर्हि शपि सत्येकादेशे च कृते एकादेश उदात्तेनेतिसूत्रेणोदात्तत्वे विशेषाभावस्य स्पष्टत्वात् । लुशो यादित्वेनापीत्संज्ञा व्यावर्त्तयितुं शक्या । इदं सिद्धमितीति । इदमुपलक्षणम् । कृपालुस्पर्द्धालुशब्दयोरप्येवं सिद्धिः । दाधेट्सिशदः । दा इतिप्रयोगस्थदारूपाणामनुकरणम् ॥ कर्मकर्त्तर्येवेति ॥ स्वभावादिति शेषः । तेन । आदित्यत्र दकारस्य सत्त्वेन ॥ तपरत्वे ऋकारस्य तात्परत्वादकृस-

स्यैव ग्रहणं स्यात् ॥ जागरूकः ॥ अधुनेतिवत्समुदायस्य निपातनेन सिद्धे स्वातन्त्र्येण ऊकस्य विधानमुत्तरार्थम् ॥ मूले भाविनेति ॥ यङि कृतेजायमानस्येत्यर्थः ॥ वावदूकशब्दस्तूणादिप्रत्ययान्तः । स्वरूपावाधेन । प्रत्ययस्वरूपाबाधेन । न चैवङ्कि प्रत्यत्यत्घटककाकारस्येत्वमपि न स्यादिति वाच्यम् ॥ तत्तुरिर्जगुरिरितिभाष्योदाहरणादित्वस्य प्रवृत्तेः ॥ अत एव स्वरूपाबाधेनेत्यपि लब्धम् ॥ अस्मिन्सूत्रे भाष्ये उत्सर्गश्छन्दसि सदादिभ्यो दर्शनादिति ॥ तेन सेदिः नेमिरित्यादि सिध्यतीत्युक्तम् ॥ यद्यप्यादितिसूत्रच्छान्दसकार्यप्रदर्शकप्रकरण एवोपन्यसनीयन्तथापि भाषायामिति वार्त्तिकं लौकिकप्रयोगाणां साधुत्वान्वाख्यापकमिति तत्खण्डनाय प्रकृतेऽस्य लेखः ॥ स्पष्टम्भाष्य इति ॥ एवमेव स्पष्टमित्यर्थः ॥ मूलरीत्यान्वाख्याय सिद्धान्ताभिप्रायेणाह ॥ वस्तुतस्त्विति । ननु भाष्ये दृणातेश्च स्पष्टमुक्तमिति दीर्यतेरित्यनुपपन्नमत आह ॥ दीर्यतेर्वेति। तत्र हि ददत् दृणातेर्दीर्यतेर्वेति पठितम् ॥ विपरीतनियम इति ॥ संज्ञान्तरयोरेव क्विविति नियम इत्यर्थः ॥ विधेयसंकोचापत्तेरिति ॥ यत्रैवकारस्ततोऽन्यत्र नियम इत्यस्य सिद्धत्वेन विधेयस्य क्विपः संकोचापत्तेरित्यर्थः ॥ अत्र संज्ञात्वन्न यावद्द्रव्यभाविसंज्ञा तुल्यङ्किन्तु व्यक्तिविशेषसम्बन्धित्वमेव ॥ व्याख्यानादिति ॥ कर्मण्यणितिसूत्रानन्तरमेव धः ष्ट्रन्नितिवक्तव्येऽत्र प्रकरणे पृथगेतादृशसूत्रकरणमूलकव्याख्यानादित्यर्थः । तादृशपाठे यद्यपि दाम्नीतिसूत्रे पुनः ष्ट्रन्ग्रहणमावश्यकन्तथापि लाघवमस्त्येवेति भावः । दाम्नीशस् । अत्र दशेति कृतनलोपस्य दंशधातोर्निर्देशेनाङ्कित्यपि क्वचिदस्य नकारो लुप्यते तेन दन्तेषु दशना इति प्रयोगः सिध्यति । न च निपातनस्य वाधकत्वमेवेति सर्वत्रैवास्य नलोप इति दंष्ट्रेत्यनुपपन्नमिति शङ्क्यम् । शुनो दन्तदंष्ट्रेतिसूत्रनिर्देशेन क्वाचित्कत्वस्यैव कल्पनात्।दंष्ट्राशब्देऽजादित्वाट्टाविति प्रागुक्तम् । व्याख्यानादिति । व्याख्यानादिति । दात्रनेत्रादीनामकरणोपपादानामपि प्रयोगदर्शनमूलकव्याख्यानादित्यर्थः । यदुक्तं हल्येति तदभिप्रायमाह । एवमन्वय इति भाष्यस्वरस इति । तत्र हि कर्त्तरिक्वादितिसूत्रस्य तत्र भव्याद्यर्थमित्यनेन भव्यगेयेतिसूत्रेण विधीयमानस्य प्रत्ययस्य कर्तर्यपि कर्त्तरिक्वादिति सूत्रसहायेन प्रवृत्यात्मकम्प्रयोजनमभिधाय ऋषिदेवतयोस्तु कृद्भिः समावेशवचनं

ज्ञापकमसमावेशस्य यदयं कर्त्तरि चर्षिदेवतयोरिति सिद्धे समावेशे समावेशार्थं चकारङ्करोति तज्ज्ञापयत्याचार्यो न समावेशः ॥ अत्र समावेशः करणरूपेणार्थेन बोध्यः ॥ एवमुपपाद्य भाष्यकारेण वार्त्तिककारोक्तिर्यत्तावदुच्यते ऋषिदेवतयोः कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्येति नैतज्ज्ञापकसाध्यमपवादैरुत्सर्गा बाध्यन्त इति ॥ एष एव हि न्यायः । यदुतापवादैरुत्सर्गा बाध्येरन्नित्युक्तम् ॥ यदि तत्र यथासंख्यमभिप्रेतं स्यात्तदा चकारसद्भावे सति तस्य सम्भवादेवमुक्तिरसंगता स्यात् ॥

## ॥ इति पूर्वकृदन्ताः ॥

अथावसरसङ्गत्योणादिप्रत्ययविषये विशेषमाह ॥ अथोणादय इत्यादिना ॥ निरूप्यन्ते इति शेषः ॥ तत्रापि ॥ कल्पितावयवार्थकल्पनायामपि ॥ अन्यत्रेति ॥ वर्त्तमानकालातिरिक्तकालेनेत्यर्थः ॥ इदम्भाष्यम् ॥ अन्यकाले आहन्तेति वृजन्तधातुत्वाख्यानपरम् । व्याकरणान्तरादिति ॥ व्याकरणान्तरोक्तानामप्येषां साधुत्वे चानुमानमेव प्रमाणम् ॥ उणादिप्रत्ययाः साधवः पाणिनिकर्तृकानुवादविषयत्वादिति ॥ अत एव ॥ व्याकरणान्तरीयऽत्वेपि साधुत्वस्याभिप्रेतत्वादेव ॥ प्रयोजनमिति । भाष्यकृतेति शेषः ॥ अत्रप्रकृतेस्तनुदृष्टेरितिप्रयोगाद्विभाषा गुणेऽस्त्रियामित्यस्य क्वचित्स्त्रियामपि प्रवृत्तिः । एतदेव वचनम् व्याचष्टे । शास्त्रान्तर इति ॥ नैरुक्तादयः ॥ एतच्छास्त्रम् ॥ एतच्छासितव्यम् । पाणिनीयसूत्रार्थमाह । उणाद्यन्ता इति । एतावतैव कृतमिति । पाणिनिनेति शेषः ॥ नन्वव्युत्पन्नत्वे सर्पिरागच्छेत्यत्र रेफः सर्पिषेत्यत्र षकारश्च दृश्यते सोऽनुपपन्नः प्रत्ययावयवत्वाभावादत आह । सर्पिषेति । अत एव । एतेषामव्युत्पन्नत्वादेव ।तद्रीत्यैवेति ।व्याकरणान्तररीत्यैव । अत एव ।अव्युत्पन्नत्वादेष । तेषामिति । क्विब्वचीत्यादिसूत्राणामित्यर्थः। अत एव । तेषां पाणिनीयत्वाभावादेव । ननु यौ परत इत्यनुपपन्नम्। युप्रत्यस्य पाणिनिमतेऽभावादत आह । युश्चेति । उणादिप्रत्ययान्तानामव्युत्पन्नत्वस्वीकारे भाष्यविरोधशङ्कां वारयति । यत्त्विति । तस्य भाष्यस्य व्याकरणान्तरानुसारित्वे दृष्टान्तमाह । यथेति ॥

अन्तरङ्गपरिभाषाया इति। अस्य दोषः शङ्कित इत्यत्रान्वयः। भाष्यकृतेति शेषः। एवं हि तत्रोक्तम्। यणादेशादियुवौ। यणादेशादियुवावन्तरङ्गतोऽभिनिर्वृत्तान्न प्राप्नुतः वैयाकरणः। सौवश्व इति। लक्षणा हि भवति द्वयोरचि वृद्धिप्रसङ्गे इयुवौ भवत इति। शेजदोषः। अनवकाशावियुवौ। अचीति चावश्यकम्। श्रेयमधःश्रेयङ्गव इत्येवमर्थमिति। प्रसङ्गाद्व्याकरणान्तरे लक्षणं विचारयितुमाह। यणादेशा दिति। नकपीतिसाहचर्येणेति। कपिपरेऽणतद्धितपरकएवेत्यर्थाधिकारात्केणइतिसूत्रेऽप्यणतद्धितककारपरक एव ग्टह्यत इति भावः। लोष्टपलिती। लुशेर्लोष्टमिति भाष्यमिति। स्थानेन्तरतम इतिसूत्रे भाष्ये लोष्टः क्षिप्तो वाहुवेगं गत्वे तिभाष्यप्रयोगाल्लोष्टशब्दोऽर्द्धर्चादिः। पलितं शैलजे तापे केशपाके चकर्दमे। दर्भाङ्कुर इत्युपलक्षणम्। पुलिङ्गस्य रोमाञ्चेपि दर्शनात्। सूची तु सीवनद्रव्ये ऋङ्क्किोऽभिनयान्तर इति। ऋङ्क्को रोमाञ्चः॥ प्रागुक्त इति। एवञ्चतन्मते प्रकृत सूत्रे ठेत्येव पाठः। षन्ढस्तु वाहुलकात्। लोत्रं चौरचिन्हं। भाष्ये उक्तमिति। एवञ्च वाहुलकत्वेन तथाप्यस्य साधनं वोध्यम्। अगस्तिरित्यत्रागशब्दे उपपदेऽस्धातोस्तिप्रत्ययो वाहुलकादित्यादिशयेन सूत्रेऽसावुक्तः प्रकारान्तरेणापि तस्य सिद्धिमाह। अत्रे ति। द्वयोः। अगस्तिशब्दागस्त्यशब्दयोः। आद्यस्ये ति। रूपमिति शेषः। अगस्त्यशब्दस्य प्रकारान्तरेणापि तस्य सिद्धिमाह। अगस्तिशब्द इति। अयतेः स्वाङ्गे शिरः किच्च। शिरः शिरसी। श्णातेर्घञर्थे के इकारादेशेऽदन्तोऽप्ययम्। अत एव पिण्डं दद्याद्गयाशिर इत्यपि साधु। वृङ्शीभ्यां रूपस्वाङ्गयोः पुट् च। शपो गुह्यमिति। वाहुलकात्प्रत्यये शेपशब्दोऽदन्तोऽपि॥ यस्यामुशन्तः प्राहराम शेपम्। नहेर्दिवि भश्च। नहधातोरसुन् भश्चादेशः॥ नभो व्योम्नि नभो मेघे श्रावणे च पतद्गृहे। प्राणे मृड़ालसूत्रे च वर्षासु च नभः स्मृतः। पतद्गृह इत्यस्य पततः कफादेर्गृह इत्यर्थः। पीकदानीतिलोके। मिथुनेऽसिः। धातूपसर्गयोर्योगे सतीण्धातोरसिप्रत्ययः स्यात्। पुरूरवाः पुरूरवस्शब्दो निपात्यते इत्यर्थः। अप्सराः॥ प्रायेणायं भूम्नि। स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः। ध्वनितमिति। एकवचनान्तप्रयोगेण ध्वनितमित्यर्थः। विदिभुजिभ्याम्। आभ्यामसिः स्यात्। विश्ववेदाः। विश्वं वेत्तीति विग्रहः। विश्ववेदास्तनूनपात्। विश्वभोजाः। विश्व-

भोजा: शत क्रतु: । वृञ्लुटितनिताड़िभ्य उलच् । लश्चेश्च । अयमन्तोदात्त: । पूर्वस्तु मध्योदात्त इति पुनर्व्युत्पादित: । शीङो ह्रस्वश्च । शिखा शाखा वह्नि-चूड़ाचूड़ामात्रेऽपि । चूड़ामात्रे शिखायाश्च ज्वालायां प्रपदेऽपि चेतिदर्शनात् । जनेष्टन्लोपश्च ।जटा ।जटालग्नकचे मूले मांस्यां स्त्री पुनर्जटी ।उणादयो बहुलम् । अत्रोणादिशब्देनाष्टाध्याय्यामितत्सूत्रोत्तरसूत्रैर्विहितानाम्प्रत्ययानाङ्ग्रहणमिति-शङ्कावारणायाह । अत्रोणादीति । मूले केचिदविहिता अप्यूह्या इत्यादिना यथा ऋलृक्सूत्रभाष्ये लृकारोपदेशस्य प्रयोजनकथनावसरे चतुष्टयीशब्दाना म्प्रवृत्तिरित्येतत्पत्रोपष्टम्भेन लृफिड़लृफिड्डशब्दयो: परतो लृकारोपदेशे सति यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थइत्यनेन यदृच्छाशब्दे प्रयोजनमभिधाय त्रयी शब्दानाम्प्रवृत्तिर्न सन्ति यदृच्छाशब्दा इतिकथनोत्तरमर्त्ति प्रवृत्तिश्चैव हि लोके दृश्यते तस्मात्फिड़फिड्डावौणादिकौ प्रत्ययावित्युक्तम् ॥ संज्ञासु अनादिभूतासु कोशादिप्रसिद्धासु ॥ कार्यात् ॥ गुणनिषेधादिकार्यात् ॥ एत दुणादिषु शास्त्रं शासितव्यमित्यर्थ: ॥ न चवर्तमान इतिसूत्राद्वर्तमान इति नानुवर्त्तनीयमेवञ्च भूतादौ सिद्धिर्भविष्यत्येवेति भूतेऽपीत्यादि न कार्यमिति वाच्यम् । प्रायेण वर्त्तमान एव क्वचिदेव तु भूते भविष्यतिवेति व्युत्पादनाय पुन: सूत्रारम्भात् ॥ तुसुन्ण्वुलौ क्रियायाम् ॥ अत्र क्रियार्थायामित्येव क्रियाया लाभे पुन: क्रियायामित्युपादानात्साध्यमात्रस्वभावायेतराविशेषणतया भासमाना क्रिया तद्वाचकस्य ग्रहणम् ॥ तेन भोक्तुं पाक: ॥ भोक्तुम्पाचक इति च न । नचैवम्भोक्तुम्पचति पश्येत्यत्राव्याप्तिरिति वाच्यम् ॥ क्रियायामित्यनेन क्रियाया एवोपस्थितौ तस्या उपपदत्वासम्भवेन तद्वाचकप्रकृतिके लक्षणावश्यं कार्या एवञ्च तद्वाचकप्रकृतिमात्रजन्यो य: पदार्थोपस्थित्यात्मको बोधस्तत्कालिकस्यैवे-तराविशेषणत्वस्य ग्रहणात् । तदेतदाह । क्रिया चात्रेत्यादिना । पुनर्ण्वुलोक्ते-रिति मूले उक्तन्तदसङ्गतम् । यद्यत्र तेन शास्त्रेण ण्वुल् स्यात्तदा भविष्यत्व-स्याप्रतीतेरकेनोर्भविष्यदाधमर्ण्ययोरित्यत्राकप्रत्ययान्तस्य योगेषष्ठीनिषेध: स्यादित्यत्र ण्वुल्ग्रहणमावश्यकमेवञ्च भविष्यदधिकारविहितस्येति लभ्यत इति केचित्तन्मतन्दूषयति ।अकेनोरित्यत्रेति। न फलमिति ।इन्साहचर्येण भविष्यत्व-वाचकस्याकस्तत्रग्रहणादिति शेष:।पुनर्ण्वुलुक्तेरित्यस्य तु प्रकृतसूत्रे ण्वुल्ग्रह-

णाभावेप्यकान्तमात्रन्ते न खुला सिद्धमित्यत्र तात्पर्यम्। न चेह खुलग्रहणेऽपि क्रियावाचकप्रकृतिके तेन खुल्स्यादिति वाच्यम्। वाक्यसंस्कारे तादृशस्थलेऽनेनैव खुलः स्वीकारात्। यत्र स्वातन्त्र्येणाकप्रत्ययान्तस्यसाधनोत्तरं वाक्यस्य प्रयोगस्तस्याकस्य सम्भवेऽपि न तत्र षष्ठीव्यावृत्त्यर्थन्तथा व्याख्यानमित्याशयेनाह। न चेत्यादि। ननु यथा तृज् न तथा ल्युड़पि न स्यादत आह। ल्युट् त्विति। अत्रेदम्बोध्यम्। यद्यप्यनेन सूत्रेण खुल्वत्तुमुनोऽपि विधानन्तथाप्ययस्भावे अव्ययकृतो भाव इतिवाचनात्। अत एव तुमर्थाच्च भाववचनादित्यत्र तुमर्थादित्यनेन भाववचनत्वे लब्ध इति व्याख्यातम्। प्रकृते च भावोऽसत्वभूत एव। अव्ययार्थे लिङ्गसंख्यादीनामनन्वयात्। तुमनन्तार्थस्य चोपपदार्थक्रियायां स्वोद्देश्यकत्वस्वसमानकर्तृकत्वोभयसम्बन्धेनान्वयः। एवञ्च कृष्णन्द्रष्टुं यातीत्यस्मात्कृष्णकर्मकभविष्यद्दर्शनविशिष्टं यानङ् कृष्णन्दर्शको यातीत्यस्मात्तु कृष्णकभविष्यद्दर्शनकर्तृकर्तृकन्ताहशदर्शनविशिष्टं यान मिति च शाब्दबोधः॥ कर्तरि कृदितिशास्त्रेण खुलः कर्त्र्यर्थकत्वप्रतिपादनेन कर्तुः प्रकृत्यर्थम्प्रति प्राधान्यात्॥ ननु यावत्पुरा निपातयोरितिसूत्रे यावत्पुरादिषु लट्विधिर्लुटः पूर्वविप्रतिषेधेनेति वार्त्तिककृतोक्तम्॥ यावभुङ्क्ते पुराभुङ्क्ते इत्यत्र लटोऽवकाशः श्वः कर्त्तेत्यादौ लुटोऽवकाशः॥ यावच्छो भुङ्क्ते इत्यत्र तु लुड़ेव। इदं च वार्त्तिकं यावत्पुरेतिसूत्रस्यानद्यतने लुड़ित्यत्रानुवर्त्य वाक्यभेदेन च सम्बन्धेन च यावत्पुरायोगे लटो विधानेन सिद्धा प्रत्याख्यातमेवञ्च तुसुन्ण्वुलावितिसूत्रस्यापि मध्यपतितत्वादत्रापि वाक्यभेदेन तत्सम्बन्धः स्यात्तथा च यावत्पुरायोगे भविष्यति क्रियार्थायां क्रियायां लड़ेव स्यादिति चेन्न। विभाषा कदाकर्ह्योरित्यत्रेवात्रापि तदसम्बन्धात्। मण्डूकप्लुत्या च तत्र तस्य सम्बन्धः। अत एव यावत्पुरेतिसूत्रेऽनद्यतनेलुड़ित्यत्रेति विशेष्योक्तम्। तुमुनः प्रसङ्गात्तुमुन्विधायकसूत्रान्तरमुपन्यस्तम्मूले॥ समानकर्तृकेषु तुमुन्॥ इच्छार्थेषु लिङ्लोटावित्यत इच्छार्थेष्वित्यनुवर्तते इच्छति भोक्तुम्। अत्र तुमुनन्तार्थस्य विषयतासम्बन्धेनेष्धात्वर्थम्प्रति विशेषणताऽस्ति तथैव भोजनविषयिणी इच्छेत्याकारकस्य शाब्दबोधस्यानुभवात्॥ न तु भोजनार्थत्वस्य प्रतीतिरिति पूर्वसूत्रेणाप्राप्तस्तुमुन्विधीयते। चिकीर्षति पिपचतीत्यादौ सर्वत्र

कर्तुमिच्छतीतिरीत्या यत्र विग्रहः क्रियते तत्र सर्वत्रायमेव तुमुन् ॥ वृत्तिविग्रहवाक्ययोः समानार्थकत्वस्य न्याय्यत्वेन सन्नन्तजन्यशाब्दबोधे सनर्थेच्छायाः प्रकृत्यर्थनिष्ठविषयतासम्बन्धावच्छिन्नविशेषणतानिरूपितविशेष्यतया प्रकृत्यर्थसमानकर्तृकत्वेन च यथा भानन्तथैव तुमुनन्तादपीति ॥ शकधृष ॥ अयमप्यक्रियार्थोपपदार्थ एवारब्धो योगः ॥ शक्नोति भोक्तुम् । धृष्णोति भोक्तुम् ॥ जानाति भोक्तुमिति ॥ शकधात्वर्थोऽनुकूलसामर्थ्यविषयकनिश्चयस्तद्घटकानुकूलत्वे निरूपितत्वसम्बन्धेन भुजधात्वर्थस्यान्वयेन भोजनविषयकस्य शकधात्वर्थस्यानुभवात् ॥ मुख्यविशेष्यतया भासमानो यस्तादृशो निश्चयस्तस्मिन् भोजनार्थत्वन्तु न शाब्दबोधविषय इति तुमुन्खुलावित्यस्याप्राप्तिः ॥ धृष्धात्वर्थोऽपि तादृशो निश्चय एव ॥ ज्ञाधात्वर्थे विषयतयाऽन्वयस्तु प्रसिद्ध एव ॥ तदुद्देशेनानुष्ठीयमानत्वं च तादर्थ्यं तस्याप्रतीतिरस्त्येव । भोक्तुं ग्लायति । ग्लानिः सामर्थ्याभावनिश्चयस्तस्मिन्नपि भोजनस्य विषयतयाऽन्वयः । भोक्तुं घटते अत्र घट्धात्वर्थो योग्यता सामर्थ्यनिश्चयवत्स्वरूपैव । भोक्तुमारभते । आरम्भश्चाद्या तद्विषयिणी कृतिरस्याभोजनविषयकत्वमसिद्धमेव । भोक्तुं लभते ॥ लभधात्वर्थः प्राप्तिस्तस्या भोजनसम्बन्धित्वन्न तु भोजनोद्देशेनानुष्ठीयमानत्वम् । भोक्तुं प्रक्रमते ॥ भोक्तुमुत्सहते ॥ उभयत्रापि भोजनविषयकाद्यकृतेरेव प्रतीतिः । भोक्तुमर्हतीत्यत्रापि योग्यताया एव प्रतीतिः । भोक्तुमस्ति भवति विद्यते वा । सर्वत्रास्त्यर्थे सम्बन्धित्वमात्रप्रतीतिः व्याख्यानमेवेति । शकधृष्धात्वोः पृथगुपादानमूलकव्याख्यानमेवेत्यर्थः ॥ एवमस्तीत्यस्य घिसंज्ञकत्वेनैतस्य पूर्वनिपाते कर्त्तव्ये तदकरणमपि मूलम् ॥ कालसमयवेलासु ॥ भोक्तुं कालोऽयमित्यादौ भुजधात्वर्थस्य कालिकसम्बन्धावच्छिन्नकार्यतानिरूपितकारणत्वात्मकयोग्यत्वस्यानुकूलप्रवर्तनाप्रयोजकनिश्चयविषयत्वोभयसम्बन्धेन काले विशेषणता ॥ ननु भूतानि पचन्तीतिप्रत्युदाहरणाद्वर्तमानत्वस्य धात्वर्थविशेषणतया प्रतीतिर्भोक्तुं काल इत्यस्मात्तु न तथेति कथमेतदित्यत आह ॥ अत्र धात्वर्थमात्रेति ॥ भाववचनाश्च ॥ भविष्यतीति क्रियार्थायाङ् क्रियायामिति चानुवर्तते । वक्ष्यमाणानां प्रत्ययानां घञादीनां विशेषविहितेन तुमुनाबाधाभावायेदं सूत्रम् ॥ न च वासरूपविधिनातेऽपि भविष्यन्तीति वाच्यम् । पूर्वसूत्रवटकाद्खुलग्रह-

तेन क्रियार्थायां क्रियायामुपपदे वासरूपन्यायेन ण्वुलादयो नेत्युक्तत्वेन घञ-पि न स्यादित्याशयात् ॥ न चायं तुमुन् यद्यपि भावे विधीयते तथापि घञ्-वाच्यो भावः सत्वभूतोऽयं त्वसत्वभूत इति कथमनेन घञो बाधस्य प्रसक्तिरि-ति वाच्यम् ॥ तादृशविशेषस्य स्फुटप्रतिपत्त्यर्थमेवास्य सूत्रस्य करणात् ॥ भाव-वचनशब्देन घञादीनामुपस्थित्यर्थमाह ॥ बाहुलकादिति ॥ प्रकृतसूत्रे वचन-ग्रहणादधिकार्थलाभ इत्याह ॥ न चेत्यादिना ॥ यागाय याति ॥ घञन्ताद्भा-वार्थमात्रस्य प्रतीतिस्तस्य धात्वर्थक्रियायामनुकूलत्वसमानकर्तृकत्वोभयसम्ब-न्धेन प्रकारतया शाब्दबोधे भानम् ॥ अण् कर्मणि च ॥ अनेन सूत्रेण विहि-तोऽण् कर्तरि भवति कर्तरि कृदितिसूत्रादेवञ्च क्रियार्थायां क्रियायां विशेष-विहितो ण्वुल्प्रत्ययोऽणो बाधकः स्यादित्यस्यारम्भः ॥ चस्य प्रयोजनमाह ॥ उपपदेति । सन्नियोगः । समुच्चयः। अत एव। अत्रवासरूपन्यायाप्रवृत्तेरेव ।एवञ्च ॥ अस्याणः स्वविषये बाधकस्यापि ण्वुलो बाधकत्वे च ॥ तत्र विशेषमाह ॥ पुनर-नुवादेनेति ॥ निषेधाप्रवृत्तिमात्रमिति ॥ अत एवोक्तं प्राङ् ण्वुलपीति ॥ एवम्। अस्य प्रतिप्रसवविधित्वे ॥ परत्वादित्यस्योत्कृष्टत्वादित्यर्थस्तदाह ॥ आवृत्त्येति। भाष्ये स्पष्टमिति ॥ तत्र हि यः कर्मण्यणितिसूत्रेणाण् विहितः स क्रियार्थायां क्रियायामुपपदे भविष्यतीत्यत्र च भविष्यतीत्याशङ्क्यापवादविषयेऽनिवृत्त्य-र्थमितिसमाधानोत्तरङ्गिमुच्यते ऽपवादविषयेऽनिवृत्त्यर्थमिति । न पुनरुत्सर्गवि षये प्रतिपदविध्यर्थं स्यात् इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वा-सरूपेण ण्वुलादयो नेति अण् चापि ण्वुलादिरिति पुनराशङ्कायामिवन्तद्युभय-मनेन क्रियतेऽपवादविषयेऽनिवृत्तिरुत्सर्गविषये च प्रतिपदविधानमित्युक्तम् ।त-तोऽपूर्वविधानापेक्षया प्रतिप्रसवे लाघवादुत्सर्गविषय एव काण्डलावो व्रजती-त्यत्र ण्वुलस्याधित्वाऽण् स्यादपवादविषये कम्बलदायो व्रजतीत्यादौ न स्या-दित्यभिप्रायेण कथं पुनरेकेन यत्नेनोभयं लभ्यमित्याशङ्कायां कर्मग्रहणसाम-र्थ्यादित्यभिधाने कथं पुनरन्तरेण कर्मग्रहणे कर्मण्यञ् लभ्य इतिपरेणाशङ्किते वचनग्रहणमपि प्रकृतमनुवर्तत इत्युक्तम् ॥ तेनावृत्तिर्ध्वन्यतेति भावः । सूले स्पृशतीति स्पर्श इति ॥ रोगविशेषस्य संज्ञेयम् ॥ सृ स्थिरे ॥ सरति कालान्त-रमिति सारः । सारांशस्य दृढत्वाच्चिरकालं स्थितिर्भवति । सरतेरित्यनेन भा-

दिजुहोत्यादिपठितयोर्ग्रहणम् ।स्थिर इति कर्त्तरि क्तदितिसूत्रोपस्थितस्य कर्तु-र्विशेषणमित्युक्तन्तेन स्थिरशब्दे उपपदे इति शङ्का निरस्ता ॥ सारो बलमि-तिमूलेभिहितमेतच्चहृत्यनुसारेणास्मिन्नर्थे सृधातुर्विलक्षणचेष्टानुकूलव्यापारा-र्थकः ॥ बलं हि विलक्षणचेष्टां कारयति ॥ वस्तुतस्तु नैतद्युक्तमित्याह । भाष्ये त्विति । तत्र हि बले शान्तसारः खदिरसार इत्यभिहितम् । यद्यपि घञजपाः पुंसीत्यनेन पुंस्त्वमस्य प्राप्तन्तथाप्यर्द्धर्चादिगणे पाठादुभयलिङ्गोऽयम् ॥ अत एव ॥ सिद्धावस्थापन्न इतिविशेषणादेव ॥ स्त्रियामिति विशेषणमिति ॥ कर्म-व्यतिहारे णच् स्त्रियामितिसूत्रघटकं यत्स्त्रियामिति तद्विशेषणमित्यर्थः । अत एव प्रकृतसूत्रभाष्ये पुल्लिङ्गेनैकवचनान्तेन निर्देशात्पुल्लिङ्ग एव भावे एकव-चने चैते प्रत्ययाः स्युः ॥ स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोर्नस्युरिति शङ्काया-मात्र निर्देशस्तन्त्रमित्युक्तम् ॥ सिद्धावस्थापन्न इत्यभिधानेन घञादिवाच्यस्य भावस्य धात्वर्थभावस्य वैलक्षण्यमभिहितम् ॥ अत्र मानन्तु क्रियान्तराका-ङ्क्षायानियमेवदर्शनमेव॥प्रत्ययेन सिद्धावस्थस्य भावस्याभिधानेपि प्रकृत्या साध्य-वस्थस्य तस्याभिधानं कारकान्वयानुरोधात्स्वीक्रियत एव ॥ अत्रेदम्बोध्यम् ॥ साध्यसिद्धत्वाभ्यां धर्माभ्याम्भावस्य भेदाद्द्वयोर्भावयोर्भेदेन विशेषणविशेष्यभावेन शाब्दबोधेमानमिति न किन्तु सिद्धत्वसाध्यत्वाभ्यामेकस्यैव भावस्य भानम् ॥ यथा सम्बन्धिभेदेनैकस्मिन्नेवपिता पुत्र इति च व्यवहारस्तथाऽत्राप्युभयोरेक-स्मिन्सत्वन्न तु तयोर्विरोधः ॥ एतयोरेकनिष्ठत्वान्न शाब्दबोधे स्फुटतया भा-नम् ॥ एकत्रैव साध्यत्वेन प्रकारता सिद्धत्वेन विशेष्यतेत्यपि केचित् ॥ युक्त-तरमत्रैकक्रियाया अन्वये पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्यु-त्पत्तिविरोधः स्यादेव । इकः काश इतिसूत्रस्य व्याख्यानावसरे इगन्तस्यैवेति यदुक्तन्तस्योपपत्तिमाह । अत्र वज्रीत्यनुवृत्त्येति । अवोदैधौद्म । अवपूर्वादु न्देर्घञ् नलोपश्च निपात्यते । राध इत्यत्रेन्धेर्घञि नलोपगुणौ निपात्येते । पु-गन्तेत्यनेन तु गुणस्य प्राप्तावपि न धातुलोप इतिनिषेधोऽन्यथा स्यात् ॥ ओद्म इत्यत्रौणादिके उन्देर्मनिन् लोपगुणौ ब्ध्यभावश्चेतिमूले प्रश्रिमान्यतरपूर्वस्य अश्ये रित्यादिः ॥ अकर्तरि च कारके संज्ञायाम् । अत्राकर्त्तरि चेतिचकारस्य संज्ञायामित्युत्तरयोजना बोध्येत्याशयेनाह ॥ प्रायिकमितीति । स्पष्टश्चेति तत्र

हि संज्ञाग्रहणमनर्थकमसंज्ञायामपि घञ् दृश्यते । को भवता लाभो लब्धः ॥ कोभवतादायो दत्त इति ॥ यदि संज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति कृतः कटङ्ग त्वत्र कारः कट इति प्राप्नोति । अतिप्रसङ्ग इति चेन्न।किङ्कारणम्।अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम् । अभिधानलक्षणाः कृत्तद्धितसमासाः अनभिधानान्न भविष्यतीत्युक्तम् ॥ परिमाणाख्यायाम् । परिमाणं परिच्छित्तिः ॥ इयत्ता ॥ आख्या उक्तिः ॥ एकस्तण्डुलनिचाय इत्यत्र ग्रहवृदृनिश्चिगमश्चेतिसूत्रस्यापरिमाणाख्यायामप्प्रत्ययविधायकस्य प्राप्तावप्यनेन बाधः ॥ कर्मण्यत्र घञ् ॥ निःशेषतो राशीकृयमाणस्तण्डुलसमुदायः ॥ निचाय इतिपाठे ल्वेरजित्यस्य प्राप्तिर्बोध्या ॥ द्वौशूर्पनिष्पावौ । निष्पूयतेतुषाद्यपनयनेनयः शोध्यतेतण्डुलादिः सनिष्पावः । ततः शूर्पशब्देन तृतीयान्तेन समासः ॥ अत्र शूर्पनिष्ठद्वित्वसंख्यया परिच्छित्तिर्गम्यते । द्वौ कारौ ॥ कॄ विक्षेपे इतिधातोः कर्मणि घञ् । विक्षिप्तो धान्यराशिः कारः ॥ अचम्बाधित्वा घञ् ॥ अत्र सर्वेभ्य इत्युक्तेः प्रकृत्याश्रयो यः प्रत्ययः प्राप्तः सोऽनेन बाध्यते । तेनार्थविशेषाश्रयो यः प्रत्ययस्स भवत्येव । एका तिलस्यउच्छित्तिरिति यथा ॥ अत्र भावे क्तिन्प्रत्ययः । दारजारौ णिलुक्च ॥ अत्र यद्यपि दार इत्येतद्रूपन्दारयतेः पचाद्यचा सिद्धम् । कर्षात्वत इति घञन्त्यन्तोदात्तत्वात् । तथाप्यच्कावशक्ताविलस्य बाधनार्थमिदम्॥णिलुग्विधानसच वृद्धेः श्रवणायान्यथा णौ वृद्धावपि मितां ह्रस्व इति ह्रस्वापत्तिः ॥ णेरनिटीतिणिलोपे तु तस्य स्थानिवद्भावेन घञाश्रया वृद्धिर्न स्यात् ॥ लुकि तु न लुकः स्थानिवत्त्वमपरनिमित्तकत्वाल्लुका लुप्तत्वाच्च । कृत्यादेर्ण्यन्ताद्घञस्त्वनभिधानम् ॥ णिलुग्विधानपरभाष्यप्रामाण्यात् । अत्र भाष्ये करणे वा दारजारौ वक्तव्याविलनेनाख्यन्ताद्दृणातेर्जरयतेर्वा पुंसि संज्ञायामिति घप्रत्यये प्राप्ते तदपवादो घञ्स्वीकृतस्तदात्विदं वचनमनावश्यकम् ॥ परन्तु घञ् वचनेन साध्यो न तु सामान्यसूत्रेण ॥ अन्यथा घञ्ल्युटौ पर्यायेण स्याताम् । इङश्च । अकर्त्तरि कारके इङो घञ् ॥ प्रकृत्याश्रयस्य । एरजित्यचः । व्याख्यानादिति । पूर्वसूत्रे सर्वेभ्य इत्युपादानेन तस्य प्रकृत्याश्रयप्रत्ययबाधकता निर्णीता स एव घञस्मिन् सूत्रेऽनुवर्तते इति प्रकृत्याश्रयप्रत्ययबाधकत्वमित्येतन्मूलकव्याख्यानादित्यर्थः ॥ व्याख्यानादिति ॥ शब्दसंज्ञायामित्युक्तिमूलकव्याख्यानादित्यर्थः ।

समुदायघटितैव हि संज्ञास्तीति भावः। मूले उन्नय उन्नेयेत्युक्तम्। तच्चोन्नय इत्यत्र यथाऽवोदोनिय इति घञः शङ्का तथोन्नेयेत्यत्रापीति भ्रमवारणायाह॥ उन्नय इत्यस्यैति। निरभ्योः पूल्वोः॥ अप्प्रत्ययस्यापवादोयं घञ् कर्मणि विधीयते॥ कॄ धान्ये। धान्यशब्दे उपपदे इत्येतद्भ्रमं वारयति॥ धान्यविषय केति। धान्यकर्मकेत्यर्थः॥ यज्ञे समि स्तुवः॥ अधिकरणे ल्युडपवादोऽयं घञ्॥ यज्ञविषयकेऽर्थे॥ शब्दप्रयोगात्मके। तस्ययज्ञविषयकत्वं यज्ञक्रियानिष्पादकत्वेन॥ प्रे स्त्रोऽयज्ञे॥ प्रपूर्वस्तॄञ्धातुरपि शब्दप्रयोगरूपार्थे वर्त्तते। प्रस्तार इति। शङ्खमखादेरिति शेषः। प्रथने वावशब्दे॥ प्रथने गम्यमाने विशब्दे उपपदे स्तृणातेर्घञ्॥ प्रथनमिह विस्तीर्णता। सा चेह तिर्यगायतिरूपा। तृणविस्तर इति। आच्छादनमात्रमिह धात्वर्थः॥ ग्रन्थविस्तर इति। अत्र स्तृञ्धातुविस्तीर्णताया एव बोधकः। छन्दोनाम्नि च। समुदायेनछन्दोनाम्निविवक्षिते स्तृणातेर्घञ्। वृत्तमिह छन्दःशब्दार्थः। शब्दविषयत्वात्पूर्वसूत्रस्येहाप्राप्तिः। उदि ग्रहः। उत्पूर्वाद्ग्रहेर्घञ्। ग्रहवृदृनिश्चीतिविहितस्यापोऽपवादः। समि मुष्टौ। ग्रह इत्यनुवर्तते। अत्र ग्रहधात्वर्थोऽङ्गुलिसन्निवेशोऽत एव न परिमाणाख्यायामित्यनेन गतार्थता। मल्लस्य सङ्ग्राह इति। मल्लस्येति कर्तरि षष्ठी। परिन्योर्नीणोर्द्यूताभ्रेषयोः॥ द्यूते विषये परिपूर्वको नीधातुः समन्ततो नयने वर्त्तते॥ अभ्रेषपदार्थं व्याचष्टे। पदार्थानामिति। अनपचारोऽनतिक्रमः॥ करणेचित्यम्। द्वितीयार्थोदाहरणं दाजोपशाप इति। हस्तादाने चेरस्तेये। हस्तादाने गम्यमाने चिनोतेर्घञ् स्तेयशौर्यञ्चेन्न विवक्षितं भवेत्॥ इति भाष्य इति। ग्रहवृदृनिश्चीतिसूत्रभाष्य इत्यर्थः॥ निवासचिति। चेरिति वर्तते। काशीनिकाय इति॥ अत्राधिकरणे घञ्। चितौ यदुदाहरणन्तत्र चितिर्धात्वर्थ एव। भावे घञ्। शरीरे यत्र प्रत्ययस्तत्राप्यधिकरणे। संघे चा। चेरिति वर्त्तते। अनौत्तराधर्य इत्यत्रौत्तर चाधरं चेति द्वन्द्वं कृत्वा ततो भावे ष्यञि नञ्समासः। औत्तराधर्यभिन्ने संघे चिर्घञ्। भिक्षुनिकायः भिक्षवो हि वा चित्तौर्यादौ ब्रह्मचिर्न्तनाद्यर्थं यदापृथगवतिष्ठन्ते तदाप्रत्ययः। सूकरनिचय इति प्रत्युदाहरणं तु स्तन्यपानार्थं शिशव उत्तराधरभावेन शेरते तदा न भवति प्रत्ययः। भिक्षुवत्पृथगेव सूकरा यदावतिष्ठन्ते तदा भवत्येव सूकरनिकाय इति। कर्मव्यति-

ह्वारे णच स्त्रियाम् ॥ कर्मव्यतिहारेवर्त्तमानाद्धातोरित्यर्थः । कर्मशब्दोऽत्र क्रियापरः ॥ क्रियाव्यतिहारश्च परस्परकरणम् । कर्मकारके चायम् । कर्त्तरि कृदितिसूत्रात् । विशेषणार्थ इति । तेन ज्वलितिकसन्तेभ्य इतिसूत्रविहित-णस्य न ग्रहणम् । व्यावक्रोशीत्यादौ कृदुग्रहणपरिभाषया विशिष्टादञ् प्रत्ययः ॥ अञस्तद्धितत्वादादिवृद्धिः ॥ न च स्त्रियामित्यधिकारे कर्मव्यतिहारे ण-जित्येव वाच्यम् ॥ स्त्रियामिति त्वधिकारादेव लभ्येत तेन व्यतिपाक इत्यत्र न णच् ॥ एवञ्चात्र स्त्रियामिति न कार्यमिति वाच्यम् । व्यावचारीत्यादौ क्तिन् वाधकस्य ख्यासश्रन्येति युचोऽपि वाधनार्थन्तदधिकाराद्वहिर्भावस्यावश्यकत्वात् व्यतीच्छादिषु गुरोश्च हल इत्यस्यापि वाधप्रसङ्ग इति तु न वाच्यम् ॥ ततो व-हिर्भावे सति वासरूपविधिना तस्य सम्भवात् । अत एव व्यवक्रुष्टिरित्यत्र क्ति-न् प्रत्ययः सिध्यति । प्रकृतसूत्रे भाष्ये तु यदुक्तम्प्रकृते स्त्रीग्रहणेऽणञ्प्रवणं कार्यम् ॥ ततो णिजिति वा च्यन्तेन व्यावचोरी व्यावचर्चीत्यादौ णच् सिध्यतीति तद्वार्त्तिकाश्रयमात्रन्न तु तत्र लाघवम् । णिच इत्यस्यावश्यकत्वात् ॥ व्य-वक्रुष्टिरित्यादेः कृत्यल्युटो बहुलमितिसूत्रस्थबहुलग्रहणेन क्व चिदन्यदेवेत्यर्थ-केन साध्यतापत्तेश्च ॥ न च स्त्रियामितिसूत्रे स्त्रियामिति तु क्व चित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इत्यस्य ज्ञापनायेत्यन्यत्रोक्तम् ॥ अभिवीधौ भावे इनुण् । अभिविधिरभिव्याप्तिः ॥ अभिविधौ गम्यमाने भावे इनुण् स्यात् । नपुंसके भावे क्त इतिसूत्रान्तरमस्य पाठेन भावे प्रत्यये सिद्धे पुनर्भावे इति क्त-स्य बाधको यो भावे खल् तस्य षल्सांराविणमित्यत्र प्राप्तस्य बाधनार्थमिति भाष्ये स्पष्टम् ॥ सांराविणमित्यत्र संशब्दे ऽभिविधिर्द्योतकः ॥ शब्दशक्तिस्वभावा-देतदसान्तन्नपुंसकमेव भवति । आक्रोशेऽन्योर्ग्रहः । अस्वरितत्वादिति । कि-न्तु घञेव दृष्टानुवृत्तिकत्वादिति शेषः । अवग्रहः पदस्य । ग्रहवृदृनिश्चीत्यप् । अ-नावग्रहो विलम्बेनोच्चारणम् । स्वभाविकार्द्धमात्राधिककालेनोच्चारणात्मकम् ॥ निग्रहश्चोरस्य । अत्र निग्रहो निरोधः । देशान्तरसंचारविरोधिव्यापारानुकूल व्यापारः । प्रे लिप्सायाम् । लिप्सायां गम्यमानायाम्प्रशब्द उपपदे ग्रहेर्घञ् स्यात् । पात्रग्राहेणेत्यत्र भावे घञ्प्रत्ययः ॥ कर्मषष्ठ्यासमासः । भिक्षापात्रं गृहीत्वेति फलितार्थः । लिप्सायां किम् ॥ प्रग्रहो देवदत्तस्य । प्रकृष्टोऽभिनि-

वेशः । परौ यज्ञे । परावुपपदे ग्रहेर्घञ् । यज्ञे इति वैषयिकाधारे सप्तमी ।
प्रत्ययान्तार्थो यज्ञविषयश्चेत् । ग्रहवृदृइत्यनेन बाध्यते । नौ वृ धान्ये ॥ वृ
इति वृङ्वृञोः सामान्यग्रहणम् । लुप्तविभक्तिकम् । धान्यविषये निशब्दे
उपपदे वृ इत्यस्माद्घञ् निवारा इति । एतत्संज्ञका व्रीहिविशेषाः निवरा क-
न्येति । कर्मणि ग्रहवृदृ इत्यप् । अजब्भ्यां स्त्रीखलना इत्युक्तः स्त्रीत्वविवक्षा-
याङ्क्तिन्प्रत्ययेन भवितव्यमित्याशंका निरासायाह मूले क्तिन्विषयेऽपीत्यादि।
अवे ग्रहो वर्षप्रतिबन्धे ॥ वर्षप्रतिबन्धेऽभिधेयेऽवशब्दे ग्रहधातोर्वा घञ् ॥ प्रे
वणिजाम् । अत्र वणिजामिति षष्ठीप्रधानप्रत्ययानुरोधात् ॥ प्रत्ययस्तु भावे ।
रश्मौ च । रथशकटादिसम्बद्धा रज्जू रश्मिः । या रथादियुक्ताश्वादेः संयमनार्थाः
कर्मण्यत्र घञ् । वृणोतेराच्छादने।अत्राच्छादन इति प्रत्ययान्तसमुदायार्थनि-
र्देशः परौ भुवोऽवज्ञाने । विभाषेति वर्त्तते । अवज्ञानमसत्कारस्तस्मिन् गम्य-
माने परिशब्दे उपपदे भुवो वा घञ् स्यात् । एरच् । भावे इति । अकर्त्तरि च
कारके इति चानुवर्त्तते । यथा प्रयोगं व्यवस्था । प्रत्ययस्वरेणैवैतदन्तस्यान्तो-
दात्तत्वे सिद्धेऽस्य चकारस्याथघञ्क्ताजबित्रकाणमित्यत्रास्य ग्रहणाय तेन प्रच-
यः प्रचय इत्यत्राव्ययपूर्वपदप्रकृतिस्वरम्बाधित्वाऽन्तोदात्तत्वम्भवति । प्रकृतसूत्रे
भाष्ये कल्प्यादिभ्यः प्रतिषेध इति वार्त्तिकमर्थतोऽनुवदति । कल्प्यादिभ्य इति।
अनार्षमिति । भाष्येऽदर्शनात् । अप्विधानसामर्थ्येनेति । निश्चिग्रहणसामर्थ्ये-
नेत्यर्थः ॥ मध्योदात्तमिति । चिधातोर्धातुस्वरेणान्तोदात्तत्वेऽपः पित्वादनुदा-
त्तत्वे आद्युदात्तो हि चयशब्दः । एतेन । पूर्वोक्तव्याख्यानेन । अत्रैव सिद्धम् ।
अन्तोदात्तत्वं सिद्धम् । अबन्तस्यापि तेनान्तोदात्तत्वसम्भवात् । घञो बाधना-
र्थमिति । चेत्तादूर्वाङ्कुरादेर्निश्चयं करोतीत्यत्र घञबाधनार्थमित्यर्थः । अस्माद-
पोऽनिष्टेरिति । अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् ।
निस्पूर्वश्चिनोतिः स्तेये वर्त्तते । अस्तेयार्थं तर्हीदं वक्तव्यम् । निस्पूर्वाच्चिनोतेर-
स्तेये अप् यथा स्यात् । अस्तेयार्थमिति चेन्नानिष्टत्वात् ।न हि निस्पूर्वाच्चिनो-
तेरस्तेये अविष्यते।किन्तर्हि घञेवेष्यते।एवन्तर्हि सिद्धे सति यन्निस्पूर्वाच्चिनोते-
रयं शास्ति तज्ज्ञापयत्याचार्यो यत्तदन्तस्याथघञ्क्तेति तन्निस्पूर्वाच्चिनोतेर्न भव-
ति । किमेतस्य ज्ञापने प्रयोजनम् ।निश्चयः एषः स्वरः सिद्धो।भवतीति भाष्यमत्र

मानम्। मध्योदात्तत्वङ्कृत्स्वरेण भवतीति कैयटः। वशिरण्योरुपसंख्यानम्। वश इत्यत्र भावे घञ् प्राप्तः रण इत्यत्रापि रणन्त्यस्मिन् पुरुषाः सरणः सङ्ग्रामः इत्यर्थेनाकर्तरि चकारके इत्यनेन प्राप्तस्य घञो बाधकोऽप् विधीयते। घञर्थो भावः कर्तृभिन्नकारकं च। अत्र भाष्ये स्थास्नापाय्याह्नीतिपठितन्तस्य परिगणनत्वभ्रमवारणायाह। स्थास्नेत्यादि। प्रस्थः। अत्राधिकरणे कः। परिमाणविशेषस्य मानीस्य सञ्ज्ञेयम्। प्रतिष्ठन्त्यस्मिन् धान्यानि प्रतिष्ठन्ते जनाऽस्मिन्निति व्युत्पत्तेः। प्रस्थे हिमवतः शृंगे हिमवत इति क्वाचित्कः प्रयोगो न तु तस्यैव संज्ञा। स्नुप्रस्थः सानुरस्त्रियामिति कोशात्। प्रस्नान्त्यस्मिन्निति प्रस्नो ह्रदः॥ प्रपिबन्त्यस्यामिति प्रपा पानीयशालिका। आविध्यन्ति येन तदाविधमायुधम्। विघ्नन्त्यस्मिन्मनांसि असौ विघ्नः। अधिकरणे क इति। एतेन वृत्तिकारोक्ता करणव्युत्पत्तिर्नोचित्ता भाष्यविरोधादित्युक्तम्भवति। भाष्योक्तस्यास्य वाक्यस्योदाहरणमात्रत्वादचला भूमिरित्यादि सिध्यति। न चलन्त्यस्यामपर्वतवृक्षादय इत्यर्थात्॥ अस्योदाहरणमात्रत्वे प्रमाणन्तु क्विप्रकरणे के कृञादीनामिति वार्त्तिकमेव। अनुपसर्गे इत्यस्योपसर्गभिन्ने उपपदे इति भ्रमवारणायाह। अनुपेति। यमः समुपनिविषु च। अत्र चकारादनुपसर्गे इति सम्बध्यते तस्याप्युक्त एवार्थः। अत एव यमया इत्यस्य सिद्धिः॥ क्वणो वीणायां च। अत्र वीणाग्रहणस्यानुपसर्गे इत्येतद्बाधरूपम्प्रयोजनमाह मूले वीणाग्रहणमिति। वीणाग्रहणं सोपसर्गार्थमिति वार्त्तिककारोक्तेः। मदोऽनुपसर्गे। अस्यानुपसर्गे इत्यस्य पूर्ववन्नार्थ इत्याशयेनाह॥ उपसर्गभिन्न इति॥ समुदो रजः पशुषु। पशुष्वित्यस्य पशुषु कारकेषु विवक्षितेष्वित्यर्थः। प्रत्ययस्तु भावे। अक्षेषु ग्लहः। ग्लह इति रूपन्निपात्यते। अक्षेषु धात्वर्थसम्बन्धित्वेन विवक्षितेषु यदत्र निपात्यते तदाह। ग्लह इत्यत्रेति। आङि युद्धे। ह्व इति सम्प्रसारणञ्चेत्यनुवर्तते। युद्ध इति प्रत्ययार्थस्य विशेषणम्। तेनाधिकरणे प्रत्यय इति बोध्यम्। निपानमाहावः। आहाव इति निपात्यते। निपानं वाच्यञ्चेत्। भावेऽनुपसर्गस्य॥ अत्रानुपसर्गस्येति सम्प्रसारणापेक्षया षष्ठी। ह्व इत्यनुवर्त्तते। हनश्च वधः अत्र चकारो भिन्नक्रमः॥ वध इत्यनन्तरन्द्रष्टव्यः। हन इत्यादेशापेक्षया षष्ठी। आदेशश्चादन्तोऽन्तोदात्तो निपात्यते॥ धातोरित्यस्यापि इत्यस्य

च सम्बन्धः ॥ हनो वधादेशः स्याद्धातोरप्रत्ययः स्यादित्यर्थः ॥ एवञ्चातो लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तोऽयम्भवति । उदात्तत्वे प्रमाणन्तु वधेन दस्युमित्यत्रान्तोदात्तदर्शनम् । घञा सिद्ध इति ॥ जनिवध्योश्चेति वृद्धेः प्रतिषेधात्सिद्ध इत्यर्थः । यदुक्तं स्वतन्त्रो वधिर्नास्ति किन्त्वादेश एव एतदुत्तराणामुपक्रमाद्विज्ञायते तदेतदाविष्कर्तुं स्तम्बे कचेति सूत्रभाष्यसम्मतिमाह ।घनान्तर्घतेत्यादि भाष्ये स्पष्टमिति । तत्र हि कस्मादयं को विधीयते । हन्तेरित्याह । तद्धन्तिग्रहणङ्कर्त्तव्यन्न कर्त्तव्यम्प्रकृतमनुवर्त्तते क्व प्रकृतम् । हनश्च वध इति । तद्वै अनेकेन निपातनेन व्यवच्छिन्नन्न शक्यमनुवर्त्तयितुम् । नैतानि निपातनानि ॥ हन्तेरेते आदेशाः । अप्प्रत्ययः हलन्ताच्चेते आदेशा इत्यभिप्रायेण यदि हन्तेरेते आदेशाद्यनस्वरो न सिध्यतीति परेणोक्ते ततो घनादीनां निपातनं स्वीकृतम् । स्तम्बे क चेति सूत्रे तु हनश्च वध इत्यस्य सम्बन्धानुवृत्त्या समाहितम् । ततोऽथ वा पुनः सन्त्वादेशाः । ननु चोक्तं स्वरो न सिध्यतीति । नैष दोषः ॥ अकारान्तादेशा इति । अतो लोपे कृते उदात्तनिवृत्तिस्वरेणापि । उदात्तत्वम्भविष्यतीत्याह । अन्त्य इत्यादिना । निघो निमित्तम् । अत्र गत्यर्थकाद्धन्तेः कर्मण्यप् । उपसर्गे घोः किः यद्यपि भावेऽकर्त्तरिकारके इति प्रकृतन्तथाप्ययम्बाहुलकात्कर्त्तर्यपि ॥ अत एवोपसमीपे स्वधर्ममादधातीति व्युत्पत्तिरपि क्व चिद्दर्शिता । परन्तु सा करण एवोचितेत्याशयेन सूत्रे उपाधीयतेऽनेनेत्युक्तम् । ल्युट् तु बहुलग्रहणान्न । कर्मण्यधिकरणे च घोरित्यनुवर्त्तते ॥ अत्र कर्मण्यधिकरण इति च द्वयमप्युपपदन्न ॥ पृथक् सप्तमीनिर्देशात् ॥ नाप्यधिकरणे उपपदे कर्मणि प्रत्यय इत्यर्थः ॥ प्रकृतसूत्रेऽकर्त्तरि च कारके इत्येतत्सम्बन्धेन कर्मणी प्रत्ययस्य सिद्धत्वादत्त एव देवं वंदे जलधिशरधिमिति प्रामाणिकप्रयोगस्योपपत्तिस्तदाह । व्याख्यानादिति । ननु तथैवाधिकरणे प्रत्ययेसिद्धेऽत्राधिकरण इति व्यर्थमत आह॥अधिकरणग्रहणमिति।स्त्रियांक्तिन्॥भावादावितीति ।आदिना कारकपरिग्रहः॥कैयटस्वरस इति॥तत्रह्याद्यन्तवद्भावस्य प्रयोजननिरूपणावसरे भाष्ये आद्यन्तवद्भावेञ्नित्यादिर्नित्यमिति स्वरो हि चुरकायनिः । आग्निवेश्य इत्यत्र स्याद्गार्ग्यः कृतिरित्यत्र न स्यादित्युक्तम् एतच्चोपपादनं सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्यस्या-

नाश्रयणेन। तत्र क्तिन्प्रत्ययस्य नित्वं व्यर्थं स्यादिति परिचिन्त्य क्तिनो नित्वन्तादौ च नितिमन्त्यतावित्येतदर्थं स्यादिति कैयटोक्तम्। यद्येकाज्भ्य एव धातुभ्योऽयन्तदेवमभिधानं युज्यत इति। अनेकाज्भ्योऽप्ययञ्चेत्स्यात्तदा ञ्नित्यादिरिति सूत्र एव प्रयोजनसम्भवात्तावत्पर्यन्तानुधावनेनानेकाज्भ्योऽनभिधानमिति तदाशयः। अत्र कैयट इत्यस्वरसमसूचनाय। गार्ग्यः क्षतिरित्यत्र न स्यादिति भाष्ये स्पष्टः स्वरो न स्यादिति रीत्यापि व्याख्यानसम्भवादनेकाज्भ्योऽनभिधाने न मानमिति। मूले घञोऽपवाद इति। घञो बाधक इत्यर्थः। औत्सर्गिकस्य घञः पुंस्त्वविशिष्टे भावे प्रवृत्तेः स्त्रीत्वविशिष्टे तस्मिन्नयमित्येतावता तस्य बाधः। पुंस्त्वविशिष्टे भावे तस्य प्रवृत्तौ मानन्त्वधिकःकारोऽधिकार इति स्वरितेनाधिकार इतिसूत्रस्य व्याख्यानमेव। भावादाविति व्याख्यानादेव श्रूयते इत्यर्थकस्य श्रुतिशब्दस्योपपत्तिः। करणार्थकक्तिन्नन्तः श्रुतिशब्दः श्रोत्रवाची। एवं यज्धातोरपि देवपूजनार्थकात्करणे ल्युटो बाधनार्थमिषेरपि तद्बाधनार्थं वचनम्। अयन्त्वत्र विशेषः। यज धातुप्रकृतिकः क्रिया विशेषे इषधातुप्रकृतिकस्तु ऋष्युक्तौ रूढः। स्तुतिशब्दविशेषे तथा। भाष्ये नैतदिति। योगविभागेन साधनम्। तस्मात्सुखे रूढोऽयं शब्दो यदीष्यते तदा बहुलग्रहणेन साधनीयः। स्थागापापचां भावे। क्तिनो बाधकस्य बाधनार्थमिदं सूत्रम्। न च विभाषाख्याने सूत्रविहितयोर्ल्युडिञोरपि क्तिना बाधे का त्वं स्थापिकां स्थायि वेत्यत्र ल्युड्ञिोरश्रवणापत्तिरिति वाच्यम्। पुरस्तादपवादन्यायेनास्य क्तिनोऽपवादस्यातश्चोपसर्गे इत्यङो बाधनार्थमेवैतत्सूत्रमिति स्वीकारात्। पचधातोः षित्वात्प्राप्तस्याङोऽप्ययम्बाधकः पचग्रहणात्। षित्वाच्चास्मादङपि। ग्लाम्लाज्याहाभ्यो धातुभ्यः क्तिन्बाधकस्याङो बाधनायात्र भाष्ये ग्लाम्लाज्याहाभ्यो निर्वक्तव्य इति वचनमारब्धम्। ग्लानिम्लानिर्ज्यानिर्हानिरिति। तेन बहुलग्रहणेन। एतेन व्यवस्थेति निपातनेनाङः स्वीकारे निपातनस्य बाधकत्वसिद्धान्ताद्व्यवस्थितिरिति न स्यादित्यपास्तम्॥ ऊतीयूतीजूती॥ अवादिभ्यः सामान्यवचनेन क्तिनः सिद्धौ स्वरार्थं कार्यविशेषविधानार्थं च वचनम्॥ अत्र भाव इति न सम्बध्यते॥ तेनान्यत्राप्ययम्। अत एवोत्तरसूत्रे भाव इति चरितार्थम्॥ उदात्त इति तूत्तरत्रापि सम्बध्यत

एव। व्रजयजो भावे क्यप्॥ क्विनो बाधकोऽयम्॥ उदात्त इत्यनुवर्त्तते॥ पित्वत्तूत्तरत्र तुक् सम्पादनेन चरितार्थम्॥ ननु संज्ञायामिति सूत्रे भाव इत्यस्य सम्बन्धाद्भावादावित्यनुपपन्नमत आह। क्यब्विधाविति। नन्वेवमयं क्यप् भृञ्धातोरपि भावादौ स्यादत आह। भृञोऽयमिति। भाष्यस्वरस इति। तत्र हि भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वादिति वार्त्तिकस्य संज्ञायां समजेत्यनेन प्राप्तिमाशङ्क्य स्त्रिप्रत्ययप्रकरणे भावग्रहणानुवृत्त्याऽन्यथा सिद्धिरुद्भाविता॥ भृत्याशब्दोऽयम्भरणार्थकः॥ अत्र संज्ञाग्रहणाद्बुद्धिवाचकस्य मतिशब्दस्योपपत्तिः। नैषा संज्ञा किन्तर्हि क्रियाशब्दोऽयम्॥ सिद्ध एव॥ सार्वधातुके यगिति सूत्रेण सिद्ध एव॥ अकर्तरिकारके ऽकरणे॥ गुरोश्च हलः। हलइति धातोर्विशेषणन्ततस्तदन्तविधिस्तस्यैव गुरोरित्यपि विशेषणम्॥ एवञ्च तस्य गुरुत्वासम्भवाद्गुरुशब्दान्मतुप् तस्य निपातनादेव लुक्॥ न च गुर्वन्ताध्दल इत्येव किन्न स्यादिति वाच्यम्॥ आशंसायामित्यादिप्रयोगासङ्गत्यापत्तेः॥ न च तथापि शंसेरकारो न प्राप्नोति। अस्य निष्ठायामनिट्त्वादिति वाच्यम्॥ आशंसायामिति निर्देशेन तत्र शेट्त्वाभावेऽप्यकारप्रत्ययस्य स्वीकारात्। अङ्विधावेवेति।प्राज्ञाश्रध्दार्चाभ्य इति निर्देशात् अन्त शब्दस्य तु अन्तः स्याङ्विधिणत्वेषूपसर्गत्वं वक्तव्यमिति वचनात्तथेति बोध्यम्॥ प्रत्ययसामान्याभावः। विभक्तिभिन्नसामान्याभावः। संज्ञायाम्। अधिकरणकारकेऽयम्प्रत्ययः॥ उद्दालकपुष्पभञ्जिका। उद्दालकः श्लेष्मान्तकस्तस्य पुष्पाणि यस्यां क्रीडायां भज्यन्ते सा। नित्यं क्रीडाजीवकयोरिति समासः। विभाषाख्यानपरिप्रश्नयोरिति सूत्रे आख्यानशब्दस्याल्पाच्त्वेन पूर्वनिपातेऽपि लोके आख्यानस्य परिप्रश्नपूर्वकत्वे नार्थक्रमानुरोधेन व्याख्यानवाक्ये परिप्रश्न एवादौ मूलेलिखितः परिप्रश्न इति। आक्रोशे। अत्राक्रोशशब्दः शापवाची। कर्मणि च येन संस्पर्शात्। अत्र संपूर्वकात्स्पृशधातोर्भावे घञ् कर्तुरिति तदर्थकर्मणि षष्ठी येनेत्युभयप्राप्ताविति नियमात्कर्तरि तृतीया। एवञ्च परिशेषात्कर्मणीत्यत्र कर्मत्वं विधेयप्रकृत्यर्थक्रियानिरूपितमेव॥ शरीरसुखमित्यत्र शरीरमस्यास्त्याकर्तृ सम्बन्ध्येव। एवञ्च यत्फलितन्तदाह। अर्थादिति। एतत्सूत्रविहितो ल्युडपि नपुंसकत्वविशिष्टे भावे। अत एवैतस्यसूत्रस्य नित्यसमासार्थत्ववर्णनसङ्गतिः। उप-

पदसमासो हि नित्यसमासः ॥ सम्पूर्वकः स्पृश्धातुः सम्बन्धमात्रपरः । सुख-मिति किम् । कण्ठकानाम्मर्द्दनं दुःखम् । वा यौ । अत्र याविति युप्रत्ययपरम् । न तु यकारादिप्रत्ययपरमितिसूचयितुमाह । इदं सूत्रमिति । करणाधिकर-णयोश्च । घञोऽपवादः । अत्र करणाधिकरणयोरिति नोपपदबोधकसुत्तरसू-त्रेष्वस्यार्थबोधकत्वस्य इष्टत्वेन तस्यैवौचित्यात् । अजब्भ्यां स्त्रीखलना इति-वार्त्तिकव्याख्यानावसरेऽनस्यावकाशः इध्मव्रश्च इति भाष्याच्च अयम्परत्वादज-पोः स्त्रीप्रत्ययस्य च बाधकः अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषे-धेनेति वार्त्तिकात् । छादेर्घे । उदुपधाया इत्यत उपधापदम्दोषो णावित्यतो णाविति चाचानुवर्त्तते तदाह । अत्रोपधेति । एतेन । उक्तार्थस्वीकारेण । न तु घपरं यदङ्गं णिपरकन्तदुपधाया इत्यर्थः । असंभवापत्तेरिति भावः । आ-कुर्वन्त्यस्मिन्निति । व्यवहारमिति शेषः । खनेः॰ संज्ञेयम् । गोचरसंचर । देश-वाची गोचरशब्दोऽधिकरणल्युडन्तः । विषयवाच्ययम् । उपादानगोचराप-रोचज्ञानमित्यत्र यथा तत्राप्यधिकरणे घः । गाव इन्द्रियाणिसञ्चरन्त्यस्मि-न्निति व्युत्पत्तिः । संचरन्तेऽनेनेति । समस्तृतीयायुक्तादित्यात्मनेपदम् । संज्ञा-यामित्यस्याच सूत्रे सम्बन्धाद्गोचरादिशब्दाः संज्ञिविशेषस्यैव बोधकाः । अवे-तृस्त्रोर्घञ् । ल्युटोऽपवादः । प्रायेणेति वर्त्तते इति । तदुक्तङ्गोचरेति सूत्र भा-ष्ये । गोचरादीनाङ्ग्रहणं शक्यमकर्तुम् । घञ्कस्मान्न भवति । प्रायवचनात् ॥ यथा कषो निकष इति । प्रयवचनादित्यस्य हलश्चेति सूत्रे प्रायेणेत्यस्य सम्ब-न्धादित्यर्थः कषो निकष इत्यत्र प्रायिग्रहणानुवृत्त्या घञ्न भवति तथा गोच-रादिष्वपि न भविष्यतीति भावः । अवहारादिषु प्रकृतेर्हलन्तत्वाभावाद् घ-ञोऽप्राप्तेरुपसंख्यानम् । उदङ्कोऽनुदके । अधिकरणे घजन्तोऽयन्निपातितो ल्यु-टम्बाधितुमनुदके इति च बोधयितुम् । यदि तु हलश्चेति सूत्रे प्रायेणेत्यस्य सम्बन्धादेवेष्टसिद्धिरित्युच्यते तदेदन्नारब्धणीयम् । तदुक्तम्भाष्ये । उदङ्कोऽनुद-कग्रहणमनर्थकम् । घञ् कस्मान्न भवति । प्रायवचनात् । गोदोहनः प्रसादन इति । बाहुलकादिति । ननु भाष्ये प्रायवचनादित्युक्तमत्र बाहुलकादित्युच्य-ते इति तद्विरुद्धमिति चेन्न । पुंसीति सूत्रे बहुलमित्यस्य सम्बन्धेन तस्य का-चित्कत्वस्य सिद्धौ प्रायग्रहणस्याप्यनावश्यकत्वमित्याशयात् । जालमानायः ।आ-

नाय इत्यत्राङ्पूर्वान्नोधातोः करणे घञ्। जालशब्दस्तु ज्वलितिकसन्त इति सूत्रविहितणान्तः एतस्यापि घातकत्वाज्जघातन इति धात्वर्थानुगमनमपि संभवति। खनो घ च। खनधातो करणे घः। नन्वस्य विध व्यर्थम्। न हि खनधातो चजोरित्येतत्सूत्रप्रवृत्तियोग्यः कश्च न वर्णोऽस्तीत्यत आह। मूले-घित्करणमिति ननु तथापि पदमित्यत्र न फलमत आह। भगः फलमितीति। ईषद्दुःसुषु। नन्वीषदादीनामव्ययत्वात् खल- खित्वस्य न फलमत आह। खित्वमुत्तरार्थमिति। कर्तृकर्मणोरिति सूत्रविषये सुमर्थमित्यर्थः। यद्यप्यत्र सूत्रे कृच्छ्राकृच्छ्रार्थेष्विति सामान्यत एवोक्तस्तथापि योग्यतावशात्सम्बन्धो बोध्यः। कृच्छ्राकृच्छ्रार्थेष्विति किम्। यत्राल्पत्वमात्रतात्पर्यविषये द इत्युच्यते तत्र मा भूत्। तृतीया पंचमो वेति। तृतीया पचे योग इत्यस्याध्याहारः इतरः। कर्मप्रवचनीयादितरः। मूले यदास्वतीकर्मप्रवचनीयाविति। अतेः कर्मप्रवचनीयत्वे नुपसर्गान्तरराच्छित्यमस्त्येव कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञा बाधकत्वात्। सोः कर्मप्रवचनीयत्वे तु उपसर्गात्परत्वमेवनास्तीत्यभिप्रायेणोभयोरुपादानम्। उपसर्गत्वप्रतिषेधस्त्विति। वार्त्तिकाक्रदुक्त इति शेषः। कर्तृकर्मणोश्च। भूकृञोः चकार ईषदादिसमुच्चायकः एवञ्चेषदादीनामुपपदत्वात्तत्साहचर्येण कर्तृकर्मणोरित्यप्युपपदवोधकत्त्वर्थपरमत एव खलः खित्वञ्चरितार्थम्। किञ्चेषदादीनामनुवृत्त्यैव सिद्धे चकारः सन्नियोगार्थोऽपि तेन यत्रानयोरीषदादीनाञ्च युगपत्प्रयोगस्तत्रैव प्रत्ययः। खलः खित्वादेवानुवृत्तेः सिद्धत्वात्॥ यथा संख्याभावश्च यथासंख्यसूत्रे भाष्य एव स्पष्टः। न च यथासंख्यभावफलन्तु भूधातोः कर्मण्युपपदे खलसिद्धिरिति तच्च न संभवति भवतेरकर्मकत्वात्॥ यदानुभवरूपेप्राप्तिरूपेऽर्थेऽस्य प्रवृत्तिस्तदा सकर्मकत्वेऽपि च्व्यर्थवृत्तित्वस्यकथंसंभवइति वाच्यम्। अन्तर्भावितण्यर्थस्य भवतेः सकर्मकतया आत्मधारणानुकूलव्यापाररूपफलाश्रयत्वविवक्षायाऽऽढ्यस्य तदाकर्मत्वसंभवेन तस्य कर्मणश्च्व्यर्थवृत्तितायाङ्खलप्रत्ययसिद्धेः प्रयोजनत्वात्। ननु दुसादीनामुपसर्गत्वात्तेषान्धातोरव्यवधानेनैव प्रयोगः संभवति। ते प्रागितिसूत्रे तस्मादिति परिभाषाया उत्तराङ्गविकलाया उपस्थितेः। खलः खित्वन्त्वीषदाढ्यंभवमित्यत्र चरितार्थमिति चेन्न। अनाढ्येन भवता दुराढ्येन स्वाढ्येन न शक्यं

भवितुमित्यर्थे दुराढ्यं भवं स्वाढ्यं भवमितिभाष्यप्रयोगेणाव्यवधानांशवा-धस्य प्रकृते स्वीकारात्। अत एव संज्ञानियमप्रयोगनियमपक्षयोः प्रकृते न फलभेदः। कर्मण्युपपदे भवतेः खलोदाहरणन्तु अनाढ्य आढ्यः अत एव सुभूयते इत्यर्थे स्वाढ्यं भवमिति अनाढ्य आढ्यः स्वयमेव क्रियते। अनाढ्य आ-ढ्यः क्रियते इति। एवमन्यत्राप्यूह्यम्। आतो युच्। अस्यापि खलर्थत्वात्तयोरे-वेति सूत्रस्य प्रवृत्त्या भावकर्मणोरेव युच्प्रत्ययविधायकता॥ अत एवाभिहि-तकर्मेति ईषत्पानः सोमो भवतेत्यत्र सोमपदात्प्रथमा सिद्धिः षात्पदान्तात्। नि ष्पानम्। सर्पिष्पानमित्यत्र कृत्यच इत्यनेन वा भावकरणयोरित्यनेन वा णा-मस्य णत्वस्यानेन प्रतिषेधः। प्रकृतेऽस्य सूत्रस्योपयोगस्तु दुष्पाने णत्वस्य व्यावृत्तिरिति। सप्तमीसमासे मानमाह। अत्र चेति॥ अन्यथा। षात्पदादि-त्युच्यमानेऽपि षादित्यस्य पदविशेषणत्वेन तदन्तविधिना षान्तात्पदादित्यने-नापि सिद्धेः फलांशे विशेषाभावः। क्त्विच्क्तौच्॥ प्रत्ययस्वरेणास्यान्तोदात्तत्वे सिद्धे न क्त्विचीतिसूत्रे झटित्येव प्रतिपत्तिर्यथा स्यादित्येवमर्थम्॥ न क्तौ दीर्घश्चेत्युच्यमानेऽप्येकानुबन्धकपरिभाषया क्तिनो व्यावर्त्तने प्रयासगौरवम्। एवं सनः क्त्विचीत्यत्रापिबोध्यम्। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। छन्द-सीति। छन्दसि लुङ्लङ्लिट इत्यतोऽनुवर्त्तमानं छन्दसीति भात्रलक्षण इति च नि-वृत्तमित्यर्थः॥ इह प्राचाङ्ग्रहणन्न ल्युटः समावेशार्थम्। वासरूपविधिनैवालं रुदित्वा रोदनेन वेत्यस्य सिद्धेः।यद्यपि स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्व चि-न्नेत्युक्तन्तथापीह तदभावकल्पने मानाभाव इत्याशयेन मूले प्राचाङ्ग्रहण-मिति। न च क्त्वाप्रत्ययेनासत्वभूतो भावोऽभिधीयते ल्युटा तु सत्वभूत इति वाच्यम्। अव्ययकृतो सिद्धान्ताच्छन्दशक्त्या तथा स्वीकारात्। यदा दानार्थ-मुद्यत पुरुषः सम्प्रदानत्वेनाभिप्रेतस्यापात्रत्वनिश्चयेनाप्तेन निवार्यते तदाऽलं शब्दः प्रतिषेधवाचकस्तेन प्रयुज्यते। अलन्दत्वेति। अस्त्वित्यस्याध्याहारः क्त्वा-न्तार्थस्य दानस्य अलंशब्दार्थेऽभावे प्रतियोगितासम्बन्धेनान्वयः। दानाभावक-र्त्तृका सत्तेति बोधः। यदादुग्धजलादिपानार्थं प्रवृत्त एव पुरुषोऽधिकपरिमा-णकदुग्धादिदर्शनेन पीत्वा खल्विति बोध्यते तदा खलुशब्दोऽपि प्रतिषेधार्थः। एवं भर्त्तृकृतप्रतिनीयमाना न वोढा यदा रोदिति तदाऽलं बाले रुदित्वा

इति प्रयोगेऽपि प्रतिषेधवाची अलंशब्दः। अलङ्कार इत्यत्र भूषणधारणेऽलंशब्दो वर्तते तदर्थस्य जनकतासम्बन्धेन कृधात्वर्थेऽन्वयः। उदीचां माङो व्यतीहारे। इत्युक्तेति। एतेन मेङो व्यतिहारे नित्यं वृत्तिरित्युक्तम्। माङस्तु न तथा। अत एवोदीचाम्माङ इति निर्देशस्य नानुबन्धकृतमनेजन्तत्वमिति परिभाषायां ज्ञापकत्वपरं भाष्यं सङ्गच्छते। अपमित्य याचत इत्यत्र मेङ्धातोर्यथा याच्धात्वर्थपूर्वकालिकत्वाभावस्तथोपपादयति। पूर्वत्वसाविति। याचनोत्तरकालिकं वस्त्रादिकर्मकम्परिवर्त्य दानमिति बोधः। न चानेन सूत्रेणापूर्वकालार्थकाद्धातोः क्त्वाप्रत्यये कृतेऽपि याच्धातोः पूर्वकालिकक्रियावाचकात्समानकर्तृकयोरित्यनेन क्त्वास्त्विति वाच्यम् धातुसम्बन्धे प्रत्यया इत्युक्तास्य विधानेन यत्र क्त्वाप्रकृत्यर्थक्रियायाः क्रियान्तरविशेषणत्वविवक्षा तदैव त्क्त्वाप्रत्ययस्योत्पत्त्याऽयमेङ्धात्वर्थस्य स्वसमानकर्तृकत्वस्वपूर्वकालिकत्वोभयसम्बन्धेन याच्धात्वर्थम्प्रतिविशेषणत्वात्। तदा याच्धात्वर्थे पूर्वकालत्वस्य मानसबोधस्य सत्वेनैतस्य विशेषणत्वतात्पर्यकः त्क्त्वाप्रत्ययो न भवति। परावरयोगे च। सूत्रार्थं वक्तुमवरशब्दं व्याचष्टे। अवरशब्द इति। एवञ्च परशब्दस्य पूर्वसाकाङ्क्षतयाऽवरशब्दस्य परसाकाङ्क्षतया च तयोर्द्वयोर्निमित्तत्वमिह लभ्यते। अप्राप्य नदीम्पर्वतः। दाक्षिणात्यानाङ्काश्यु हेश्यकागमनसमये यथा व्यवस्था भवति तादृश्याः कथनमिदम्। नद्यत्र गङ्गा। पर्वतो विन्ध्यः। दक्षिणादिगवच्छिन्नदेशादागमनकर्तृभिर्दाक्षिणात्यैर्गङ्गामप्राप्य विन्ध्याख्यपर्वतः प्राप्यत इत्यर्थः। अत्र नञः प्रागभावोऽर्थः। प्राप्येत्यस्य प्राप्तिक्रियार्थः। तस्याद्वितीयायान्तार्थस्य गङ्गाकर्मकस्याभेदेनान्वयेन गङ्गाकर्मकाभिन्नप्राप्तिक्रियाप्रागभावलाभः। पर्वतपदस्य च वाक्यैकदेशन्यायेन पर्वतकर्मकप्राप्तिक्रियाऽर्थः। अस्यां सामानाधिकरण्यसम्बन्धेन कालिकप्रत्यासत्तिघटितेन गङ्गाकर्मकप्राप्तिक्रियाप्रागभावस्यान्वये सति दक्षिणदेशस्थपुरुषकर्तृका गङ्गाकर्मकप्रागभावसमानकालिकी पर्वतकर्मकप्राप्तिक्रियेति शाब्दबोधे जातेऽर्थाद्गङ्गायाः परत्वम्पर्वतस्य ततः पूर्वत्वञ्च गम्यते। परेण पूर्वस्य योगश्च कालिकसामानाधिकरण्यसम्बन्धेन स्वकर्मकप्राप्तिक्रियाप्रागभावविशिष्टक्रियाकर्मत्वरूप एव। अतिक्रम्य पर्वतन्नदी। प्राप्यत इत्यस्याध्याहारः। अवरेण परस्य योगे

इदमुदाहरणम् ॥ पूर्वहत्तिश्चात्र विन्ध्याख्यपर्वत एव । तस्य योगः परगङ्गायाम् । अतिक्रम्येत्यत्रातिशब्दसमभिव्याहृतस्य क्रमधातोः प्राप्तिक्रियाध्वंसोऽर्थः । तदेकदेशप्राप्तौ पर्वतकर्मकस्यादेनान्वये नपर्वतकर्मकप्राप्तिक्रियाध्वंसस्य लाभे तस्य ध्वंसस्य स्वसमानकालिकत्वसम्बन्धेन नदीपदार्थनदीप्राप्तावन्वयाद्दक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिक्रियाध्वंससमानकालिकनदीकर्मकप्राप्तिप्राप्तिक्रियाविषयकशाब्दबोधे वृत्तेऽवरेण पर्वतेन परनद्यांस्वकर्मकतादृशपुरुषकर्तृकप्राप्तिक्रिया ध्वंसमानकालिकप्राप्तिकर्मत्वरूपो योगो गम्यत इति बोध्यम् । योगपदार्थस्व सम्बन्धः सचात्र क्रियाद्वारकः । क्वचित्तु साक्षात्क्रिययोरेव परावरयोर्योगो यत्र तत्राप्यस्य प्रवृत्तिः । यथाऽव्यविकन्यायव्युत्पादनावसरे कथितवाक्यस्थले । अवेर्मांसमिति विग्रह्याविकशब्दात्प्रत्ययस्योत्पत्तिरित्यादौ । विग्रहपदार्थस्य विभिन्नत्वेन ज्ञानरूपः एवञ्चावेर्मांसमित्याकारकवाक्यज्ञानस्य स्वोत्तरकालिकत्वसम्बन्धेनाविकशब्दावधिकप्रत्ययोत्पत्तावन्वयः । एवञ्चेदं सूत्रमसमानकर्तृकार्थमपूर्वकालार्थमिति च द्रष्टव्यम् । अलंखल्वोरिति तु क्रियान्तराभावेऽपि क्त्वार्थम् । धातुसम्बन्ध इत्यस्य च तत्र सामर्थ्याद्बाधः ॥ परत्वादिकम्परावरयोग इत्यत्र लोकव्यवहारेण पुरुषभेदेन भिन्न वैवक्षिकमेव । तेनोत्तराहपुरुषकर्तृकदक्षिणदिगवच्छिन्नदेशकर्मकगमनस्थलेऽप्राप्यपर्वतन्नदी अतिक्रम्य पर्वत इति प्रयोगस्याप्युपपत्तिरिति । समानकर्तृकयोः पूर्वकाले । पूर्वकाल इति शब्दो बहुव्रीहिर्न तु तत्पुरुषः । समानकर्तृकयोरर्थयोः पूर्वस्मिन्नित्यनेनैव पूर्वकालावच्छिन्नबोधकपूर्वशब्दोपादानेन पूर्वकाललाभसम्भवेन कालपदोपादानस्य व्यर्थत्वापत्तेः । बहुव्रीहौ तु पूर्वकालविशिष्टार्थस्य लाभ इत्येतदर्थलाभार्थं कालपदम् । समानशब्दास्तुल्यपर्यायः ॥ तच्च तुल्यत्वन्न वास्तवभेदघटितम् । वयसा सामर्थ्येन च यत्र सदृशौ चैत्रमैत्रौ तयोर्मध्ये चैत्रेण प्रथमम्भुक्तान्तदनन्तरञ्च मैत्रेण तत्र चैत्रेण भुक्त्वा मैत्रो व्रजतीत्यापत्तेः । किन्तु यत्र क्रियाभेदेन तत्तन्निरूपितशक्तिभेदकृतभेदेन । कल्पितः कर्त्रोर्भेदस्तत्रैव इष्यत इत्यारोपितभेदघटितं सादृश्यन्तथा चैकत्वे पर्यवसानं बोध्यम् । नचैवमेककर्तृकयोरित्येवास्तु समानेति व्यर्थमिति वाच्यम् । सादृश्यमारोपितभेदघटितमपीह शास्त्रे शब्दसाधुतानियामकमिति

बोधयितुमेवसभिधानात् । समानकर्तृकयोरिति निर्धारणे षष्ठी । धातोरिति त्वधिकारलभ्यम् । तस्य च पूर्वकाल इति विशेषणम् । वाचकत्वं सप्तम्यर्थः । एवञ्च यत्फलितन्तदाह । तद्विशिष्टेऽर्थ इति ॥ अत एव । बहुव्रीहिसमासेनैता-दृशार्थस्याभिप्रेतत्वादेव । अयं क्त्वाप्रत्ययोऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती-ति न्यायेन प्रकृत्यर्थ एव । स च भाव एव । एवञ्चाव्ययकृतो भाव इति सिद्धा-न्तस्याप्युपपत्तिः । कालस्य क्त्वान्तघटितवाक्यजन्यशाब्दबोधे क्त्वाप्रकृत्यर्थक्रिया-यामकारीभूय भासते । अत एव पूर्वं भुङ्क्ते पश्चाद्व्रजतीत्यत्र क्त्वाप्रत्ययमा-शङ्क्य स्वशब्देनोक्तत्वान्नेति समाहितम्प्रकृतसूत्रे भाष्ये । पूर्वशब्देन पूर्वका-लरूपोऽर्थः प्रकृतेऽभिधीयते न तु धातुनेति तदर्थः । न च पूर्वं भुक्त्वा पश्चाद्-व्रजतीत्यत्रापि क्त्वा न स्यादिति वाच्यम् । नैतत्क्रियापौर्वकाल्यङ्किन्तर्हि कर्तृ-पौर्वकाल्यमेतत् । पूर्वं ह्यसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततः पश्चाद्व्रजतीत्यर्थस्य भाष्यकृतैवाभिधानात् । साधनान्तरक्रियापेक्षपौर्वकाल्यमिति नानेन सूत्रेण त्क्त्वा किन्तु विभाषाग्रे प्रथमपूर्वेष्वित्यनेन । अत्र पूर्वकालक्रियाया वस्तुतोऽती-तत्वेऽपि बलेनावोधाद्भूत इति नाऽभिहितम् । सूत्रे समानकर्तृकयोरिति द्वि-वचननिर्देशाद्द्वित्वं विवक्षितमिति भ्रमनिवारणायाह । सूत्रे द्वित्वमतन्त्रमिति एवञ्चाव्यलब्धस्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थन्द्विवचननिर्देशो न तु विवक्षितत्वादेव पूर्वकालविशिष्टा क्रिया च समानकर्तृकत्वसम्बन्धेन प्रधानक्रियायां विशेषण म् । स्वरत्यादिधातुभ्यः परस्य क्त्वः स्वरतीतिसूत्रेण प्राप्तोऽपीट् श्र्युक इति-सूत्रेण बाध्यत इत्याह । पुरस्तादिति । अत्र क्त्वान्तार्थक्रियाकर्तुरनभिधानेऽपि प्रधानक्रियाकर्तुरभिधानेनाप्रधान क्रियानिरूपितशक्तेस्तद्वदभिधानमिति न चैत्रो भुक्त्वा व्रजतीत्यत्र चैत्रपदादप्रधानक्रियामादाय तृतीया । नापि पक्त्वौ-दनो भुज्यत इत्यत्र द्वितीया । यत्र तु शक्त्योरेकनिष्ठत्वन्तत्रैवेयं व्यवस्था । यत्र तु तयोर्भिन्नाधिकरणकत्वन्तत्र त्वप्रधानक्रियाकर्मवाचका द्वितीया भवत्येव । ओदनम्पक्त्वा ग्रामो गम्यते चैत्रेणेति यथा । न च प्रातः काले शिवं दृष्ट्वा नि-शि पापं व्यपोहतीत्यादौ क्रिययोरेककर्तृकत्वाभावात्कथं क्त्वाप्रत्यय इति वा-च्यम् । एतादृशे विषये स्थितस्येत्यादेरध्याहारेण समानकर्तृकत्वस्योपपादना-त् । न च दुर्गामावाह्य षोडशोपचैरस्ताम्पूजयेदित्यत्रावाहनस्य षोडशोपचा-

रान्तर्गतत्वादावाहनक्रियायास्ततो भेदाभावात्क्यङ्क्त्वाप्रत्यय इति वाच्यम्। आवाहनात्मक विशेषधर्मावच्छिन्नस्य पूजने समानकर्तृत्वात्मकसम्बन्धेन विशेषणत्वन्तद्विशेष्यपूजने च षोडशोपचारैरित्यस्य सामान्यधर्मावच्छिन्नस्य विशेषणत्वमिति स्वीकारात्। यत्र त्वनेकक्रियाप्रयोगस्तत्र स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ सर्वक्रियाविशिष्टप्रधाना क्रियाय भासते न तु तासाम्परस्परं विशेष्यविशेषणभावः गुणानां च परार्थत्वदिति न्यायात्। यत्र त्वयच्चैत्रो भोजनेन तृप्तो न तु पानेनेत्यर्थविवक्षया भुक्त्वा तृप्तो न पीत्वेति प्रयोगस्तत्र जन्यत्वमपि भोजनस्य संसर्गविधया भासते पानस्य चैतादृशसम्बन्धावच्छिन्नाभावस्तर्पणक्रियायां विशेषणम्। अधीत्यतिशिवम्प्रपूज्य तदालये तिष्ठतीत्यादौ व्याप्यत्वं समानकर्तृकत्वञ्च सम्बन्धः तच्च व्याप्यत्वं क्व चित्कालिकसम्बन्धावच्छिन्नञ्ज्ञनान्ते षूपसंख्यानमित्यनेन प्रशमय्य गतः प्रलमय्य गत इत्यत्राव्याप्तिमुद्भाव्याऽऽपि च गुरुपूर्वात् प्रतिषेध इत्यनेन प्रतिचिकीर्ष्य गत इत्यत्रातिव्याप्तिरुद्भाविता। अत्रोपि कृते यो गुरुपूर्वस्तस्मात्परस्य णेर्भूतपूर्वां लघुपूर्वतामाश्रित्यायादेशः प्राप्नोतीत्यर्थः। ततो लघुपूर्वादिति वचनात्सिद्धमित्युक्तम्भाष्ये। षष्ठ्यन्तपाठे यातिव्याप्तिः सा पञ्चम्यन्ततः प्रतमय्य गत इत्यादौ णिचत उपधाया इति वृद्धौ मितां ह्रस्व इति ह्रस्वत्वे कृतेऽप्यसिद्धवदत्रेति तस्यासिद्धत्वात्कथं लघुपूर्वात्परत्वमिति वाच्यम्। समानाश्रये हि आभीयासिद्धत्वम्भवति प्रकृते च णौ ह्रस्वत्वं ल्यपि णेरयादेश इति व्याश्रयत्वं स्पष्टमेव। विभाषापः। यद्यप्याप इतीङोऽप्यध्याप्य गत इत्यत्र सम्भाव्यते तथाप्यत्र लाक्षणिकत्वेन प्रतिपदोक्तस्यैवाप इत्यस्य ग्रहणमिति बोध्यम्। मूले कथम्मुखं व्यादायेति। सुखव्यादानस्य नेत्रनिमीलनस्य च स्वापहासोत्तरकालिकत्वेन पूर्वकालविशिष्टार्थवृत्तित्वाभावात्प्रश्नः। तदंशविवक्षयेति। एतेन विवक्षयैव वक्तुः शब्दानां साधुत्वनियामिका। यथा आदिकर्मणि निष्ठास्थले धात्वर्थैकदेशस्य स्थितावपि तुत्पत्तिकालावच्छिन्नस्य कस्य चिदवयवस्यातितत्वविवक्षया निष्ठा भवति तथा प्रकृतेऽपि स्वापहासयोर्यत्किं चिदवयवस्य मुखव्यादाने नेत्रनिमीलनोत्तरकालिकत्वेन तदंशापेक्षया पूर्वकालसम्बन्धिक्रियावचनत्वमादायायम्प्रयोग इत्युक्तम्। न च यत्रादौ स्वापस्ततो मुखव्यादानन्तदधिकरणकालोत्तर-

मपि स्वापानुवृत्तिस्तत्र मुखं व्यादाय स्वपिति। नेत्रे निमील्य हसतीत्यत्रांश-विवक्षयोत्तरकालिकहासांशमादाय यथा प्रयोगस्तथा यत्र मुखव्यादाननेत्रनिमीलनयोरुत्तरकालिकस्वापहासाधिकरणकाले निवृत्तिस्तत्रापि मुखं व्यादाय स्वपिति नेत्रे निमील्य हसतीति प्रयोगः स्यादिति वाच्यम्। समानकर्तृकत्वस्यैव कालिकसम्बन्धावच्छिन्नस्वनिष्ठव्यापकतानिरूपितव्याप्यत्वस्यापि संसर्गत्वात्। न चैवं पूर्वकालिकस्वापहासांशयोरधिकरणे क्षणे कालिकसम्बन्धे। व्यादाननिमीलनयोरसत्वात्कथमेतादृशव्याप्यव्यापकभावस्योपपत्तिरिति वाच्यम्। शब्दप्रयोगाधिकरणकालाव्यवहितोत्तरकालाधेयत्वविशिष्टतत्क्रियात्वावच्छिन्नव्याप्यतानिरूपितव्यापकताया एव संसर्गत्वाभ्युपगमात्। एवमेव विष्णुर्विश्वं व्याप्यास्तीति यत्र प्रयोगस्तत्राप्युपपत्तिः। आभीक्ष्ण्ये णमुल् च। चकारोऽत्र स्वविषये क्त्वाप्रत्ययस्यापि प्रयोगार्थस्तत्राशंकते यद्यपीत्यादिना। तत्र सूत्र इति। विभाषाग्र इति सूत्र इत्यर्थः। तेन न्यायेन। उत्तरकालिकक्रियायां स्वसमानकर्तृकत्वसम्बन्धेन पूर्वकालिकक्रियायाः सत्वमिति न्यायेन। पूर्वविप्रतिषेधेनेति। अत्र प्रमाणन्तु तत्रैव सूत्रे भाष्यकृता तस्य सूत्रस्याप्राप्तविभाषात्वमुपपादितन्तदेव। द्योतितमिति। एवञ्च कथं द्विर्वचनमिति शेषः णमुलादिनेति। आदिना क्त्वः संग्रहः। अर्थान्तरेऽपि। आभीक्ष्ण्यातिरिक्तेऽपि। तद्विधानादिति। णमुलो विधानादित्यर्थः। न चार्थान्तरेऽप्येतद्विधानादिति कथम्। अस्याप्यव्ययकृतो भाव इति सिद्धान्ताद्भाव एतत्पत्तिस्वीकारादिति वाच्यम्। आभीक्ष्ण्याभावे दर्शनादित्यर्थस्य विवक्षितत्वात्। विभाषाग्र इत्यादिसूत्रविषये यथा। मूले वा दीर्घ इति। गमनार्थातोर्णिचि मित्वाद् ह्रस्वत्वे णमुलि परे चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति वा दीर्घ इत्यर्थः। न यद्यनाकांक्षे। सूत्रोदाहरणासम्भवमाशंक्य निराचष्टे। यद्यपीत्यादिना। अनाकाङ्क्ष इति पचाद्यजन्ताकाङ्क्षशब्दस्य नञ्समासः। अनाकाङ्क्षो धात्वर्थश्चेदित्यर्थः फलितः। अनाकाङ्क्षा तद्विशेषणीभूतार्थप्रतिपादकत्वरूपा। एवञ्चोभयोः। क्रिययोस्तथात्वाभावस्तत्रैव निषेधोऽयन्तदाह। यत्रेत्यादिना मूले। अनेनानन्तरस्येति न्यायेन णमुल एव निषेध इति नाशंकनीयम्। यत्राप्तमिति व्याख्यानेनोभयोर्निषेधात्। ननुपक्षे लडादय इत्यनुपपन्नमर्थभे-

दादत आह । कर्त्रादिविवक्षोपल इति । मानाभावादिति । प्रकृतसूत्रविषये क्त्वा चित्तु, संयोगविशेषावच्छिन्नव्यापारनिष्ठव्यापकतानिरूपितम् । प्रपदं वासः परिधाय वहिर्गच्छतीयमित्यादौ यथा । गङ्गाम्प्राप्य सेना तिष्ठतीत्यादौ च सति तात्पर्येऽव्यवधानमपि सम्बन्धो भासते । एवमन्यत्र यथा यथम्बोध्यम् । न क्त्वा सेट् । कित्पदस्येत्संज्ञककवारबोधकतया सविशेषणे विधिनिषेध इति न्यायेन विशेषणीभूतेत्संज्ञाया निषेधेऽस्य सूत्रस्य तात्पर्यमिति भ्रमवारणायाह । अनेनेति । न मृडमृदेति सूत्रं स्थाघ्वोरिच्चेतिसूत्रानन्तरम्पठनीयम् । सङ्ग्रहणञ्च कर्त्तव्यमेवञ्च मृडादिभ्य एव सेट् । क्त्वा किद्भवति नान्येभ्य इति नियमो भविष्यति तावतैव शयित्वेत्यादौ सिद्धौ न क्त्वेति व्यर्थमिति वाच्यम् मृडादिभ्य क्त्वेवदिति नियमस्याप्युपपत्तेः । मृडमृद । यद्यपीह सेडिति न प्रकृतम् । तथाप्यस्य सूत्रस्य न क्त्वासेडितिसूत्रप्राप्तकित्कार्यप्रतिषेधबाधकतसेड्विषयकमेवेदं सूत्रमित्याशयेन सेट्क्त्वेति मूलेऽभिहितम् । नोपधात्थफान्ताद्वा । न क्त्वासेडिति वर्त्तते इह धातोरिति यद्यपि न प्रकृतन्तथापि क्त्वाप्रत्ययस्य धातोरेव सम्भव इति धातोरित्यस्याक्षेपस्तस्यनोपधादिति थफान्तादिति । च विशेषणम् । एवञ्च थफान्तादित्येवतदन्तविधिनाथफान्तस्यलाभेसिद्धेऽन्तग्रहणंस्पष्टार्थम् । कोथित्वा । रेफित्वेति । न चेहनोपधग्रहणाभावे कित्वविकल्पः स्यादिति वाच्यन्तन्न सम्भवति ॥ रलोव्युपधादित्यनेन कित्वविकल्पस्य प्राप्तेरिति वाच्यम् । प्रकृतसूत्रे नोपध ग्रहणसामर्थ्येन तस्यापि विकल्पस्याप्रवृत्तेः । न च ऋफधातोः क्त्वा प्रत्यये विकल्पवारणाय नोपधग्रहणमस्त्विति वाच्यम् । द्वाविमौ धातू ऋफ ऋम्फेति । तत्राद्यस्य ऋफधातोः क्त्वाप्रत्ययेऽस्मिन्सूत्रे नोपधग्रहणे विकल्पस्य वारणेऽपि न क्त्वा सेडिति कित्वनिषेधेऽर्फित्वेति रूपम् । द्वितीयस्य नोपधादिति विकल्पेन कित्वपक्षे ऋफित्वेति रूपमिति फलतो विशेषाभावेन नोपधग्रहणस्य तद्व्यावर्त्तकत्वाभावात् । वञ्चिलुञ्च्यृतश्च वञ्चधातौ रुदित्वादुदितो वेतीट् पक्षेऽनेन कित्वविकल्पः । ऋति सौत्रो धातुर्घृणार्थकस्तस्मात्क्त्वाप्रत्यये चिकीर्षिते आपादय इत्यनेन ऋतेरीयङिति विहितस्य ईयङ्प्रत्ययस्याभावेऽनेन कित्वविकल्पः । तृषिमृषिकृषेः । नोपधादित्यतो वाग्रहणानुवृत्त्यैव सिद्धे काश्यपग्रहणं पूजार्थम् । अञ्चुधातोरुदि-

त्वादुदितो वेति विकल्पे प्राप्ते आह । अञ्चेः पूजायामिति ,नित्यमिडिति । क्लि-
मश्च क्लि । भलीति वर्त्तत इति । एकदेशे स्वरितत्वसामर्थ्यादिति शेषः । अ-
स्योदित्वादिडभावेऽनुनासिकस्येति नित्यन्दीर्घे प्राप्ते इदम् । जातनशां वि-
भाषा । क्लिस्कन्देत्यतः क्लीत्यमुवर्त्तते । अत्र यथा भलीत्यादावित्यस्य ला-
भस्तम्प्रकारमाह । अनिदितामित्यत इति । तेन । क्लान्तोत्तरपदक इति व्या-
ख्यानेन । स्नात्वा कालक इति । मयूरव्यंसकादिसमासः । स्पष्टार्थमिति । अव्य-
यपूर्वपदकसमास एवास्य सूत्रस्य प्रवृत्तिर्नत्वव्ययात्परत्वं यत्र क्लान्तघटितस-
मासस्य तत्र प्रवृत्तिरित्यर्थस्य स्पष्टप्रतिपत्यर्थमित्यर्थः । अनञः परस्य क्लान्तो-
त्तरपदक्लस्य समासस्यावयवो यः कस्येत्यर्थे तु तत्र परमकृत्वाशब्देऽतिव्याप्तिः
स्यात् । प्रकृत्येति । अत्र प्रशब्दस्य धात्वर्थगतप्रकर्षद्योतकतया गतित्वात्कुगती-
ति समाससंज्ञा ॥ पत्वतुकोरसिद्धः ॥ कोऽसिचदिति । इह पूर्वरूपस्य परादि-
वद्भावेन ओऽसिचदित्यस्य पदत्वात्सकारस्य पदादित्वाभावादिणः परत्वात्षत्वे-
प्राप्ते ऽसिद्धत्वम् । भाष्योक्तसिद्धान्ताभिप्रायेणाशंकते । यद्यपीति । पदान्तपदा-
द्योरिति । अन्यथा वृत्तेच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति विकल्पो न स्यात् ।
सम्प्रदायमतानुसारेणाह । गतिकारकेत्यस्येति । ननु व्यवस्थितविभाषाणां भा-
ष्यसम्मतानामेव प्रामाणिकत्वमत आह । वा ल्यपीत्यस्येति । न ल्यपिनपीयय-
स्यात्सादौ तु पीङ्धातुर्दैवादिको बोध्यः । ल्यपि लघुपूर्वात् । लघुः पूर्वो यस्मा-
दिति बहुव्रीहिः । न च प्रणमय्येत्यत्र सूत्रचारितार्थ्येऽपि विकल्पेत्यत्रायादेशो
नस्यात्पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावादिति वाच्यम् । अस्माद्भाष्योदाहरणा
न्निष्ठायां सेटीतिसूत्रे सेट्ग्रहणाच्च पञ्चमीसमासस्यानित्यत्वात् । ननु लघुपूर्वा-
दित्यत्रान्यपदार्थो वर्ण एव । वध्यवधिमतोः साजात्यादेवञ्च प्रचिकीर्षत इत्य-
त्रापि वर्णग्रहणे जातिग्रहणादयादेशः प्राप्नोतीति चेन्न । प्रवेभिदय्यप्रस्तनय्ये
त्यादिभाष्योदाहरणबलेन पञ्चमीसमासानित्यत्वे नैकवर्णात्परत्वं यत्र त-
त्रैवास्य प्रवृत्तेः स्वीकारात् । वर्णग्रहणे जातिग्रहणमिति तु ज्ञापकसिद्धन्न
सर्वत्रेति परिभाषा नेहाश्रीयते । अत एव ल्यपि लघुपूर्वस्येति न्यासे व्य-
कर्तृविवक्षापक्षे मानस्तु साधनपौर्वकाल्यविषयाणामयादीनां ग्रहणमित्र ।
अत एव समानकर्तृकयोः पूर्वकाल इतिसूत्रभाष्ये इह कस्मान्न भवति । पू-

वं भुङ्क्ते पश्चाद्व्रजतीति खशब्देनोक्तत्वान्न भवति। नतर्हीदानीमिदं भवति। पूर्वं भुक्त्वा तदा व्रजतीति। नैतत्क्रियापौर्वकाल्यङ्किन्तर्हि कर्तृपौर्वकाल्यमेतत्। पूर्वंह्यसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततो व्रजतीत्युक्तम्। अत्र कैयटः। खशब्देनेति। पौर्वकाल्ये द्योत्ये क्त्वादिर्विधीयते न तु विषयभावे। पूर्वशब्दस्यात्र क्रियापौर्वकाल्यवाचित्वादग्रादिसूत्रेणापि न भवति। अग्रादीनां साधनपौर्वकाल्यविषयाणामत्र ग्रहणात्। नैतदिति। द्विविधात्र भुजेः पूर्वकालता व्रजिक्रियापेक्षा तस्याम्प्रत्ययः। भोक्त्रन्तरसाध्यभुजिक्रियापेक्षा च ताम्पूर्वशब्द उपादत्ते ततश्चाग्रादिसूत्रेणात्र क्त्वाणमुलौ भवत इति भावः। कर्तृपौर्वकाल्यञ्च क्रियाद्वारकमेवेति। कर्तृपौर्वकाल्यमित्यस्य कर्त्रन्तरसाध्यस्वसजातीयक्रियापेक्षपौर्वकाल्यमित्यर्थः। एवञ्च साधनपौर्वकाल्यविषयाणामग्रादीनां यत्रोपादानम्भावस्य च प्राधान्यविवक्षा तदा क्त्वाणमुलौ यदाकर्तुर्विवक्षा तदा लडादयः इति बोध्यम्। अग्रभोजमिति प्रकृतसूत्रोदाहरणेऽसवाव्ययेनेति नियमात्समासाभावः। कर्मण्याक्रोशे कृञः खमुञ्। कृञत्राभिमतफलानुकूल व्यापारवाची। चोरं कारमित्यत्र चोरशब्दः स्वरूपपरः। तस्य कर्मत्वञ्चोच्चारणापेक्षयेत्युच्चारणमभिमतफलमत्राव्ययकृत इति सिद्धान्तात्खमुञ्प्रत्ययोऽपि भावे। एतदन्तार्थस्यापि पूर्ववत्समानकर्तृकत्वसम्बन्धेन क्रियान्तरम्प्रतिविशेषणता॥ तत्सिद्धेः। चोरशब्दस्य मुम् सिद्धेः। यत्र चोरोऽसीत्युच्चारणमेव क्रोधेन तत्रायम्प्रयोगः। यत्र तु नाहं चोर इति वदन् पुरुषश्चोरत्वेन सम्बध्यते तत्र नायम्प्रत्ययः आक्रोशपदस्वारस्यात्। आक्रोशोऽपि विलक्षणशब्दोच्चारणानुकूलव्यापार एव। विशेष्यस्य चोरशब्दोच्चारणानुकूलव्यापारस्य समानकर्तृकत्वसम्बन्धेन सामान्यधर्मावच्छिन्ने आक्रोशे विशेषणत्वम्॥ एवं सति कृञः प्रयोगस्त्वप्रकृतिकखमुञन्तशब्दघटितवाक्यस्य साधुत्वार्थमेव न तु खमुञन्तार्थस्यापि शाब्दबोधे भानमित्येव कल्पना लाघवादुचितेत्याशयेनाह। यद्वेति। आक्रोशपदार्थश्चोच्चारणानुकूलव्यापार एव। चोरशब्दः पूर्ववच्छब्दपर एव। तस्योच्चारणरूपफलाश्रयत्वात्कर्मता। स्वादुमि णमुलकृञ इत्यनुवर्त्तते। स्वादुमित्यर्थपरम्। वृत्तिकारादिसम्मतव्याख्यानात् स्वाद्वर्थे उपपदे कृञो णमुल् स्यात् स्वादुशब्दश्च विजातीयप्रीतिरूपा या रुचिस्तद्विषयपरः। कृञ्श्चात्रार्थश्च

सम्पत्त्यनुकूलव्यापारपरः। तस्य भुजधात्वर्थे विशेषणता पूर्ववत् ।मान्तत्वन्निपात्यत इति ॥ निपातस्य फलमाह अस्वाद्वीमित्यादिना ॥ अयम्भावः । स्वादुमीत्येव सूत्रं कार्यम्। खमुञ्ग्रहणमनुवर्तनीयम् । स्वादुमादीनाम्मुमागमेन सिद्धौ प्रकृतसूत्रेण णमुलो विधानं यत्र खमुञा सिद्धिर्न भवति तदर्थंस्वाद्वश्शब्दस्याव्ययसंज्ञक इति। अत एव चूयन्तमुदाहरति ॥ अस्वाद्वीमित्यादिना। यद्यस्मिन्नुपपदे खमुञ् स्यात्तदाऽनव्ययस्येति प्रतिषेधान्मुम् न स्यात्। च्वौ चेति स्वादुशब्दस्य दीर्घः स्यात् । सम्पन्नलवणयोरस्य चावितीत्वं स्यात्। स्त्रियामस्य स्वादुशब्दस्य यवागूपरत्वे वोतो गुणेति सूत्रेण ङीषि सति स्त्रित्यनव्ययस्येति मुमि स्वाद्वीङ्कारमिति स्यात्। यत्तु णमुल्यपि मुमेव विधेयो न तु मान्तत्वनिपातनमिति। तन्न। च्व्यन्तत्वे स्त्रियाञ्च पूर्ववद्दोषापत्तेः। न च प्रत्ययसन्नियोगेन मुमो विधानादन्तरङ्गत्वात्पूर्वम्मुमिनैते दोषा इति वाच्यम्। उपपदमिति महासंज्ञा हि महासंज्ञाकरणात्सुबन्तस्य सुबुत्पत्तिश्च संख्यामपेक्षते। ततश्च स्वार्थद्रव्यलिङ्गसंख्याकारकाणाङ्कांक्षिकत्वे प्रातिपदिकस्य स्वार्थाभिधायकत्वे स्त्रीप्रत्ययानन्तरं सुबुत्पत्तौ पूर्ववद्यवाग्वर्थाभिधायत्वेऽनिष्टरूपापत्तिः। स्वादुशब्दस्यैव प्रत्यय सन्नियोगमान्तत्वनिपातने तु न कश्चिद्दोषः। न च मान्तत्वनिपातनमस्तु खमुञ्प्रत्यय एवास्त्विति वाच्यम् । अव्ययार्थेणमुल्विधानमित्यस्य प्रागविधानात्। न च मांतत्वनिपातनं णमुल्सन्नियोगे न स्यादेवञ्च स्वादुङ्कत्वेति रूपासिद्धिरिति वाच्यम्। एतत्प्रकरणस्थभावप्रत्ययसन्नियोगे न मान्तत्वनिपातनमित्याश्रयात्। यदि तु निपातनं नासापूर्वः शब्दोपजन इतिस्वादुशब्दस्य स्वादमित्यादेश इतिकल्पना तदा यश्चमुल् लिङ्गविशिष्टपरिभाषया यवाग्वर्थाभिधायके स्वाद्वीशब्दे उपपदेऽपि स्यात्तस्य स्थाने मान्तादेशे स्वादुङ्कारम्भुङ्क्ते इत्यस्य सिद्धावपि स्वाद्वींकृत्वा यवागूं भुङ्क्ते इतिभाष्यप्रयोगस्य क्त्वाप्रत्ययपक्षेऽनुपपत्तिरित्युच्यते तदा णमुलसन्नियोगे मान्तत्वनिपातनमित्येवास्तु ॥ स्वादुङ्कृत्वा भुङ्क्ते इत्यत्र स्वादुशब्दो द्वितीयान्तस्तत्र स्वादुशब्दस्योपपदत्वाभावेन नित्यसमासस्याप्राप्तेः ॥ अन्यथैवं कथमित्यंस्तु सिद्धाप्रयोगश्चेत्। कृञ् इत्यनुवर्तते ॥ तच्च सुसिद्धाप्रयोग इत्यनेन सामानाधिकरण्यात्प्रथमया विपरिणम्यते। व्यर्थत्वादित्यस्यातिप्रयोजनाभावादित्यर्थः ॥ शब्दप्र-

योगी हि प्रयोजनाय भवति निष्प्रयोजनः स शब्दः प्रयोगानर्हः । अन्यथा भुङ्क्ते इतिशब्देन यावानर्थोऽभिधीयते तावानेवान्यथा कृत्वा भुङ्क्ते इत्यस्मादपि प्रतीयते । न च शाब्दबोधे वैलक्षण्यमस्त्येव । अन्यथाशब्दानाम्प्रकारविशेषाभिधायकतया कृञश्च क्रियासामान्यवाचकतयोभाभ्याम्प्रकारविशेषविशिष्टव्यापारोपस्थितौ भुङ्क्ते इत्येतच्छब्दादगलाधः संयोगानुकूलव्यापारे उपस्थिते सति तयोरर्थयोरभेदान्वयसत्वादिति वाच्यम् । एवं रीत्या वैलक्षण्यस्य शाब्दबोधे सत्यपि प्रवृत्तिनिवृत्त्यादिलक्षणकार्यवैचित्र्याभावेन कृञो नातिप्रयोजनत्वात् । द्वयोः क्रिययोः सामान्यविशेषभावेन भेदादेव पौर्वकाल्यनिबन्धनः क्त्वाप्रत्ययोऽप्यस्मिन् विषये वासरूपविधिना भवति प्रत्युदाहरणे वाक्ये कृञः प्रयोगे शिरोऽन्यथा भुङ्क्ते इत्युक्ते वक्तृकस्य कर्तृत्वे शत्रुव्याघ्रादिशंकयाऽन्यप्रकारेण शिरो भुङ्क्ते इत्यपि प्रतीयेत यथा यशोरङ्गान्तरं विलम्बेन भुङ्क्ते न तथा शिरो भुङ्क्ते किन्तु झटिति भुङ्क्ते इत्यर्थः । यथातथयोरसूयाप्रतिवचने ।कृञः सिद्धाप्रयोगे इति चानुवर्त्तते । यथातथाशब्दयोरुपपदयोः करोतेर्णमुल् स्यादसूयाप्रतिवचने गम्यमाने । असूया । अक्षमा । यदा प्रष्टुमयोग्यः पुरुषो भोजनकर्तारं महान्तं क्रोधाद्याविष्टम्पृच्छति सति तदीयवचनश्रवणोत्तरमयमयोग्यो माम्पृच्छति इदमयोग्यमिति ज्ञानजन्यमन्युना प्रतिवक्ति यथाकारमित्यादि तदेदमुदाहरणम् । असूयाप्रतिवचन इत्यत्र षष्ठीतत्पुरुषभ्रमवारणायाह ।। असूययेति ।। असूयेत्यादि किम् । यथाकृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि ।। सिद्धाप्रयोग इति किम् । यथा कृत्वाऽहं शिरो भोक्ष्ये तथा कृत्वाऽहं शिरो भोक्ष्ये किन्त्वानेनेत्यत्र णमुल् मा भूत् । कर्मणि दृशि । अत्र कर्मोपपदत्त्वर्थनिर्देशः । अव्ययकृत्वात् । विदग्रहणेन सर्वस्य विदोग्रहणन्न । सत्तार्थकस्याकर्मकत्वात्किन्तु त्रयाणामित्याशयेन मूले जानातीत्याद्यर्थनिर्देशः अव्ययकृत्वात् । साकल्यमत्र वक्तृबुद्धिस्थयावत्कर्मकत्वन्तच्च धातुविशेषणमर्थद्वारकम् । एवञ्च कर्मण्युपपदे दृशिविदो णमुल स्यात् । तयोः साकल्ये गम्यमाने ।। कन्यादर्शं वरयतीत्यत्र णमुलन्तोत्तरपदकस्य समासस्य सकलकन्याकर्मकदर्शने शक्तिः तस्य दर्शनस्य स्वसमानकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन वरणे स्वीकारेऽन्वयः । एवञ्च यत्फलितन्तदाह । सर्वाः कन्या इति । ए-

वमेव ब्राह्मणवेदं भोजयतीत्यचापि बोध्यम् प्रधानीभूतधात्वर्थस्य कारकविशि-ष्टार्थविशिष्टस्यातिशयप्रतिपादनपरमेतद्वाक्यम् । यावति विन्दजीवोः । अत्र लाभार्थकस्यैव विन्देर्ग्रहणम् । नुमा विशिष्टस्य निर्देशात् । असाकल्यार्थमिदं सूत्रम् । चर्मोदरयोः । अत्र पूरेरिति ण्यन्तस्य निर्देशः । अत एव चर्मोदरयोः कर्मत्वसम्भवः । कर्मणीत्येवेति । कर्मवाचकयोश्चर्मोदरयोरुपपदयो पूरेर्णमुल् ॥ अत्र पूर्वकाल इति न सम्बध्यते किन्तु समानकर्तृकयोरित्येव । एवञ्च समानकर्तृकत्वमात्रं समार्थस्य प्रधानधात्वर्थे सम्बन्धः । वर्षप्रमाण ऊलोपश्च कर्मणि पूरेरिति चानुवर्त्तते । वर्षशब्दस्यान्यार्थकत्वभ्रमवारणायाह । वर्षों वृष्टिरिति । वर्षस्य प्रमाणमियत्ता परिच्छित्तिः । सा गम्यते चेत्प्रत्ययः । अत्र भाष्ये ऊलोपश्चान्यतरस्याङ्ग्रहणं शक्यमकर्त्तुम् । कथङ्गोष्पदप्रवृष्टो देव इति । प्राप्तिः पूरणकर्मा तस्मादेष कः ॥ आतोऽनुपसर्गे क इति कः । गोष्पदप्रमिति च क्रिया विशेषणमतो नपुंसकत्वमेकत्वञ्च । पदिकः विभक्तीनां श्रवणं प्राप्नोति । श्रूयन्त एवात्र विभक्तयः । तद्यथा । एकेन गोष्पदमाप्रणितिअने भाष्येणोलोपश्चेत्यादि प्रत्याख्यातन्तत्रोलोपग्रहणसत्वे गोष्पदप्रन्तरामितीति । अनभिधानादिति । अत्र मानन्तु प्रत्याख्यानपरभाष्यमेव । गोष्पदप्रतरामित्यस्य घावपि , तदेवमानम् । न च पूरेर्विगोष्पदपूरमित्यस्यापिक्रियाविशेषणत्वात्क्लिबे सूत्रस्याप्यकर्त्तव्यतापत्तिरिति । वाच्यम् । गोष्पदपूरेणेति विभक्तिश्रवणापत्तेः । गोष्पदपूरतरामित्यस्यानापत्तेश्च । ऊलोपश्चेत्यस्य सूत्रस्य सत्वे तु णमुलन्तस्याव्ययत्वेनोभयं सिद्ध्यति । चेले क्नोपेः । वर्षप्रमाण इत्यनुवर्त्तते । क्नूयीधातुः शब्दे उन्दने च वर्त्तते । अनेन सूत्रेण णमुलि कृते तदन्तस्य प्रयोगे सति तावद्वर्षो जातः येन चेलानि मन्द्रायन्ते आर्द्राणि वाजातानीति गम्यते चेलशब्दोनार्थपरो वृत्तिकारादिव्याख्यानात् । निमूलसमूलयोः कषः । कर्मणीति वर्त्तते । निगतं च तमूलं च निमूलम् । मूलेन सहितं समूलं । मूले भेद इति । विशेष्यतया प्रतियमानसामान्यधर्मावच्छिन्नाप्रयुक्तेन भानम् । कषादिष यथाविधीत्यारंभादेवेव प्रयोगः । समूलाकृतजीवेषु । धातूपपदयोरत्र यथा संख्यं करणे हनः । अस्य सूत्रस्य सार्थक्यमाह । हिंसार्थानामिति । अहिंसार्थमिति । हनधातोर्गस-

नार्थकत्वात्तस्मिन्नर्थे यदा'पादघातं हंतीति प्रयोगस्तस्य सिद्धार्थमित्यर्थः दर्शितत्वात्तस्मिन्नर्थे हन्धातुरन्यत्र।किञ्च हिंसाप्राणवियोगानुकूलव्यापारो न त्वभिघाताख्यसंयोगानुकूलव्यापारः धातूनाञ्चानेकार्थत्वात्तस्मिन्नर्थे यदा प्रयोगस्तदाऽप्यनेन सूत्रेण प्रत्यय इष्यते पाद्युपघातं हंतीति भाष्यप्रयोगात् । फलान्तरमाह हिंसायामित्यादिना । स्नेहने पिषः । स्नेहने इत्यत्र करणे ल्युट् । हस्ते वर्त्तिग्रहोः । करण इति वर्त्तते । तेन शुष्कचूर्णेति सूत्रे एव स्नेहनग्रहणं क्रत्वेदं सूत्रन्न कार्यमिति शङ्का निरस्ता । तत्र कर्मणीत्यस्य सम्बन्धात् । हस्ते वर्त्तिग्रहोः । करण इति वर्तते । व्याख्यानात्प्राचीनसम्मतादर्थग्रहणमत्र वर्त्तिर्ण्यन्तो निर्दिष्टः । स्वे पुषः । अत्रापि स्व इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषधातो र्णमुल्स्यात् । स्वशब्दस्यात्मादयश्चत्वारोर्था अन्यत्र प्रसिद्धास्त एवात्रापि । अधिकरणे बन्धः अधिकरणवाचिन्युपपदे बध्नातेर्णमुल् । आक्रोशत इति तदुक्तम्भाष्ये । इह कस्मान्न भवति । ग्रामे बन्धइति । एवं वक्ष्यामि । अधिकरणे बन्धः । संज्ञायामिति । अत्रसंज्ञायामिति कथनेना कर्षः सूचितः । संज्ञायाम् । अनधिकरणार्थोयमारम्भः । कर्त्रोर्जीवपुरुषयोः । कर्तृ वाचकयोर्जीवपुरुषयोरुपपदयो र्नशिवहोर्णमुल्स्यात् । यथासंख्यमत्रेष्यते । जीवनाशन्नश्यति । कर्तृ षष्ठ्यन्तस्य जीवशब्दस्योपपदसमासः । जीवकर्तृनाशाभिन्ननाशकर्तेति शाब्दबोधे वृत्ते जीवो नश्यतीति फलितम् । ऊर्ध्वे शुषिपूरेः । ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरेर्णे मुल् । ऊर्ध्वशोषं स्पृश्यति । अत्राप्यर्थे पूर्ववत् । उपमाने कर्मणि च । चात्कर्तृ रि । उपमानभूते कर्मणि कर्तरि चोपपदे धातोर्णमुल् । अत्र धातोरित्यधिकारान्नब्धम् ।। उपमानशब्दः कारणव्युत्पन्नः ।। कषादिषु यथाविध्यनुप्रयोगः । अत्र कषादिशब्देन निमूलसमूलयोरितिसूत्रनिर्दिष्टः । कषधातुरपस्थाप्यते कषादिषु णमुल्प्रत्ययप्रकृतिषु सत्सु यथाविध्यनुप्रयोगो भवति यथाविधीत्यस्य विधानमनतिक्रम्येत्यर्थः ।विधानस्य यत्सम्बन्धित्वन्तस्यैवापुप्रयोगे तदनतिक्रमो भवति ॥ कषादिप्रकृतिकणमुल्प्रत्ययस्य धातुसम्बन्धाधिकारे विधानादनुप्रयोगे सिद्धे यथाविध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । धातुमात्रस्यानुप्र योगासम्भवात्तत्प्रकृतिकप्रत्ययेऽपि प्रयोक्तव्ये लिङ एवेति नियमे मानाभावादाह । स-

चाविशेषादिति । उपदंशस्तृतीयायाम् । उपपूर्वाद्दंशधातोस्तृतीयान्ते उपपदे णमुल्प्रत्ययः स्यात् ॥ न च सूत्रोक्तं वचनसामर्थ्यादित्यनुपपन्नन्दशनैरुपदश्य भुङ्क्ते इत्यत्र प्रत्ययस्य सम्भवादिति वाच्यम् । करण इत्येव वक्तव्ये तृतीयायामित्युपादानात्तृतीयान्तोपपदस्य शब्दतोऽन्वयी दंशधात्वर्थे नचार्थस्तदन्वयस्तत्रैव प्रत्ययस्य स्वीकारात् । न च वचनसामर्थ्याण्णमुल्प्रत्ययस्य समासस्य च स्वीकारेऽपि क्वत्प्रकृत्यर्थनिरूपितकरत्वाभावेन क्वद् ग्रहणपरिभाषया समासाभावपक्षे प्रातिपदिकसंज्ञापादनपरशब्दासङ्गतिरिति वाच्यम् । दंशधात्वर्थनिरूपितकर्मत्वसत्वेन तत्रार्थान्वयसम्भवेन कारकत्वसम्भवात् । हिंसार्थानाञ्च समानकर्मकाणाम् । पञ्चम्यर्थे षष्ठी । हिंसाच प्राणिन उपघातः केन समानकर्तृकत्वमित्याकाङ्क्षायामनुप्रयुज्यमानेनेति प्रत्यासत्त्या लभ्यते ॥ कालयतीत्यत्र कलधातुः कलविक्षेप इति चुरादिः । एवन्तड आघात इत्यपि चुरादिः । सप्तम्याञ्चोपपीड । चात्तृतीयायाम् । कर्ष इति । क्वतगुणकस्य कृषधातोः शपा निर्देशस्तुदादिव्यावृत्त्यर्थस्तेन तुदादेः क्वाप्रत्यय एव । स्वेत्ते उपलक्ष्य यवान् वपतीत्यत्र यथा । समासत्तौ । समासत्तिः सन्निकर्षः । यत्र योद्धारः केशेषु गृहीत्वा युध्यन्ते तत्र तेषां समासत्तिरस्त्येव । युद्धविषयकसंरम्भादत्यन्तं सन्निकर्षम्प्राप्य युध्यन्त इत्यर्थः । प्रमाणे च । प्रमाणमायामस्तु प्रमाणं स्यादिति पारिभाषिकम् । प्रकृतिविशेषानुपादानाद्धातुसामान्यात्प्रत्ययः । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । तत्पुरुषस्याङ्गुलेरित्यच् समासान्तः । अङ्गुलीद्वयसमाहारेण परिच्छिद्यश्छेदः खण्ड एव खण्डिका । अपादाने परीप्सायाम् । परीप्सा त्वरा । अपादाने उपपदे धातोर्णमुल् स्यात् । परीप्सायाङ्गम्यमानायाम् । परीप्सामुपपादयति । एवं हीति । अनुदात्तम्पदमेकवर्जमित्यप्यपादाने परीप्सायामित्यनेनाद्व्रजधातोर्णमुल । यस्मिन् काले उदात्तः स्वरितो वा विधीयते तत्समकालं तस्परित्यागेनान्यदनुदात्तं कर्त्तव्यमित्यर्थात् । यदि तत्र नापादानत्वन्तदा सौत्रत्वात्तत्र णमुल स्वांगेऽध्रुवे । अध्रुवे इति छेदः । अभावज्ञाने प्रतियोगिज्ञानस्य कारणाद् ध्रुवपदार्थं तावदाह । येन विनेति विशिपतिपदिस्कन्दाम् ॥ नन्वाभीक्ष्ण्ये उक्तस्यैव णमुल् ॥ पुनर्विधानन्तत्र क्त्वानिवृत्त्यर्थमेवास्त्वित्यत आह ॥ क्त्वानिवृ-

त्तिश्चेति ॥ वासरूपविधिना तस्यापीष्टत्वादिति शेषः ॥ पाक्षिकोपपदसमासविधिरिति तृतीयाप्रभृतीनीत्यनेन विहितेत्यादिः ॥ अस्यतितृषोः क्रियाः ॥ अस्यतिरतिक्रमणमर्थः ॥ योजनमस्यति ॥ अध्वकर्मकमत्यसनमत्र व्यवधायकत्व कालकर्मकम् ॥ नाम्न्यादिशिग्रहोः ॥ अत्र नाम्नीति न सुबन्तपरङ्किन्तु स्वरूपपरत्वं सुपीत्येव वदेदत आह ॥ नामशब्द इति ॥ अव्यये ऽयथाभिप्रेताख्याने ॥ अव्यये उपपदे कृञः । क्त्वाणमुलौ स्तोऽयथाभिप्रेताख्याने गम्ये । अत्रायभिप्रेतशब्द आख्यानक्रियाया विशेषणम् । अभिप्रेतमभिमतम् । अभिमतस्यातुर्यथा-न भवति तथा कथनमित्यर्थः । न च नीचैः कृत्य प्रियं कृते इत्यत्र कथसयथाभिप्रेताख्यानम् । प्रियकथनं यथाभिप्रेताख्यानमेवेति वाच्यम् । अस्याभिमतत्वेऽप्येतत्प्रकारस्य नीचैस्त्वस्यानभिमतत्वात् । तिर्यच्यपवर्गे । अत्र तिरश्चीति पठितव्ये तिर्यचीत्यस्योपपत्तिमाह । सौत्र इति । अयं तिर्यक्छब्दोऽन्तर्ज्वाची समाप्तिवाची च । तत्र द्वितीयमादायोदाहरणम् । तिर्यक्कृत्वा काष्ठङ्गत इत्यस्य प्रत्युदाहरणवाक्यस्य काष्ठमऋजुकृत्वा गत इत्यर्थोऽभिप्रेत इति । न च तिर्यच्यपवर्ग इत्यत्र तिर्यच् इत्यनुकरणशब्दविशेषस्य तत्रानु कार्यस्वरूपभङ्गभिया एतदोश्चेत्यत्र त्यदाद्यत्वमिवाल्लोपो न कृत इत्येव कुतो नोक्तमिति वाच्यम् । न हि प्रयोजनानुवर्त्ति प्रमाणमिति न्यायविरुद्धत्वात् । सौत्रत्वस्वीकारे बाधकानि निपातनानीत्यनेन शास्त्राप्रवृत्तिरुचितैवेति भावः । स्वाङ्गे तस्प्रत्यये । प्रत्ययग्रहणपरिभाषालब्धमर्थमाह । तस् प्रत्ययान्त इति । मुखतःकारमिति आद्यादित्वात्तसिः । न च स्वांगे तसीत्येव वक्तव्ये प्रत्ययग्रहणं व्यर्थमिति वाच्यम् । मुखे तस्य तीतिमुखतसित्यस्यापिग्रहणापत्तेः । अत्वसन्तेति सूत्रेऽधातोरित्युक्तेर्न दीर्घः । मुखतः कृत्वेति । तृतीयाप्रभृतीन्यतरस्यामिति पक्षे समासाभावः । नाधार्थप्रत्यये च्व्यर्थे । अत्र ना च धाचेति द्वन्द्वस्य नाधार्थे शक्तिः । तस्य च द्वन्द्वस्यार्थशब्देन कर्मधारयः । नार्थौ । नानाञौ । धार्थाः । धमुञादयः । धमुञन्तात् स्वार्थे डदर्शनमिति डप्रत्ययस्यापि धाऽर्थत्वेन तदन्तस्याप्यत्र ग्रहणमिति । अन्वच्यानुलोम्ये । अन्वचीत्यस्यापि तिर्यचीति वत्साधुत्वम् । आनुलोम्यशब्दार्थं व्याचष्टे । आनुलोम्येति । भुव इत्येतदनुवर्त्तते । प्रत्युदाहरणे त्वन्वक्शब्दोविशेषवाची । तत्र स्थितः । पुरुषोऽनुकूलोऽ-

ननुकूलो वेति न प्रतीयते तेन शब्देन । प्रमाणान्तरेण तथा निर्णय इति त्व-न्यत् । अत्र णमुल् न । समानकर्तृकयोरिति क्त्वाप्रत्ययस्तु भवत्येव । सर्वेष्टस्य कृदन्तस्य प्रयोगस्य सिद्धिः सिद्धिशब्दो मङ्गलार्थः ॥

* ॥ इति कृदन्तविवरणम् ॥ *

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्यसद्यशः पार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायां शब्देन्दुशेखरव्याख्यायाङ्कृदन्ताख्यम्प्रकरणं सम्पूर्णम् ॥ + ॥

सम्वत् १९ ४४ मिति कार्तिक वदि १३

शुभंभूयात्

# ॥ अथ वैदिकी प्रकरणम् ॥

## ॥ श्रीगणेशाय नमः ॥

प्रणम्य परमात्मानं वैदेहीपतिमव्ययम् ॥
वैदिकस्वरयोर्व्याख्याङ्कुर्वेऽथ क्रमशोऽधुना ॥ १ ॥

वेदलोकसाधारणशब्दसंस्कारन्निरूप्यावसरसङ्गत्या वेदमात्रसम्बन्धिसंस्कारन्निरूपयति । अथेत्यादिना । छन्दसि पुनर्वस्वोरेकवचनम् । द्विवचनस्यैव प्राप्तौ निमित्तमाह । द्वे तारे इति । एकवचनस्य विशिष्यविधानाभावे द्विवचनमेव स्यादिति भावः । उत्तरत्रेति । विशाखयोश्चेति सूत्रादुत्तरत्र तिष्यपुनर्वस्वोर्नक्षत्र द्वन्द्व इतिसूत्र इत्यर्थः । वृषण्वस्वश्वयोः । वस्वश्वशब्दयोरप्रत्ययत्वाङ्गत्वे यचिभमितिसूत्रस्याप्राप्तौ उपसङ्ख्यायते । वृषन्शब्दे वृष्धातोः कनिन्युवृषीति विहितकनिनन्तः । नन्वल्लोपाभावे कारणस्य भत्वस्याभावः प्रदर्शयितुमुचितो न त्वङ्गत्वाभाव इत्यत आह । अङ्गस्य भस्येतीति । एकत्वाश्रयणेनेति । एतेनाङ्गसंज्ञाया अप्यल्लोपनिमित्तत्वमुक्तम्भवति । नभ इत्यादिवार्त्तिकयोश्छन्दसीत्युपादानाभावादत्रैवानयोर्लेखने किङ्कारणमत आह । एतद्वार्त्तिकद्वयमिति। अयस्मयादीति छन्दसि । अयस्मयादीनि शब्दरूपाणि छन्दसि निपात्यन्त इत्यर्थः । अत्र किन्निपात्यत इत्याकाङ्क्षायामाह । सूले संज्ञाद्वयमिति । कल्पनालाघवादाह । संज्ञाद्वयप्रयुक्तं कार्यमिति । एतेन प्रयोजनानुरोधेन भपदसंज्ञे बोद्धव्ये । तेनायस्मयशब्देऽयस्शब्दस्य भसंज्ञामात्रस्यानेन विधानेऽपि नोभयसंज्ञान्यपीति वार्त्तिकविरोधः । अयस्मयशब्देऽयसोविकार इत्यर्थे द्वयचश्छन्दसीति मयट् । वाचासिनाः वाजिनाः । अयस्मयादिसमुदायस्य पाठः । तस्य समुदायस्य यथोपपत्तिस्तथा भपदसंज्ञयोः कल्पना कार्या ते प्रागिति सूत्रस्य

पूर्वं व्याख्यातत्वात् पुनर्लेखनस्य वीजमाह । ते प्रागित्यनुवर्त्त्येति । छन्दसि परे-ऽपीत्यपिना पूर्वप्रयोगेऽपि साधुत्वमेव । अत एवानुव्यचलदित्यस्य सिद्धिः । व्यवहितप्रयोगादेव गतिरनन्तर इति सूत्रेऽनन्तरग्रहणञ्चरितार्थम् । न च ते प्रागिति सूत्रङ्गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति नियमार्थम् । एवञ्च तत्सूत्रानन्तरञ्छन्दसि नेति सूत्रङ्कर्त्तव्यन्तेन पूर्वोक्तनियमस्य निषेधे सिद्धे प्रकृतसूत्रद्वयन्न कार्यमिति वाच्यम् । तन्त्रेण क्वचिल्लोकेऽपि व्यवहितप्रयोग इत्ये-वमर्थं व्यवहिताश्चेत्यस्यावश्यकत्वात् । तेन सुकटङ्कराणि वीरणानीति भाष्यप्रयो-गस्योपपत्तिः । भाष्ये तु धातोः प्राक् प्रयुज्यमाना एव ते गत्युपसर्गसंज्ञा भव-न्तीति संज्ञानियमपक्षमाश्रित्यैतत्सूत्रद्वयम्प्रत्याख्यातम् । न च छन्दसि परत्र व्यवधानेन यत्र प्रयोगस्तत्र गत्युपसर्गसंज्ञाया असत्त्वेऽपि यथा साधुत्वन्तथा लोकेऽपि परप्रयोगे व्यवहितप्रयोगे वा साधुत्वापत्तिरिति वाच्यम् । क्वचित्तथा प्रयोगे इष्टत्वात् । वारुणीमद्भविशङ्कमथा विस्वत्तुषोऽभवदसावविराग इत्यत्र यथा । तेन स्वाध्येन भूयत इत्यस्योपपत्तिः । पचति प्रेति प्रोदनम्पचतीत्यपि च तर्हि साधुस्यादिति तु नापादनीयम् । अनभिधानात् । तदुक्तम्भाष्ये । अनि-ष्टादर्शनात् । न हि कश्चित्प्रपचतीति प्रयोक्तव्ये पचति प्रेति प्रयुङ्क्ते । यदि चानिष्टन्दृश्येत ततो यत्नार्हं स्यादिति । धातुपाठे भूधातोरादौ पाठाद्भवतेः प्रागुपन्यासे कर्तुमुचिते इन्धिभवतिभ्यामित्युपन्यासे किम्बीजमत आह । इ-न्धिभवतिभ्यामिति ॥

## इति प्रथमोऽध्यायः ।

ह्रयत इति । हुधातोः कर्मणि अन् । अग्निशब्दाच्छेषे षष्ठी तदन्तेन स-मासः । विधायकाभावेन न चतुर्थीसमास इति भावः । न च यवाग्वाऽग्निहो-त्रञ्जुहोतीत्यत्र विशेष्यविशेषणवाचकपदयोरसमानविभक्तिकत्वात्कथमभेदान्व-य इति वाच्यम् । विरुद्धार्थकविभक्त्यनवरुद्धत्वात् । नचैवं लोकेऽपि सुरूपेष्व-श्वानां स्वामीति शब्दात्सुरूपशब्दार्थाभेदान्वयबोधापत्तिरिति वाच्यम् । एक-स्या आकृतेश्चरित इतिन्यायेन तादृशप्रयोगस्याभावात् । वेदे तु न तथा निय-

मः। ह्रुधातोस्त्यागपूर्वकप्रक्षेपे वर्त्तनादेव यवाग्वाः कर्मत्वम्। अयमारम्भ इति। दिवस्तदर्थस्येति षष्ठी बाधनार्थः। ननु पुरुषमृग इतिवाक्ये चन्द्रमसश्शब्दादपि षष्ठी स्यादत आह। बहुलग्रहणादिति। वार्त्तिके बहुलग्रहणादित्यर्थः। अयम्। वार्त्तिकद्वयरूपः। परवल्लिङ्गमित्यस्य बाधनाय हेमन्तशिशिराविति-सूत्रमारब्धम्। शिशिरशब्दस्य नपुंसकत्वे प्रमाणन्तु वज्रान्धकारेति लिङ्गानुशासनसूत्रे शिशिराणि नपुंसक इत्युक्तिरेव। ननु शिशिरोऽस्त्रियामिति कोशवशाच्छिशिरशब्दस्य पुंस्त्वमप्यस्तीत्यत आह। शिशिरशब्दस्येति। इत्येतन्निवृत्तय इति नपुंसकत्वपक्षे प्राप्तस्येत्यादिः। मतान्तरमाह। अमरस्येति। लिङ्गानुशासनविरोधात्प्रमाद इत्यर्थः। हनति। हन्तीत्यर्थः। शयने। शेते। त्राध्वम्। त्रायध्वम्। दाति। ददातीत्यर्थः। विवष्टीति। अत्र श्लौ द्वित्वे बहुलञ्छन्दसीतिसूत्रेण वक्ष्यमाणेनाभ्यासस्येत्वम्। मन्त्रे घसह्वरणस। अक्षन्निति। अदेर्लुङ् तस्य झिः। च्लिः। लुङ्सनोर्घस्लृ इति घस्लादेशः। ह्वरेति ह्वृ कौटिल्ये इत्यस्य कृतगुणकस्यानुकरणमकार उच्चारणार्थः। णशेतिकृतणत्वानुकरणम्। कृत्वमिति। एतदभावे व्रश्चेति षत्वे प्रणट् इति रूपम्। अक्रन्निति। कृञ इति। झेरादेशे ङित्वाद्गुणाभावे यण्। अज्ञतेति। जनेर्लुङि तस्य झादेशे लेर्लुकि कृते अजनिषतेति प्राप्ते॥

## इति द्वितीयोऽध्यायः।

अनुप्रयुज्यमानमकृशब्दं साधयति। कृञो लुङीति। अत्राप्यनुप्रयुज्यमानः कृञ् क्रिया सामान्यवाची। तदर्थे आमन्तार्थस्याभेदेनान्वयः। पावयां क्रियात्। लिङन्तस्येदं रूपम्। लोक इति। वेदेऽपि लोकवद्दृश्यमानमकृतसूत्रे विदाङ्कुर्वन्त्वित्यतोऽन्यतरस्याङ्ग्रहणानुवृत्त्या साधनीयम्। पावयां क्रियादित्यत्र भवतेः पुनातेर्वा प्रयोगः णिजन्तस्येदं रूपम्। विदामक्रन्। विदेर्लुङ्याम्। लुङन्तकरोतेरनुप्रयोगः। मन्त्रे घसेति लेर्लुक्। गुपेश्छन्दसि। चुरिति णिश्रीत्यतश्चङिति चानुवर्त्तते। अजूगुपतम्। गुपेर्लुङ्। थसस्तयादेशः। तुजादीनान्दीर्घोऽभ्यासस्येति दीर्घः। अगोप्समिति। ऊदित्वादिडभावे व्रदव्रजेति वृद्धिः

सिचस्तु झलो झलीति लोपः । नो नयति । गुपेरित्यतश्छन्दसीति वर्त्तते। मात्वायत इति। त्वायतः त्वामिच्छतः जरितुः स्तोतुर्ममकारमभिलाषम्माऊनयीः ऊनम्माकार्षीरित्यर्थः। माऽनन्निति लोके। ऊनधातोश्चुरादेरदन्तात्णिचि चङि णौ तस्याल्लोपस्य स्थानिवद्भावेन न शब्दस्य द्वित्वम्। ध्वनयीदिति चौरादिकस्यादन्तस्य ध्वनशब्द इत्यस्य घटादिपठितनान्तस्य वा रूपम्। भाषायान्तु अदध्वनत्। अदिध्वनदिति वा। ऐलयीत्। इल प्रेरणे चुरादिः। भाषायान्तु ऐलिलदिति। आर्द्दयीत्। अर्द्द गतौ याचने हिंसायाञ्च। भाषायामार्द्दिदत्। येतुमस्यान्तस्यैतद्रूपम्। अमरदित्यत्र व्यत्ययो बहुलमिति परस्मैपदम्। छन्दसि निष्टर्क्यं। यदुक्तम्मूले क्वन्ततेरित्यादिना तत्र प्रमाणमाह। निष्टर्क्यं व्यत्ययमित्यादिता। अत एव। दीर्घस्य निपातनादेव। देवयज्येति स्त्रियामिव। यजेर्यः प्रत्ययोऽधिकरणे। देवशब्देन कर्मषष्ठ्यन्तेन समासः। ब्रह्मवाद्यमित्यत्र वदेर्ण्यत्। न च यत्प्रत्यय एव दीर्घनिपातनमस्त्विति वाच्यम्। यतो नाव इत्यादुदात्तापत्तेः। ब्रह्मोद्यं वदन्तीत्यत्र तु व्यत्ययो बहुलमिति क्यप् तदेवाह। लोके त्विति। ब्रह्मोद्यमित्यत्र व्यत्यया स्वीकारे स्यताक्यपो बाधः स्यात्। छन्दसि वनसन। वनसनौ वनषणसम्भक्ताविति भ्वादिपठितौ गृह्येते। न तु तानादिकौ। सानुबन्धकत्वात्। ब्रह्मवनिमित्यत्र ब्रह्मवनतीति विग्रहः। अत एव। वैदिकानान्ताद्दृश्यसम्प्रदायादेव। डक्तसूत्रे। सनोतेरन इति सूत्र इत्यर्थः। छन्दसि सहः। भजो ण्विरित्यतो ण्विरित्यनुवर्त्तते। पृतना षाडिति। षह मर्षण इतिधातोर्ण्विन् प्रत्यये उपधा वृद्धौ सहेः साडः स इति षत्वम्। हरदत्त इति। अत्राहुचिस्तु णिन्प्रत्ययस्य छन्दसि विधानेऽपि निवृत्तप्रेषणकात्सहधातोर्हेतुमणौ ततः क्विपि तुरासाहमित्यस्य लोकेऽपि साधनं सम्भवत्येवेति। अत एवाह बहवश्चेति। छान्दसा अपि क्व चिद्भाषायाम्भवन्तीत्याश्रित्य तेषां साधनमित्यपि वदन्ति किञ्च। केवलाद्वहधातोर्ण्विन्प्रत्यये सति यः प्रयोगस्तस्य छान्दसत्वेऽपि णिजन्ताद्विचि प्रयोगस्य लौकिकत्वमपि के चिदिच्छन्ति। अतएवाभ्रं मेघो वारिवाह इति प्रयोगः।वस्तुतस्तु वाह ऊडितिसूत्रस्यासिद्धंबहिरङ्गमिति परिभाषा ज्ञापकता परभाष्यप्रामाण्येन वह्नेर्वादेर्वा ण्विविचावनभिधानान्न भवतइत्यन्यत्रोक्तम्। तत्राप्यनकारान्तेऽकारान्तोपसर्गे चोपपदे इति

विशेषोपादानाज्जारवाह इत्यादि भवत्येवेति। कव्यपुरीष। वह इत्यनुवर्त्तते। एतत्साध्यानाच्छान्दसत्वमेव। हव्येऽतन्तः पादम्। पादस्य मध्ये इत्यन्तःपादम् नान्तःपादमनन्तःपादमिति समासः। एतदुपादानात्पादान्ते वर्तमानस्यास्यसाधुत्वमिति। सूले हव्यवालग्निरिति। द्वयोश्चास्य स्वरयोर्मध्यमेत्यसम्पद्यते स डकारो लकार इति प्रातिशाख्याल्लकारः। जनसनखन। अब्जा इत्यादीनामर्थमाह। अप्सु त्यद्यत इत्यादिना। सप्तम्या अलुगिति। हलदन्तादित्यनेनेत्यादिः। अवे यजः। अवशब्दे उपपदे यज्धातोर्ण्विन् स्यात्। मन्त्रे श्वेतवहोक्थशस्त्यत्रावयजेति पाठे कर्त्तव्ये पृथक्सूत्रकरणस्य प्रयोजनमाह। योगविभागेति। विजुपे छन्दसि। यज इति वर्त्तते। अत्र मन्त्र इत्यनुवर्त्तमाने छन्दो ग्रहणं ब्राह्मणसङ्ग्रहार्थम्। मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम्। एवञ्च मन्त्रब्राह्मणान्यतरत्वं छन्दस्त्वमिति केचित्तन्न युक्तमित्याशयेनाह। छन्दो ब्राह्मणेति। मुख्यछन्दस्त्वस्येति। एव प्रकृतसूत्रे छन्दसीत्युपादानं यदि यस्य मुख्यछन्दस्त्वम्मन्त्रस्य तस्यैव बोधनायेति चेन्मन्त्रस्य इत्यनुवृत्त्यैव सिद्धिरिति भावः। आतो मनिन्क्वनिबिति सूत्रोदाहरणमाह। सुधीवेत्यादाविति। वनिपि भूरिदावेति। बहुलञ्छन्दसि। ब्रह्मभ्रूणवृत्रेष्विति नियमव्यावर्त्तितः क्विबन्यस्मिन्नपि यथा स्यादित्येवमर्थमिदं सूत्रमित्याह। उपपदान्तरेऽपीति। धातुसम्बन्धाधिकारस्थमिति। तथा च तेन न सर्वत्र सिद्धिरिति शेषः। उत्तरार्थः। भाषायामिति सूत्रार्थः। अभावायेति। एवञ्च छन्दसीति पृथक्सूत्रेण लिङ्विधानसामर्थ्यात्कानचो विकल्पे सिद्धे वा ग्रहणमुत्तरार्थम्। लिटः कित्वादेव। न चैवमिति। एवम्। किन्त्वस्य प्रतिषेधविषये आरभ्यमाणस्यापि गुणस्य प्रतिषेधार्थत्वे। समाधत्ते। ऋकारान्तरेति। अररिवानित्यत्र रा दान इति राधातोर्लिटः क्वसोर्वस्वेकाजितीट्। ततो नञ्समासे पूर्वपदप्रकृतिस्वरः। अद्यायुशब्दे च दीर्घादटीति रुत्वमातोटिनित्यमिति नित्यमनुनासिकः। किं क्याच्छन्दसि। क्यादित्यनेन क्यच् क्यङोरेव ग्रहणमिति भ्रमवारणायाह। कि-क्यो य इतीति। क्यादित्यस्य क्सहिताद्यशब्दादित्यर्थात्। अनुसूयुव इति। असूयतेः कण्ड्वादियगतात्प्राप्तस्याप्यु प्रत्ययस्याप्रत्ययादित्यनेन बाधादस्यासाधुत्वम्। लोहितादिसूत्रभाष्यरीत्येति। तत्र हि क्यषः ककारस्य क्याच्छन्दसीत्यत्रास्य

ग्रहणप्रयोजनन्तेन तुरण्युर्भुरण्युरित्येतत्सिद्धिरूपप्रयोजनमभिधाय याच्छन्दसीत्येवास्तु तावतापि सिद्धिर्भविष्यतीत्युक्त्वा इदन्तर्हि प्रयोजनम् यत्तदक्ष्यकार इतिदीर्घत्वन्तत्र किद्ग्रहणमनुवर्त्तते तदिहापि यथा स्यात् । लोहितायतीति । किम्पुनः कारणन्तत्र क्ङिद्ग्रहणमनुवर्त्तते । इह मा भूत् । उरुपाध्रुष्णुयेति । अत्र तृतीयैकवचनस्य स्थाने सुपां सुलुगिति याादेशः । यदि तत्र क्ङिद्ग्रहणमनुवर्त्तते पित्र्यमिति रीङ्भावो न प्राप्नोति । रीङ्भावे क्ङिद्ग्रहणन्निवर्त्तिष्यते । पित्र्यमित्यत्र पितुरागतमित्यर्थेपितुर्यच्चेति यत्प्रत्ययः । यदि निवर्त्तते कथमसूयावसूयाच यजामह इति । असूयनेरसूया । वसूयनेर्वसूया । एवमुक्तम् । अत्र यदीति प्रतीकमुपादाय कैयट आह । यदि रीङ्भाव एव निवर्त्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्यां पूर्ववद्यादेशे कृते दीर्घाभावादसूयावसूयेति न सिद्ध्यति असूयनेः कण्ड्वादियगन्तस्यासूया । वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरमिति । मन्त्रे वृषेष । स्त्रियां क्तिन्नित्यतः क्तिन्नित्यनुवर्त्तते । ननु लाघवाय प्रकृतसूत्रे क्तिरिति पाठ्यमुदात्तवचनञ्च न कार्यमत आह । क्तौ विधातव्य इति । उत्तरार्थत्वमुपपादयति । व्रजयजोरिति । प्रमताविति । प्रमतिरित्यत्रेत्यर्थः । अत्र क्तिनो नित्वाभावे गतिकारकोपपदादिति कृदुत्तरं पदप्रकृतिस्वरः स्यात् । स्त्रियां क्तिन्नित्येव क्तिन्प्रत्यये सिद्धे प्रत्ययस्योदात्तत्वार्थं वचनम् । छन्दसि लुङ् । लोडर्थ इति । आगमत् । अत्र लृदित्वादङ् । अकरमिति । कृमृदृरुहिभ्य इत्यनेन च्लेरङ् भवति न तु मन्त्रे घसेति लुक् । सूत्रयोः कृद्ग्रहणेन पाक्षिकप्रवृत्तेरिष्टत्वात् । मृग्य इति । क्रियान्यतरस्योच्चारितशब्दादप्रतीतेरिति भावः । अयम् । सिप्प्रत्ययः । यासिसीष्ठा इत्यत्र याधातोर्लिङ् तस्य स्थाने व्यत्ययेन थास् । आशिषि चायम् । बहुलग्रहणात्सिप् । इण्निषेधः । एकाच उपदेशइतिविहितः । तत एव । छान्दसत्वादेव । इतश्च लोपः । अस्य यथा वैकल्पिकत्वन्तथाह । वेत इति । पतातीत्यत्र प्रक्रियामाह । पत्लृ गतावित्यादिना । करवावः । कृञो लटोवस् । उर्विकरणः । आट् । आडुत्तमस्य पिच्चेत्यतः पिद्ग्रहणानुवृत्त्याऽडाटोः पित्वाद्विकरणस्य गुणः । करोतेरुत्वाभावश्च । अत्र वस्मसोरित्येव सूत्रयितुमुचितम् । मादयैत इति । मदी हर्षे । णिजन्ताल्लेट् । प्रथमस्याकारस्य ऐकारः । परिशेषात् । अन्त्यस्य हि नि-

त्यत्वाट्टेरेत्वेन निवृत्तिरेतस्तु विधानसामर्थ्यान्न भवति। न च टेरेत्वस्य शब्दान्तरप्राप्त्याऽनित्यत्वं शङ्क्यम्। वैतोऽन्यत्रेति सूत्रेऽन्यत्रग्रहणात्। यदि आत ऐ इत्यनेनान्त्यस्यापि स्थानेऽनेन ऐकारः स्यात्तदा वैत इतिसूत्रोद्देश्यस्यान्यत्रैव लाभेन तद्वैयर्थ्यं स्पष्टमेव। वैतोऽन्यत्र। वा एत इति छेदः। भेदज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्प्रतियोगिजिज्ञासायाम्पूर्वस्य पुरस्फूर्त्तिकत्वात्तद्विषय एव प्रतियोगी बोध्यः। अहमेव पशूनामीशै। ईश ऐश्वर्ये। उत्तम इट् लेट् स्थानिकः। तस्य टित इत्येत्वे ऐकारः। ग्रहा गृह्यान्तै। ग्रहेः कर्मणि लेट् तस्य झः। आट्। यकि सम्प्रसारणम्। उपसंवादाशङ्कयोश्च। उपसंवादः पणबन्धः समयकरणमित्यनर्थान्तरम्। सचान्यप्रति यदीदम्भवान्मे कार्यङ्कुर्यात्तदा तुभ्यमहमेतावद्दास्यामीति कथनरूपः। आशङ्कासम्भावना। अहमेवेति। त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचः। पशवः लौकिकाः। नेज्जिह्मायन्त इति। इच्छब्द आशङ्काद्योतकः। जिह्मम्पापम्। जिह्माचरणेन नरकपातः सम्भाव्यते स मा भूदित्यर्थः। तच्च पापन्न सर्वङ्किन्तु कुटिलन्तच्च कौटिल्यङ्किमित्याकाङ्क्षाशान्तये आह। जिह्मायन्त इतीति। अत्र जिह्मशब्दात्परेच्छायाङ्क्यच्। अत्र नेच्छायाङ्क्यच्। किन्तु आचार एवेति वादिमतमाह। अन्ये त्विति। छन्दसि शायजपि। अस्कभायेति। स्कन्भधातोर्लङ्। तस्य तिप्। अपिशब्दाद्धावपि शायच्। गृभायेति। ग्रह उपादाने। लोट् सेर्हिः। क्र्यादित्वादस्माच्छ्नातस्य शायच्। ग्रहेः सम्प्रसारणम्। शानच उदाहरणं बधानेति। हृग्रहोर्भ इत्यस्योदाहरणमाह। गृभ्णामीति। व्यत्ययो बहुलम्। व्यत्ययपदं व्याचष्टे। व्यतिक्रम्येति। णजिति। कर्मव्यतिहारे णजिति णच्। तस्येति। लिङ इत्यर्थः। धातोः। त्वधातोः। ननु व्यत्यय इत्येवसूत्र पाठ्यम्। छन्दसि शायजपीत्यन्तस्य विकरणप्रकरणान्ते पाठेनप्रत्यासत्त्याविकरणानां लाभे सिद्धे बहुलग्रहणं सर्वोपाधीनामपि व्यत्ययो यथा स्यादित्याह। विकरणेति। ननु दक्षिणाया इत्यत्र सुपः षष्ठ्याव्यत्ययेऽपिस्याडागमो दुर्वार आगमस्यैतेष्वपरिगणनादत आह। छान्दसत्वादिति। दक्षिणाया इतिप्रयोगस्य छान्दसत्वादित्यर्थः। उपग्रहपदं सुप्तिङित्यत्रोपात्तं लाक्षणिकमित्याशयेन व्याचष्टे। उपग्रहपदेनेति। यद्यपि मकरन्दादिवाचको मधुशब्दोऽर्द्धचादिस्तथापि तत्र पठितादे-

न्योनित्यन्नपुंसक इत्याशयेनाह। अमृतेति। कारकवाचकस्य क्तप्रत्ययस्य व्यत्ययः सम्बौनप्रतीयत इत्याशयेनावग्रहेण पठति। अन्नअदायेति। कर्तर्यच्। तदन्तेन षष्ठ्यन्तान्न शब्दस्यसमासे सुपो लुकि समासे संहितायानित्यत्वादन्नैवमव ग्रहेण प्रयोगोऽनुचित इत्याशयेनाह। लक्षणेनेति। कृत्तद्धितानामित्यत्र तद्धितपदन्दीव्यत्याद्यर्थे विधीयमानठगादीनाङ्कर्तृवाचकत्ववादिनो मतेन। वस्तुतो नैष तद्धितः कारकपरः। तद्धितार्थघटकदेवनादेरक्रियात्वात्। एवञ्चेदन्तद्धितप्रत्ययव्यत्ययमात्रतात्पर्यकं बोध्यम्। अत एव त्वं वेत्थयति ते जातवेदः विश्वेदेवा सोमयुतोयतिष्ठनेत्यत्र क्विमो विहितो डतिर्यच्छब्दादपि दृश्यते। मन्त्वं वोचेमाग्नये॥ वच धातोराशीर्लिङोमसादेशः। अङ्। उम्। छन्दस्युभयथेतिलिङः सार्वधातुकत्वाद्यासुट् इयाधिशि यलोपः। छन्दस्युभयथा। यद्यपि संज्ञयोःसमनियतत्वन्तथाधि कार्यस्य तत्तत्संज्ञानिबन्धनस्य छन्दसि दृष्टानुविधानेननियम एव। तेनातिप्रसङ्गो न शङ्क्यः। आट्टगमहन। अत्र आदितिदान्तं थान्तं वा। तेन तपरपदे पञ्चमीसमासेऽपि ऋकारपदेशदीर्घस्यापिग्रहणः सिद्धिः। असंयोगाल्लिट्किदित्येव सिद्धेकिकिनोः कित्वं कार्यविशेषार्थमित्याह मूले लिड्वद्भावादेवेति। विना पि वतिं वत्यर्थो गम्यते तेन लिड्वदित्यस्य लाभः। अनेन लिटि यत्कार्यन्तदतिदिश्यते एवं हि किकिनोः स्वरूपाबाधो भवति। तेन लस्य स्थाने विधीयमानादेशो न। तुमर्थे सेसेनसे। तुमशब्दोऽत्र तु सुन्परः। प्रयैरोहिष्यै। प्रपूर्वकाद्याधातोः कैप्रत्ययः। रुहेरिष्यै नञि व्यथिष्यायम्। दृशे विख्ये च। केप्रत्ययस्तुमर्थे निपात्यते। पूर्वसूत्र एवैतावपि पठितुं योग्यौ। कृत्यार्थे तवैकेन्केन्यत्वनः। अत्र कृत्यार्थशब्देन भावकर्मणोर्ग्रहणन्तयोरेवेतिसूत्रे विशिष्यतयोरुपादानात्। करणादौ स्नानीयमित्यादौ यद्यपि कृत्यो भवति तथापि बाहुलकादिनेति न स प्रतिपदोक्तः। नमूच्छितवै इत्यत्र तवैप्रत्ययः कृत्यार्थे भावे नमूच्छितव्यमित्यर्थः दिदृक्षेण्य इति। दृशधातोः सनिकेन्यः। अतो लोपः। कर्त्वमित्यत्र कृञस्त्वन्। गुणः। कृत्यमित्यर्थः। अवचक्षे च। चक्षिङ् एशप्रत्ययः। प्रत्ययस्य शित्वात्सार्वधातुकत्वमिति ख्याञादेशाभावः। भावलक्षणेस्थेण्।लक्ष्यतेऽनेनेत्यर्थे लाक्षणमिति। भावोऽत्र धात्वर्थः। आसंस्थाधातोः सीदन्ति। अत्र सम्पूर्वकः स्थाधातुः समाप्तौ

वर्त्तते । सेतिष्ठते पितृयज्ञ इत्यत्र यथा । संख्यादीनामवधित्वेन सद्धात्वर्थलक्षणत्वम् । अस्मिन् सूत्रे तुमर्थ इत्यस्य सम्बन्धादजन्तो सुन्प्रत्ययो भावे । उदेतोः अपकर्तोरित्यादौ इणादिधात्वर्थो यस्य लक्षणं सा क्रिया यथा यज्ञमूहनीया । सपितृदोः कसुन् । विसृप इसि । सृप्ऌ गताविति गत्यर्थकात् सृप्धातोर्भावस्य लक्षणत्वे गम्ये भावे कसुन् । कित्वाद् गुणाभावः । एवमातृद इत्यत्रोत्थ दिरधातोर्हिंसानादरार्थकात्कसुन् ॥

## ॥ इति तृतीयोऽध्यायः ॥

रात्रेश्चाजसौ । राशदिभ्यां त्रिपितित्रिप्प्रत्ययान्तो रात्रिशब्द आद्युदात्तः । अस्मादजस्विषये ङीपि यस्येति लोपेऽप्यनुदात्तस्यैव लोप इत्युदात्तनिवृत्तिस्वरो न । अत्र नित्यं संज्ञाछन्दसोरिति सूत्रात्संज्ञाछन्दसोरित्यनुवर्त्तते । एवञ्च संज्ञायां लोकेऽपि । सोऽप्याद्युदात्त एव । एवञ्च यत्फलितन्तदाह । असंज्ञाविषय इति । नित्यञ्छन्दसि । आरम्भसामर्थ्यादिति । विकल्पस्य पूर्वेण सिद्धेः । एवञ्च भुव इतिसूत्रविहितो ङीङ् नित्यएव । भुवश्च । भूधातोर्डुप्रत्ययेन कृस्वान्तोयम् । क्विबन्तस्य तु स्वयम्भूः । मुद्गलाच्छ । इन्द्रवरुणेतिसूत्रे वार्त्तिकमिदम् । ङीषो लित्वे नानुगाकारस्योदात्तत्वम् । दीर्घजिह्वी च छन्दसि । नखमुखादित्यतः संज्ञायामित्यनुवर्त्तते । कद्रुकमण्डल्वोः । ऊङुत इत्यत ऊङितिवर्त्तते । गुग्गुल्वादीनांलोकेस्त्रीदाह । गुग्गुल्वादीनामिति । पतयालुः स्पृहिगृहीत्यालुजन्तः । अव्ययात्त्यप् । प्राग्व्याख्यातमपि आविष्ट्यस्येत्यत्रानुवृत्त्यर्थम्पुनरुपात्तम् । आविष्ट्यस्योपसंख्यानम् । आविष्ट्यशब्द आविर्भूत इत्यर्थे वर्त्तते । कृस्वात्तादाविति षत्वम् । त्यपस्तकारस्य ष्टुत्वम् । द्व्यचश्छन्दसि । मयड्वैतयोर्भाषायामित्युक्तेरप्राप्तौ मयड् विधीयते । द्व्यच इतिप्रातिपदिकस्य विशेषणम् । डश्छन्दसि । सप्तम्यन्तात्सभाशब्दात्साध्वित्यर्थे ढः स्यात् । पठ्यत इति । एवञ्च छन्दसि सर्वविधीनां वैकल्पिकत्वाद्यतो नाव इत्यस्याप्रवृत्तौ तित्स्वरितमित्यस्य प्रवृत्तौ तदन्तस्य स्वरितत्वमुपपद्यत इति भावः । पाथोनदीभ्यां ड्यण् । भवार्थे पाथोनदीभ्यांड्यण् स्यात् । अत्र

पाथस् शब्दोऽन्तरिक्षवाची पातिलोकानवकाशदानेनेति वृत्तिः। यद्यपि जलेऽ-न्नेचायमुणादिषु व्युत्पादितः। अमरसिंहोऽपि कबन्धउदकम्पाथ इत्याह। त-थाप्युणादयो बहुलमिति बहुलग्रहणादन्तरिक्षेऽपि भवतीति तद्भावः। वशन्त-हिमवद्भ्राम्। विशिर्भ्रूचेति व्युत्पादितोऽयम्पल्वलवाची। पल्वले विद्यमाना इ-त्यर्थः। स्रोतसो विभाषा ड्यड्ड्यौ। जलप्रवाह इति। नद्यादिप्रवाहेचाऽयम् न तु जलसामान्यस्य। सगर्भसयूथ। प्रत्ययोऽयं नित्। तेनैतदन्तस्याद्युदात्तत्व-म्। पूर्वेण अग्राद्यदितिसूत्रेण। समुद्राभ्राद्घः। अभ्रशब्दस्य पूर्वनिपाते कर्त्तव्ये परनिपातकरणम्पूर्वनिपातस्यानित्यत्वबोधनाय। बर्हिषि दत्तम्। अव इति द-त्तमित्यस्यादिः अर्थविशेषनिर्देशादित्यस्याग्रे बोध्यम् अणछयोरिति। रक्षस्श-ब्दात्प्राप्तस्याणः यातुशब्दाच्छस्येत्यर्थः। प्रशस्यस्य श्र इतिनिर्देशात्कर्मणि प्रा-प्तिवारणायाह। बाहुलकादिति। सम्प्रसारणमिति। ततो गुण इति शेषः। हविष्या। हविषे हिता। गवादित्वाद्यत्। असुरस्य स्वम्। शैषिकाणोऽपवादः। मायायामण् पूर्वसूत्र विहितस्य यतोऽपवादोऽयम्। असुरपदघटको नञ् विरो-ध्यर्थक इत्याशयेनाह। असुरेति। तद्वा नासामुपधानो। अत्रोपजानशब्दः क-रण ल्युडन्तः। उपधीयत अनेन इतिव्युत्पत्तेः। चयनस्य करणमित्यर्थः। वर्च-स्वानिति। वर्चशब्दोऽस्त्यस्मिन्मन्त्रे समन्त्रो वर्चस्वान्देवस्य त्वा सवितुरित्यादि-को मन्त्रः। यद्यपि तस्मिन्मन्त्रे पदान्तराण्यपि सन्ति तथापि छन्दसि दृष्टस्यै-वानुविधानान्मत्वन्तादेवायं यत्प्रत्ययः। यत्तु स्तुष्टीरुपदधाति। प्राणभृत उपद-धातीत्यादिः प्रयोगस्तत्र स्तुष्यादिशब्दानान्तद्वन्मन्त्रकरणकोपधानकर्मीभूता-स्विष्टकासु लक्षणया प्रयोगः। अश्विमानण्। अश्विमच्छब्दादुक्तेऽर्थेऽण् स्यात् मतुपश्च लुक्। आश्विनीरुपदधाति। अश्विन्शब्दवान्मन्त्र उपधानोयासान्ता इत्यर्थः। मतुपो लुक् इनण्यनपत्यइति प्रकृतिभावः। अश्विमानित्येकवचनम-श्विमत्वसामान्यविवक्षया। तेन बहूनाम्मन्त्राणामश्वितमत्वेऽपि नक्षतिः। व्य-यस्यासुमू। अत्र मूर्द्धन्शब्दस्तत्प्रकृतिके लाक्षणिकः। मतुब्शब्दः प्रत्ययग्रहण-परिभाषया तदन्तपरस्तथा च मूर्द्धन्शब्दप्रकृतिकं यन्मनुवन्तन्तस्मान्मतुप् स्या-दित्यर्थः। वयस्यास्वित्यत्र तु वयस्वच्छब्दात्पूर्वसूत्रेण यत्। तेनोभयवत्त्वमर्थ-सिद्धम्। तदाह मूर्ध्ने यस्मिन्मन्त्र इति। मूर्द्धन्वतीरित्यत्रातो मुडिति नुट्। न च

वयस्याशब्दस्य छन्दस्येव साधुत्वान्व्याख्यानात्सूत्रे प्रयोगोऽनुपपन्न इति वाच्यम्। छान्दसा अपि क्वचिद्भाषायाम्भवन्तीत्यस्य ज्ञापनार्थत्वात्। छन्दोवत्सूत्राणीति-भाष्यकारेष्ट्या सिद्धत्वात्। यस्मिन्मन्त्रे मूर्द्धन्शब्द एवास्ति वयस्शब्दस्तु नास्ति तन्मन्त्रोपधेयासु मूर्द्धन्वतीरिति प्रयोगः क्वचिद्दृष्टस्तु लक्षणया साधुः। मत्वर्थे मासतन्वोः। अत्र तनूशब्दो दीर्घान्तस्तेन घित्वाभावान्नास्य पूर्वनिपातः तदा-ह। सूत्र इति मासतन्वोरिति समुदायोपाधिरित्याशयेनाह। मत्वर्थ इत्यादि-ना। मधुमन्त इति। अत्रयन्न भवतीति शेषः। अनन्तरार्थेवेतीति। अत्र वा-शब्दश्चार्थे। तेन मत्वर्थे मासतन्वोः समुदायवाच्यत्वे प्रत्ययो यथा भवति तथा मासतन्वोरेव वाच्ययोरनन्तरार्थेऽपि प्रत्यय इत्यस्य लाभः। लुगिति। प्रत्ययस्य लुगित्यर्थः। मधु अस्त्यस्मिन्नाभांसि सन्त्यस्मिंस्तयोस्त्यस्मिन्नित्यर्थे मासे एव वा-च्ये प्रत्ययस्य लुगित्यर्थः। ननु मासस्यावशिष्टसमुदायवाच्यत्वेन भस्शब्दस्य पुंस्त्वापत्तिरत आह। अन्त्ययोरिति। इषं इति। एषणमिट्। अन्यवाच्यं श-ब्द इत्याह। इडिति। इकारोदाहरणमाह। शुचिरिति। रेफेत्यस्य प्रत्ययत्व-भ्रमनिवृत्तये आह। रेफो रशब्द इति। वेशोपश आदेः। वेशोपश इति द्वन्द्व स्यादिशब्देन बहुव्रीहिरित्याह। एतदादिकादिति। भगशब्दार्थमाह। भग इति। पूर्वैः कृतमिनयौ च। पूर्वशब्दात् तृतीया बहुवचनान्तादयम्प्रत्ययः। ए-तदन्तस्य त्वेकवचनान्तत्वमपि भवति। अद्भिः संस्कृतम्। यदित्येवात्र सम्ब-ध्यते। सहस्रेण सम्मितौ घः। सम्मितिः सादृश्यम्। क्वचित्, समितावि ति पाठः। अर्थस्तु स एव। मतौ च। अत्र मतुशब्दो मत्यर्थे। एवञ्चेह सहस्रेणेति-पदम्पञ्चम्या विपरिणतस्त्वोध्यम्। मधोः। मये चेति सम्बध्यते। स्वार्थे इत्यपीति। वसोरिति योगविभागेन स्वार्थे प्रत्ययः प्रथमसूत्रेणेति भावः। अक्षर समूहे। अक्षरं व्यञ्जनसहितोऽच्। अत्रार्थानिर्देशादयम्प्रत्ययः स्वार्थे। सर्वदेवात्तातिल्। सर्वदेवादिति समाहारद्वन्द्वात्पञ्चमी। भावे च। अत्र भावः प्रकृतिजन्यबोधप्र-कारः॥

## इति चतुर्थोऽध्यायः।

विंशिन इत्यत्र विंशतिशब्दात्परिमाणोपाधिकात्षष्ठ्यर्थे ड़िनि प्रत्यये तिविंशतेरिति तिशब्दस्य निवृत्तिः। तत्र विंशतिशब्दवाच्यान्याह। आङ्गिरस इत्यादि। वत्सरान्ताच्छश्छन्दसीति सूत्रोदाहरणमाह। इद्वत्सर इत्यादि। छन्दसिघस्। समयस्तदस्य प्राप्तमित्यतस्तदस्य प्राप्तमिति ऋतोरणित्यत ऋतोरणित्यत ऋतोरिति वर्त्तते। उपसर्गाच्छन्दसि धात्वर्थे। अत्र धातुशब्दो धात्वर्थलाक्षणिको न तु धातुसंज्ञकशब्दपरः। तस्योपसर्गार्थत्वासम्भवात्। अर्थशब्दश्च प्रयोजनवाची। एवञ्च धात्वर्थोऽर्थः प्रयोजनं यस्येत्यर्थः इत्याशयेनाह। धात्वर्थविशिष्टसाधन इति। उपसर्गाणामयं स्वभावो यत्र समभिव्याहृतधातुप्रतिपाद्या क्रियास्ति तत्र तन्नतं विशेषन्द्योतयन्ति यत्र तु तथा नास्ति, तत्र क्रियाविशिष्टे साधने वर्त्तनमिति। यथा निष्कौशाम्बिरित्यादौ। एवञ्च यदुद्वत इत्यत्रोद्गमनविशिष्टकर्त्रभिधायकत्वमव्याहतमेव तदाह सूत्रे उद्गतानिति। थट् च छन्दसि। तस्य पूरण इत्यतो डडिति भान्तादसंख्यादेरित्यतो नान्तादिति चानुवर्त्तते। पञ्चथमित्यस्य पञ्चानाम्पूरणमित्यर्थः। अत्र न क्रत इति। अत्रैव न क्रत इत्यर्थः। छन्दसि परिपन्थि। पर्यवस्थातृशब्दात्स्वार्थे इनिः प्रत्ययः स्यात् अवस्थातृशब्दस्य पन्थिपरि इत्यादेशौ निपात्येते। छन्दो विन् प्रकरणे। छन्दसि विधीयमानविन्प्रकरण इत्यर्थः। समान्यत उक्तमपि दीर्घत्वं विशेषविषयकमित्याशयेनाह। द्वयोर्भयेत्यादि। अन्यच्च दीर्घत्वस्य स्वतः सिद्धत्वादिति शेषः वार्त्तिकेतूपादानमत्वयविध्यर्थमिति बोध्यम्। छन्दसीवनिपौ चेति चकारेण प्रत्ययान्तरसङ्ग्रहेऽपि पूर्वसूत्रपठितसङ्ग्रह इत्याह। चाह इति। ईकारस्योदाहरणद्वयमाह। रथ इत्यादि। वनिपस्तदाह। मघमिति। वमतुपोरुदाहरणमाह। उन्नतसम्बन्धिनीत्यादिना। प्रत्ययविधौ पञ्चम्या न्याय्यत्वादाह। आनन्तर्य्ययोग इति। था हेतौ च छन्दसि। प्रकारवचने थालित्यतः प्रकारवचन इति किमश्चेति च वर्त्तते। केन प्रकारेण वेति। न पृच्छसीत्यत्रास्यान्वयः। पथ पथा च। अत्रावरशब्दस्य स्थाने पश्चादेशो अकार आकारो वा प्रत्ययो बोध्यः। तुश्छन्दसि। सूत्रारम्भप्रयोजनमाह। अजादी इत्यादिना। सङ्करो नेति। किन्तु यस्मिन् पाथावजादी विहितौ तस्मिन्नेव भवत इति शेषः। तृन्नन्तादिति। यद्ययन्तृजन्तात्स्यात्तदाऽऽसुति शब्दात्षष्ठी कृद्योगसत्त्वात्स्यादिति तृन्नन्तादे-

वायमितिस्त्रीकार्यन्तया च न लोकेति निषेधान्न षष्ठीति भावः। अत्राह हरदत्तः तृजन्तादिवायमप्रत्ययः। कृतपूर्वीकटमित्यत्र कटशब्दाद्यथा द्वितीया तथाऽत्राप्यासुतिशब्दाद्द्वितीयेति तद्दूषयति अतिशयरूप इत्यादिना। तृन्नन्तस्य शक्तौ चेति। व्यधिकरणे षष्ठी। चो हेतौ अयम्भावः। कृतपूर्वीकटमित्यत्र यथा भावक्तान्तकृतशब्दपूर्वशब्दयोः समासे विशिष्टादिनौ तदन्तार्थे कटस्य कर्मत्वविवक्षया कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वस्य कटेऽभावान्न कटशब्दात्षष्ठी तथा न प्रकृतेऽतिशयरूपेष्ठनर्थस्य करणशीलतारूपतृन्नन्तार्थकर्तृविशेषणभूतार्थविशेषणत्वात्कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वेऽपि न लोकेति निषेधान्न षष्ठी यदि तु तृजन्तादयमिष्ठन्स्यात्तदा नलोकेति निषेधाविषयतया षष्ठी स्यादेवेष्ठनर्थस्य तदा तृजन्तार्थतावच्छेदककरणकर्तृत्वविशेषणत्वात् तृजन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्मत्वस्यासुतिशब्दार्थे सत्त्वादिति। दोहीयसीत्येतस्य साधनं यथा भवति तथाह। दोग्ध्रीशब्द इति। ततः प्रागिति। प्रत्ययोत्पत्तेः प्रागित्यर्थः। असिद्धत्वादिति। सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये त्रिपादीस्थशास्त्रस्यासिद्धत्वादप्रवृत्तेरित्यर्थः। प्रत्नपूर्वविश्वेमात्थाल् छन्दसि। प्रत्नादिभ्य इवार्थेऽयं थाल्। तत्र पूर्वशब्दोऽपि द्वन्द्वघटको न तु प्रत्नशब्दः पूर्वो यस्येति बहुव्रीहिः। इमशब्दार्थमाह। इदमशब्द इति। प्रकर्षप्रकर्ष इति। प्रकर्षे विद्यमानात्प्रशब्दात्प्रकर्षे तरवित्यर्थः। अनसन्तान्नपुंसकात्। अत्र नपुंसकादिति तत्पुरुषविशेषणम्। परवल्लिङ्गमिति तत्पुरुषस्य नपुंसकत्वम्। छन्दसि च। अवयोऽर्थमिदम्। उभयतो दत इति। उभयतो दन्ता इत्यर्थः। ऋतश्छन्दसि। नद्यृतश्चेति कपोऽयन्निषेधः॥

## ॥ इति पञ्चमोऽध्यायः ॥

यो जागारेत्यत्र जागृधातोर्लिटीति विहितस्य द्वित्वस्याभावः। तुजादीनान्दीर्घोऽभ्यासस्य। अस्य सूत्रस्य छान्दसत्त्वे प्रमाणन्तु तुजादिषु छन्दः प्रत्ययग्रहणमिति वार्त्तिकमेव। तुजादीनाञ्छन्दसि दीर्घो भवति। स च यस्मिन्प्रत्यये

परत इष्टस्तस्य प्रत्ययस्य ग्रहणञ्च कर्त्तव्यमित्यस्यार्थः। अत्र यः प्रत्ययग्रहणमित्यंशः सोऽनारम्भो वा छन्दसि दीर्घत्वस्यापरिगणितत्वादित्यनेन प्रत्याख्यातः। न हि दीर्घत्वस्य परिगणनङ्कर्तुं शक्यम्। अन्येषामपि छन्दसि दीर्घत्वन्दृश्यते। पूरुषो तारक इति। येषाञ्चारभ्यते तेषामपि तस्मिन्प्रत्यये क्वचिन्न दृश्यते। मामहान उक्थपात्रम्। ममहान इति चेति। तत्रत्यप्रत्ययग्रहणस्य प्रत्याख्याने यथोक्तन्तथाह। जन्दसि सर्वविधीनामिति। तूतुजान इत्यत्र तुज्धातोर्लिट् तस्य कानच्। एवमेव महधातोर्लिटि मामहानमित्यपि। तूतावेत्यत्र तु सौत्रात्तु धातोर्लिट्। बहुलञ्जन्दसि। ह्वः सम्प्रसारणमिति वर्त्तते। बहुलग्रहणस्य फलमाह। न च भवतीति। ननु छन्दसीर इतिवत्वमिवर्णान्तात्परस्य विधीयतेरेवानित्यत्र तु न तथेति कथं वत्वमत आह। तत्र विहितेति। चायः की। चायतेः क्यादेशस्य बहुलग्रहणाद्वैकल्पिकत्वमाह। चायतेरित्यादिना। अयस्पृधेथाम्। एतेषु यथायथन्निपातनमित्याह। अयपूर्वस्येत्यादिना। अत्र तिङ्ङतिङ इति निघातस्य यद्वृत्तान्नित्यमिति निषेधः। प्रकारान्तरमिति। नात्रापशब्दः पूर्वपदङ्किन्तु स्पृध्धातोर्लङि द्विर्वचनं रेफस्य सम्प्रसारणमकारस्य लोपश्च निपात्यते। एवञ्चेदमेकमेव पदमिति। आन्टचुरित्यस्य सिद्धये आह। सम्प्रसारणेत्यादि। क्रादिनियमादिट् प्राप्तावाह। अनिट्त्वञ्चेति। तित्यैकेत्यत्राभ्यासे इकारस्य सिद्धये आह। अभ्यासस्येति। श्रीञ्धातोराशीत्तं इति रूपं यथा सिध्यति तथाह। शिरादेश इति। अनुदात्तेत्वलक्षणात्मनेपदनिवृत्तये आह। व्यत्ययेनेति। अजन्तादिति। प्राणिरजतादिभ्य इति सूत्रविहिताजन्तादित्यर्थः। मानुषीरिति प्रथमा बहुवचनमत्र मनुशब्दात्मनोर्जाताविल्यञ् मनुशब्दस्य षुगागमः। बाधकस्यामि पूर्वत्वस्याभावे बाध्यस्य प्रथमयोरित्यस्याप्रवृत्तये आह। पूर्वत्वाभाव इति। प्रत्ययलक्षणेनेति। अस्य त्यदादीनाम इत्यत्व इति शेषः। यद्यप्युक्तं शिज्ञोपात्परन्तथाप्यपरनिमित्तकत्वेनान्तरङ्गत्वाच्छिलोप एवादौ भवति। यदि तु सुपः सुलुगितिसूत्रेण लुक् तातापिण्डानामित्यादावाकारादेशस्तीत इत्यादौ च पूर्वसवर्णादेशश्छान्दसत्वान्नुमभावस्तातेत्यत्र त्यदाद्यत्वञ्च ततः सवर्णदीर्घ इति स्वीक्रियते तदेदं सूत्रन्न कार्यमिति बोध्यम्। एमन्नादिषु। एमन्नादिषु शब्देषु परेषु। त्वेमन्निति। त्वाएमन्निति।

एवञ्चाश्रीद्भविति परत्र बोध्यम् । भय्यप्रवय्ये च छन्दसि । भय्येत्यत्रापादानेऽची यदितिभीधातोर्यति गुणे यान्तादेशो निपात्यते । एवम्प्रपूर्वकाद्वीधातोर्यत् प्रवय्येत्यत्र बोध्यः । अपादाने प्रत्ययस्तु कृत्यल्युटो बहुलमिति बहुलग्रहणाद्भवति । अकारस्येति । कृदशब्दाद्भवार्थे यति सुपो लुकि च कृते कृदशब्दावयवाकारस्येत्यर्थः । प्रकृत्यान्तः । इकोऽसवर्णे इति सूत्रे येन प्रकृत्येत्यनुकृष्यत इति भाष्यकारोक्त्याऽयम्पाठोऽस्तीति निश्चीयते । नान्तः पादमित्यपि पाठः क्व चित् । अस्मिन् पाठे पादमध्यस्थस्य एङो यत्प्राप्तन्तन्नेति व्याख्यानेन पूर्वरूपे निषिद्धेऽयादेशोऽपि न भवति । वाच्छन्दसीति सूत्राच्छन्दसीत्यस्य मण्डूकप्लुत्याऽनुवर्त्तनादस्य छन्दस्येव प्रवृत्तिः मौलमृक्पादेत्यत्र ऋक्पदं वेदपरम् । प्रकृत्येति पाठे एङः पदादित्यतोऽनुवर्त्तमानमेङ इतिप्रथमया विपरिणमयितव्यम् । प्रकृत्येति तृतीयान्तम् । प्रकृतिशब्दः स्वभाववाची । दुस्त्यजा प्रकृतिर्न्दृणामित्यत्र, तथा दर्शनात् । तिष्ठेदिति क्रियापदञ्चाध्याहर्त्तव्यम् । तदाह । प्रकृत्येति । अन्तः शब्दस्याधिकरणशक्तिप्रधानस्य मध्ये इत्यर्थकस्य षष्ठ्यन्तपादशब्देनाव्ययीभावः । स्वभावेनावस्थितिश्चादेशेनानिवर्त्यत्वरूपा । तेन विकारसामान्याभावलाभः । व्यपर इत्यत्र बहुव्रीहिरन्यपदार्थश्चात्र बोद्धस्तत्प्रतियोगिको भेदोऽतीत्येतदर्थातो विशेषणम् । मूले एतेऽर्चन्तीति । अत्र एङ्पूर्वपादान्ते । अकारः परपादादौ । अव्यादवद्याद् । अत्राव्यादित्याद्यनुकरणम् । तेषाञ्च सुबन्तत्वात्समासः । अव्यादित्येतदवेराशीर्लिङ्रूपम् । अवद्यात् । अवद्यपण्येत्यत्र निपातितो योऽवद्यशब्दस्तस्य पञ्चम्यन्तस्य । अवक्रमुरिति क्रम्धातोरवपूर्वाल्लिटि तस्योसादेशे छान्दसत्वाद्द्वित्वाभावे रूपम् । अव्रतेति वृङो लुङि तस्याङ्भावे मन्त्रे घसेति च्लेर्लुकि यणादेशे । यजुषुरः । एङिति वर्त्तते । उरोऽन्तरिक्षमिति । सस्य रुत्वे उत्वे गुणः । ननु प्रकृत्यान्तः पादमित्येव सिद्धे प्रकृतसूत्रं व्यर्थमत आह । मूले यजुषि पादाभावादिति । आपो जुषाणो । यजुषीति अतीति च वर्त्तते । प्रकृतसूत्रार्थमाह । आप इत्यादिना । योगविभागस्य भाष्येऽदर्शनादाह । अस्मादेवेति । जसन्तमिति । जसन्तानुकरणम् । एवमेव परत्रापि । अम्बे इत्येतदिति । अम्बेऽम्बिके इत्यनयोस्तु न कृतस्य प्राप्तिरम्बार्थं द्व्यचरं यदीत्युक्तत्वादिति भावः।

अङ्ग इत्यादौ च । अत्राङ्ग इतिसप्तम्यन्तानुकरणम् । तेनोपस्थितस्य सप्तम्यन्ताङ्गे शब्दस्य स्वान्वययोग्यक्रियाक्षेपकत्वमित्याशयेनाह । विद्यमान इति शेष इति । षष्ठी तत्पुरुष इति । तस्य आदिरित्यर्थः । ननु सूत्रे तच्छब्दाभावात्तदादावित्यनुपपन्नमत आह । सूत्र इति । अनुदात्ते चकुधपरे । बहुव्रीहिरिति। द्वन्द्वघटितो बहुव्रीहिरित्यर्थः । स चानुदात्ते शब्दसमानाधिकरणः । अकार उच्चारणार्थ इति । अत एवाध्वरशब्देऽपि प्रवृत्तिसम्भवः । अयं सोऽग्निरिति । अत्राग्निशब्दोऽङ्गेर्नलोपश्चेति सूत्रेण निप्रत्ययविधानेन साधितोऽन्तोदात्तः । अध्वरशब्दः फिषोऽन्तोदात्त इत्यन्तोदात्त इत्युभयत्र शेषनिघातेनाकारस्यानुदात्तत्वम् । अग्रे शब्दस्याद्युदात्तत्वमाह । ऋज्र इति । रन्नन्तत्वादाद्युदात्त इति । अवयथासि च । अवयथासीति तथा सन्तानुकरणात्सप्तमी । सूत्रे थासि लङीति । अत्र पाठक्रमादर्थक्रमो बलीयानिति लङि थासीति विवक्षितम् । आङोऽनुनासिकः । अत्राङ इति ङिन्निर्देशान्ङित एव ग्रहणम् । स च वाक्यस्मरणयोरङिदिति लक्षणलक्षितो ङिद्भिन्नः । एवञ्चास्मत्र्या आ इत्यत्रे पदर्थाद्यभावात्सप्तम्यर्थद्योतक उदाहरणमित्याशयेनाह । विभक्त्यर्थेति । स्यश्छन्दसि । एतत्तदोरिति सूत्राडलीति सुलोप इति चानुवर्त्तते । स्य इत्यत्र त्यदाद्यत्वेन त्यदोदकारस्याकारे पररूपे तदोः सः सावनन्त्ययोरिति सत्वेन निर्देशः । त्यद्शब्दस्य तच्छब्दसमानार्थ इत्याशयेनाह । एष सभातुरित्यर्थ इति । क्रस्वाद्वन्द्रोत्तरपदे । अत्र चन्द्रशब्दस्येत्यर्थस्य लाभायाह । उभयनिर्देश इति । पितरामातरा च । पूर्वपदेऽराङादेशस्य निपातनमत्र उत्तरपदे तु विभक्तेः स्थाने आकारादेशे ऋतो ङीति गुणः। समानस्य । सहस्य स इत्यतः स इति वर्त्तते । सगर्भ्य इति। समानो गर्भः सगर्भस्तत्र भव इत्यर्थः । छन्दसि स्त्रियाम्बहुलम् । नन्वत्र विष्वग्देवयोरित्युक्त्वा विश्वाचीत्युपात्तन्तत्रानुपपन्नमत आह । इदमिति । तथा च विष्वग्देवयोश्चेति सूत्रस्थश्चकारोऽप्यनुवर्त्तत इति भावः । बहुलग्रहणफलमाह । बहुलग्रहणादिति । सधमादस्थयोः । अत्र सधेति लुप्तविभक्तिको निर्देशः। सधमाद इत्यस्य सहमाद्यन्ति हृष्टा भवन्ति देवा अस्मिन्नित्यर्थः । मदी धातोरधिकरणे हलश्चेति घञ् । यज्ञवाचीचायं शब्दः । मादेत्यकार उच्चारणार्थः । तेन मादयतेः क्विबन्ते सधमादो वह्न्विलत्यत्रापि सधादेशः । सह तिष्ठतीति ।

स्थाधातोः कर्त्तरि क्तः । साळ्हे साढ्वासाढा । एते त्रयः शब्दानिपात्यन्ते । तत्राप्याद्या क्त्वाप्रत्ययस्य ध्वै इत्यादेशो निपात्यते । सहिवहोरोदित्यात्वाभावस्त्र सर्वत्र ढत्वष्टुत्वढलोपदीर्घाः तृतीयस्याद्युदात्तस्य श्रवणेन त्वन्नन्तत्वम् । अत एव भूरिचक्रेति मन्त्रे साढेत्यर्थकं साह्लेत्याद्युदात्तम्पठ्यते । शत्रूणामभिभवितेति तद्भाष्ये व्याख्यातम् । अत्रेति शब्दः प्रकारे । तेन निष्ठायामपि निपातनमिदम् । अषाढमुग्रं सहमानमित्यादि । ढकारस्य स्थाने ळ्हकारादेशविधायकवचनस्याष्टाध्यायामभावेऽपि प्रातिशाख्यीयवचनेनास्य सिद्धिरित्याह । द्वयोश्चेतीति । छन्दसि च । अष्टन इतीति । अष्टनः संज्ञायामित्यतोऽष्टन इति ढ्रलोप इत्यतो दीर्घ इति चानुवर्त्तते । न चाष्टनो नलोपस्यासिद्धत्वं शङ्क्यम् । सुप्तदन्ताप्यधर्मावच्छिन्ननिमित्तकादिविधिभिन्नत्वादस्य दीर्घत्वस्येति नलोपः सुबिति सूत्राविषयत्वात् । अष्टापदीत्यत्राष्टौ पादाअस्या इति बहुव्रीहौ संख्यासुपूर्वस्येति पादशब्दान्त्यस्य लोपे पादोऽन्यतरस्यामिति ङीप् । ओषधेश्च । न च कृदिकारादिति ङीषि गतार्थता । अन्तोदात्तत्वापत्तेः । प्रकृतप्रयोगे ङीषोऽभावे तु लघावन्त इत्याद्युदात्तता सिध्यति । ऋचि तु नुघ । घशब्दोऽत्र न कृत्रिमार्थग्राहकः घशब्दस्यैव ऋग्वेदे दीर्घदर्शनात् । स्यालादिति भार्या भ्रातृवाचकात्पञ्चमी । थादेशस्य ङित्वपक्षे इति मूले । भरतेत्यत्र लोण्मध्यमपुरुषबहुवचनस्य थस्य तस्थस्थमिपामिति तादेशो लोटो लङ्वदिति लङ्वद्भावात् । ङित्वमस्य सार्वधातुकमपिदित्यनेन । सार्वधातुकत्वञ्च छन्दस्युभयथेति वैकल्पिकम् । एवञ्चातिदिष्टङित्वादयं तङिति न तु तङ्प्रत्याहारघटकः । एवन्निर्देशस्य फलमाह । तेनेति । तङितिनिर्देशेनेत्यर्थः । शृणोतेति । अत्र तप्तनप्तनथनाश्चेति तबादेशः । पित्वान्न ङित्वम् । उरुष्यशब्दः कंड्वादियगन्तो रक्षणार्थः । ततो लोट् । तस्य हिः । तस्यातो हेरिति लुक् । न इत्यस्य नश्च धातुभ्य इति णः । इकः सुञि । मन्त्र इत्यनुवर्त्तते । तेन ऋचि मन्त्रेऽस्य प्रवृत्तिः । सुञ् चात्र निपातः । अत्रैव सुञोग्रहणार्थस्तत्र ञकारः । वाषपूर्वस्य निगमे । अत्र षपूर्वस्येति पुंल्लिङ्गस्योपपत्तिमाह । दीर्घस्येत्यादिना । शमिता यज्ञे । अत्र यन्निपात्यते तदाह । यज्ञविषय इति । युप्लुवोः । ल्यपिलघुपूर्वात् इत्यतो ल्यपीति वर्त्तते । नशेरेतद्रूपमिति । लुङन्तस्येति शेषः । अत्र हि नश्धातोर्लुङि तस्य

तिङ इकारलोपे चू मन्त्रे घसेति लुकि हल्ङ्यादिलोपे नशेर्वेति कुत्वाभावपक्षे षत्वजश्त्वयोश्चर्त्वेन टः। अमाद्योगेऽपीत्यपि शब्दसङ्ग्राह्यमाह। अपिशब्दादिति। जनिष्ठा इत्यत्र जनेर्लुङ् स्यात्। आवासुरित्यत्र वप्धातोः कर्मणि लुङ् तस्य व्यत्ययेन परस्मैपदम्माङ्योगेऽप्यटो निषेधाभावः। युष्माकं क्षेत्रे भार्यायां परेषां वीजानि रेतांसि उप्तानि मा भूवन्नित्यर्थः। इश्योरे। इरे इत्यस्य झादेशस्यानुकरणम् तस्य रेचेरेचेति एकबुद्धिविषयत्वेन सहविवक्षायामेकशेषः। तनिपत्योः। वितन्निरे इति। तनु विस्तारे। लिटः प्रथमपुरुषबहुवचनम्। श्रुशृणु। एभ्यो हेर्धिः स्यात्। श्रुधीहवमित्यत्र बहुलञ्छन्दसीति शपो लुक्। शृणुधीत्यत्र श्रुवः शृचेति श्नुप्रत्ययः शृभावश्च। उतश्च प्रत्ययादिति हेर्लुक् तु न। विधानसामर्थ्यात्। स्वस्पूर्धि। पृधातोर्लोट् हेर्धिः। शपो लुक्। उदोष्ठ्येत्युत्वम्। ननु सेर्ह्यपिच्चेति ह्यादेशस्यापित्वविधानात्कथमङित्वमत आह। छन्दसि पक्ष इति। मन्त्रेष्वाङ्यादेरात्मनः। आङोऽन्यत्र सप्तम्येकवचने। ऋत्व्यवास्त्व्य। अत्र निपातनं येषां कार्याणान्तानि यथायथन्द्रष्टव्यानि। मयटो मकारस्य लोपे यस्येति लोपस्तु न। मलोपस्यासिद्धत्वात्। त्यज्जनस्य लोपे यस्येति लोपेऽपि रूपस्य सिद्धिर्वा॥

## ॥ इति षष्ठोऽध्यायः ॥

पक्षे इति यन्मूलेऽभिहितन्तदुपपत्तिमाह। सर्वेति। दुह्र इत्यत्र दुहेर्लट्। तस्य झः। टेरेत्वम्। अदृश्रमित्यत्रेरित्वादङि ऋदृशोङि गुण इति गुणस्तु न। बाहुलकात्। यद्वा बाहुलकत्वाद्दृशेरक्। व्यत्ययेन बहुवचनस्यैकवचनम्। क्वापीत्यपिशब्दसङ्ग्राह्यमाह। अपिनेति। अत्र छन्दसि सर्वविधीनां वैकल्पिकत्वेन ल्यबादेशेऽकृते रूपस्य सिद्धौ क्वाग्रहणञ्छान्दसत्वलभ्यस्याभावस्यानुवादः। अस्य फलन्तु यथा क्वचिल्ल्यबभावेऽपि साधुत्वन्तथा छान्दसत्वादेवासमासेऽपि ल्यपः साधुत्वबोधनम्। तेनाज्येनाक्षीणि अज्येति शब्दः साधुर्भवति। तथा विनायकम्पूज्येति च भवति। अपि शब्दः सर्वत्राभावस्यैव साधुत्वम्मा भूदिति क्रियते। सुपामिति षष्ठीनिर्देशादलोन्त्यपरिभाषाबाधाभावायाह। छान्दस-

त्वात्सवर्णदीर्घ इति । प्रकारान्तरमप्याह । उकारेति । अयमिति । प्रकृतौ योग इत्यर्थः । न केवलम्प्रकृतसूत्रस्यैव तत्प्रपञ्चत्वङ्किन्तु भाष्योक्तवार्त्तिकस्यापीत्याह । सुपां सुपेति । इदमुपलक्षणम् । तिङान्तिङो भवन्तीत्यपि तस्य प्रपञ्चः । आन्त्यर्यादिति । तृतीयैकवचनस्य स्थाने प्रमाणत आन्त्यर्यादीकार इत्यर्थः । पूर्वसवर्णो दकार इति । प्रकृतसूत्रस्थभाष्ये इकारस्यान्तर्यतो दकार इत्युक्तन्तेनाचामपि घोषसम्वारनादाल्पप्राणत्वम् । घोषत्वाद्यभावे निरनुनासिकाल्पप्राणस्तकारोऽपि स्यात् । अल्पप्राणत्वास्वीकारे दधौ पर्यायेण स्याताम् । अचाङ्घोषत्वे परः सन्निकर्ष इति सूत्रस्थं भाष्यमपि प्रमाणम् । तत्र हि क्वादाविराम इतिन्यासपक्षे पचतीत्यत्र द्वयोर्घोषयोर्मध्येऽघोषस्य चकारस्य सत्त्वात्संहिता संज्ञा न प्राप्नोतीत्युक्तम् । तत्रैव कैयटः । प्रयत्नविशेषजनितो वर्णाविरमविरप्यनुरणरूपोवर्णान्तरोच्चारणेऽप्यनुवर्त्तमानो घोषो क्वाद इत्युच्यते । संहिता संज्ञाभावे तु तदधिकारीयस्य स्वरितत्वस्याप्राप्तिः स्यादिति भावः । नन्वेवम्पूर्वसवर्णेन परमेव्योमन्नित्यस्यापि सिद्धौ लुक्प्रवृत्तिवैयर्थ्यमत आह । परमेव्योमन्नित्यत्रेति । संयोगान्तलोपस्यासिद्धत्वादिति । प्रकृतसूत्रदृष्ट्या तस्यासिद्धत्वात्प्रकृते लुगेवेत्यर्थः । ननु पूर्वोक्तरीत्या परमेव्योमन्नित्यादेः सिद्धौ लुग्ग्रहणमेव न कार्यमत आह । यस्तु न्वन्तीत्यादाविति । स्मिन्नापत्तिरिति । संयोगान्तलोपस्याऽसिद्धत्वात्त्यदाद्यत्वेऽस्मिन्नापत्तिरित्यर्थः । अमार्थञ्चेति । अत्र पूर्वसवर्ण एव चेद्विधीयते तदाऽऽलोन्त्यपरिभाषयाऽन्त्यादेशत्वापत्तिरिति । इत्वनिषेध इति । स्थानिवद्भावेन विभक्तित्वादित्यत्र तस्येत्त्वनिषेधः । मूलेऽन युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती इति । न युष्मेवाजबन्धवोऽनिनित्सु त्वनमर्त्यः अवद्यमधिदीधरदिति मन्त्रस्यैकदेशोऽयम् । वाजमित्यदन्तन्नाम । वाजेनान्नदानेन बन्धवः वाजबन्धवः । सम्बोधनान्तञ्चेदम् । हे वाजबन्धवो युष्मे युष्मासुनिनित्सु-स्व ानधि इति सम्बन्धः । विभक्त्यर्थेऽधिशब्देन युष्मे इत्यनेनाव्ययीभावो नित्यः प्राप्तोऽपि बाहुलकान्न । निनित्सु स्व न । निन्दनेच्छाशीलोऽपि न । निन्दतेर्नलोपो बाहुलकात् । एवमेवेडभावश्च । मर्त्यः अवद्यन्त अदीधरत् । नधारयदित्यर्थे दीधरदिति धारयतीत्यर्थः । भवदनुसन्धानेन निष्पाद्यत्वात् । द्वितीयमन्त्रेऽपि देवता प्रार्थ्यते । हे इन्द्राबृहस्पती अस्मभ्यम् रयिन्धत्तम् दधातिरिह

दानार्थः। ता अनुष्ठयोश्चावयतात्। व्यवस्थावदङ् इति। यद्यपि स्थागापापच इति विहितः क्तिन्नातश्चोपसर्ग इतिसूत्रविहितस्याङो बाधकस्तथापि व्यवस्थायामितिनिर्द्देशात्क्वचिन्न बाधक इतिकल्प्यत इति भावः। आङिति तृतीयैकवचनबोधक आङ्शब्द इत्याशयेनाह। आङ इति। भाष्यस्वरस इति। प्रकृतसूत्रभाष्ये ईकारः इतिन्न शुष्कं सरसीशयानमितीकारादेशोदाहरणमुपन्यस्तन्तस्यायमाशयः। शाखान्तरे आद्युदात्तोऽप्ययम्पठ्यतेऽत इदमप्युदाहरणमिति। अत्र कैयटः सरस्शब्दात्परस्य ङिशब्दस्येकारादेश इति। अत्रेदमवधेयम्। ईदूतौ च सप्तम्यर्थे इति सूत्रभाष्ये ईकाररूपा सप्तमी अस्तीति प्रदर्शनाय तत्रापि सरसी यदीत्यस्य व्याख्यानावसरे दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्त इति भाष्यकृतोक्तन्तु, यच्छाख्यायामयमन्तोदात्तः पठ्यते तच्छाखास्थमिति। अमो मश्। मशादेशस्याकार उच्चारणार्थश्चेच्छकाराभावे मकारो व्यञ्जनमात्रमादेशोऽयञ्चालोन्त्यपरिभाषयाऽमोमकारस्यैव स्यात्तथा चादेशविधानवैयर्थ्य मत आह। मस्यापीति। अस्यादेशस्य शित्वम्भाष्ये प्रत्याख्यातम्। तथाहि। द्विमकारकोऽयन्निर्द्देश इति। न च द्विमकारकनिर्द्देशपक्षेऽपि सशकारकनिर्द्देशपक्षवदकारस्योच्चारणार्थतयाऽऽदेशस्य व्यञ्जनद्वयात्मकस्यैव विधेयवाचकपदादुपस्थितेर्न तस्माद्विमकारात्मकादेशोच्चारणे लाघवमिति वाच्यम्। भिन्नजातीयवर्णोच्चारणे प्रयत्नगौरवम्भवति समानजातीयवर्णद्वयोच्चारणे तु न तथेत्याशयात्। एकस्यान्त्यमकारस्य च संयोगान्त्यलोपो भविष्यति। एतद्भाष्यप्रामाण्यात्क्वचिदझलोऽपि संयोगान्त्यलोप इति। यदि द्विमकारकोऽयन्निर्द्देशस्तदावर्धीं वृत्रमित्यत्रास्तिसिचोपृक्त इत्यनेनेटि कर्त्तव्ये संयोगान्त्यलोपस्यासिद्धत्वादपृक्तत्वाभावादीण्न प्राप्नोतीत्याशङ्क्य यकारादौ न दुष्यति। किं यकारो न श्रूयते। लुप्तनिर्दिष्टो यकार इति तत्रोक्तम्। यकारनिर्द्देशेनादेशस्यानेकाल्त्वात्सर्वादेशत्वम्भविष्यति यकारस्य लुप्तत्वादपृक्तत्वाश्रयस्येडागमस्य च सिद्धिर्भविष्यतीति भावः। अत्र कश्चित्। संयोगान्त्यलोपस्यासिद्धत्वादपृक्तत्वाश्रयस्येडागमस्यानापत्तिरित्येकदेश्युक्तिरियमिति। तन्न। तस्य दोषस्य भाष्यकृतैवोद्भावनङ्कृत्वा मद्वयात्मकादेशपक्षः परित्यक्त इति तस्यैकदेश्युक्तित्वकथनस्य सम्प्रदायविरुद्धत्वात्। वधीमित्यस्य सिद्धिप्रकारमाह। हल्ते-

लुं ङीति । बधादेश: । लुङि चेति बधादेश: । बहुलञ्छदसीत्यड-
भाव इत्यपि बोध्यम् । लोपस्त आत्मनेपदेषु । अत्र सप्तम्युपपत्तये विद्यति-
क्रियावाचकशब्दमध्याहृत्य व्याचष्टे। आत्मनेपदेष्विति । क्व चिन्नेति । तकार
लोपः क्व चिन्नेत्यर्थः । सूत्रे वृत्तिकारोक्तिः प्रामादिकीति । लक्ष्ये वकारस्यैव
श्रवणेन तद्योक्तिः प्रामादिकीत्यर्थः । तस्य तात् । मध्यमपुरुषेत्यस्य विशिष्यला-
भायाह । छन्दसीति । अत एव । तनबादेशस्य पित्वादेव । उभयशब्दस्य सर्व-
नामत्वाज्जसः शीभावशङ्कावारणायाह । उभयास इत्यादाविति । विकल्पवार-
णायाह । छन्दस्यापाद्येति । एकशेष इति । एवञ्च समाहारद्वन्द्वस्य नपुंसक-
त्वाद् ह्रस्वो नपुंसक इति ह्रस्वत्वात्सिद्धमिति भावः । अस्थभिरिति । अनजा-
दित्वादनङोऽप्राप्ताविदम् । क्वचिदविभक्तावपि दृशिग्रहणादयम् । अचत्वन्तः
अस्थन्वतेत्यादौ । मूले कीदृङिन्द्र इति । त्यदादिषु दृश इति क्विन् । नुमि
सति क्विन्प्रत्ययस्येति न स्यङः । स्ववानित्यस्य सुष्ठु अवो यस्येत्यर्थः । तुधा-
तोर्वृध्यर्थकादसुनिस्वं तवोवृद्धिर्यस्येति विग्रहः । ततुरिति । तृधातोः क्विन्प्र-
त्यये द्विर्वचनेऽचीति निषेधात्तृशब्दस्यादौ द्वित्वम्तदनन्तरमुत्वम् । ह्रु ह्वरेश्छ-
न्दसि । ह्वरेरित्यागन्तुनेकारेण निर्देशः ह्रु इति लुप्तविभक्तिकः ।सोमि ह्वरितः ।
इद्गुणाविति।इदमुपलक्षणम्।आदेशाभावोऽपि बोध्यः। बभूयाततन्थ।ञ्जः क्रा-
दिनियमादिडभावे सिद्धे नियमार्थमिदम् । ससनिंससनि । अस्य सूत्रस्य छान्द-
सत्वे प्रमाणमाह । ससनिमित्यस्येति । सर्वमा इति । अस्तोर्लङ् । तिप्ईड-
भावेऽपृक्तत्वाद्धल्ङ्यादिलोपः शपो लुक् । जसादिषु छन्दसि । जसादिनिमित्तके
कार्ये छन्दसि वेति वक्तव्यम् । अत्रादिशब्दः प्रकारे । तेन पूर्वयोगनिर्दिष्टविष-
येऽपि विकल्पः । दर्वेदर्वि । अम्बेऽव इत्यादौ यथा । देवसुम्नयोः इह यजुःश-
ब्दस्य वेदोपलक्षणत्वे सति यादृशो वाक्यार्थस्तमाह । यजुर्वेदीयेति । कव्यध्व-
र । कविअध्वरपृतना एषामन्त्यस्य लोपः स्यात्कृचि। ऋग्वेदे । सुधितवसुधि-
त । निषु घुमास्थेतीत्वे प्राप्तेऽनेनेत्त्वन्निपात्यते । धिष्वेत्यत्राभ्यासलोप उत्तर-
खण्ड इत्वञ्च । लौकिके तूत्तरखण्डे श्नाभ्यस्तयोरित्यालोपः दधस्तथोरिति
भष्भावः । दाधर्त्ति । धृङो यदा त्रयशब्दास्तदाह । धृङ इति । अन्त्ययोः ।
द्वितीयतृतीययोः । तत्रापि धृङो निपातनपक्षे आह । धृङस्त्विति । आद्यस्य

प्रकारान्तरेण साधनमाह । यद्वेति । रुगभावमात्रमिति । ऋतश्चेति प्राप्तरुगभावमात्रमित्यर्थः । तृतीये व्याख्याभेदेन विशेषमाह । दर्धर्षीत्यत्रेति । लोटीति शेष इति । वोभूत्वित्युच्चारणादेवं कल्पना । लोटि गुणाभावनिपातनाल्लोट्येव भाषायाङ्गुण इति भ्रमवारणायाह । लोडतिरिक्ते चेति । अत्र मानन्तु भूसुवोरिति गुणनिषेधे सिद्धे गुणाभावनिपातनन्नियमार्थमत्रैव भूधातोर्गुणाभाव इति । तेतिक्ते इत्यत्र यङ्लुक्यात्मनेपदन्निपात्यते । अलर्षीत्यस्य साधनन्तु मूल एवाभिहितम् । एवमुत्तरत्रापि । पठितुं युक्तमिति । न च सूवेति सूत्रारम्भपक्षे निगम एव निपातनन्दाधर्त्तीत्यत्र पाठे तु ब्राह्मणेऽपि स्यादिति कथमेतदिति वाच्यम् । छन्दस्यापाद्यमानरूपाभावात् । बहुलञ्छन्दसि । निजान्त्रयाणामिति सूत्राच्छ्लाविति वर्त्तते । प्रकृतसूत्रे यद्बहुलमिति तस्य फलमाह । न च भवतीति । चोह्यर्थे ॥

## ॥ इति सप्तमोऽध्यायः ॥

प्रसमुपोदः । ननु द्वन्द्वाच्चुदषहान्तादिति टच् प्राप्नोतीत्यत आह । अनित्यत्वादिति । अत्र ज्ञापकमन्यत्र प्रपञ्चितम् । यद्यपीह छन्दसीति न प्रकृतम् तथापि द्विरुक्तेन प्रादिना कश्चन विशेषो नद्योत्यतेऽतोऽनर्थका एतेपादपूरणमात्रसम्पादकाः । नह्येवं विधस्यानर्थकस्य प्रयोगो लोके दृश्यतेऽतोऽस्य छान्दसत्वमिति विज्ञेयम् । पादस्य पूरणन्निष्पादनन्तस्मिन्विवक्षिते इति शेषः । पादपूरणे किम् । प्रदेवं देव्या धिया । छन्दसीरः । छन्दसि सर्वविधीनां वैकल्पिकत्वात्क्वचिन्नानेन वत्वम् । योब्दिमां उदनिमां इयर्ति । अनो नुट् । छन्दसीति वर्त्तते । अत्रखन्त इति । छन्दस्यपि दृश्यत इत्यनङ् । नुटोऽसिद्धत्वात्पूर्वन्नलोपेऽपि भूतपूर्वगत्या नुट् । तस्यासिद्धत्वाच्च वत्वम् । णत्वम् । स्वं रूपमिति सूत्रेऽशब्दसंज्ञेत्युक्तमत आह । तरप्तमपोरिति । सुपथिन्तर इत्यत्र सुपथिन्शब्दाद्वर्त्ति पदार्थगतप्रकर्षविवक्षया तरप् । प्रकृत्यवयवनस्य लोपः । न च छन्दसि सर्वविधीनामिषानुरोधेन प्रवृत्तेरत्र नलोपाभावेन सिद्धौ नुड्विधानवैयर्थ्यम् । अवग्रहे विशेषात् । भूरिदावत्तर इत्यत्र दाधातोर्वनिप् । ईद्रथिनः । रथिन्श-

त्वस्य ईदादेशः स्यात्। रथीतर इत्यत्र नलोपापवाद ईकारादेश इति केचित्। तन्न। सवर्णदीर्घे कर्त्तव्ये इकारादेशस्यासिद्धत्वात्सवर्णदीर्घत्वाभावेन रूपासिद्धिप्रसङ्गात्। नसत्त। एतेषामिति। स्वरूपमिति शास्त्रसत्त्वादेषां शब्दपरत्वम्। एते निपात्यन्त इत्यर्थः। तेन रदाभ्यामिति प्राप्तनत्वस्याभावः। अनुत्तमिति। अत्रापि निष्ठाया नत्वाभावो निपातनादेव। न च नुदविदेत्यस्य वैकल्पिकत्वेन पक्षे निपातनाभावेप्ययं शब्दः सिध्यतेवेति वाच्यम्। एतन्निपातनसामर्थ्याल्लोकेऽपि न नुदविदेतिविकल्पो नञ्पूर्वत्व इत्याहुः। प्रतूर्त्तमित्यत्र ज्वरत्वरेत्यूठ्। यदा तुर्वीत्यस्य तदा राल्लोपः। सूर्त्तेत्यत्र निपातनादुत्वम्। नचास्योत्वस्यासिद्धत्वादपरत्वन्न स्यादिति वाच्यम्। कार्यकालपक्षाश्रयणात्। अम्नरूध। अम्नस्शब्द ईषदर्थे। नित्यं रुत्वे प्राप्ते रेफार्थमिदम्। भुवश्च महाव्याहृतेः।महाव्याहृतेः। अन्तरिक्षवाचकस्य भुवस् इत्यस्य।महाव्याहृतिभिन्नस्य भुवइत्यस्यसाधनिकामाह। भवतेरिति। ओमभ्यादाने।अत्र प्लुतश्रुत्योपस्थितस्याच इत्यस्य ओम्शब्दो विशेषणन्तेनाम्त्यस्य यकारस्य न। वृत्तिमतानुसारेणाह। अभ्यादानमारम्भ इति। कैयटानुसारिव्याख्यानम्प्रदर्शयन् स्वसम्मतमर्थमाह। न सुब्रह्मण्यायामितीति। सुब्रह्मण्योमित्यत्र यज्ञकर्मण्यजपन्यूङ्खषणमस्वित्यनेन प्राप्तस्यैकश्रुतिस्वरस्य निषेधमात्रन्न सुब्रह्मण्यायामित्यनेन कार्यम् स्वरितोदात्तत्वन्तु न विधेयन्तस्य त्वोमभ्यादान इत्यनेन सिद्धिर्भविष्यतीत्यन्यथा सिद्धिशङ्कावारणाय कैयटेनेत्थमुक्तम्। तस्य। ओमभ्यादान इति सूत्रस्य। अत एव। तस्य सूत्रस्यायज्ञकर्मविषयत्वादेव। तस्य सूत्रस्य तद्विषयत्वे साधकमाह। अभ्यादानपदेनेति। अनेन प्लुतमाहेति। अयज्ञकर्मणि विधीयमान ओमभ्यादान इति प्लुतः प्रारम्भेऽपि भवति न त्वभ्यादानपदस्य प्रारम्भार्थकत्वमिति बोध्यमेवञ्च न सुब्रह्मण्यामिति सूत्रेण सुब्रह्मण्यामित्यत्र यज्ञक्रियायामुच्चारितमन्त्यावयवे स्वरितोदात्तत्वविधानार्थमिदमावश्यकमिति भावः। न च वृत्तिसम्मतमेवाभ्यादानपदस्यारम्भार्थकत्वमस्तु एवञ्च न तेनान्यथा सिद्धिरिति वाच्यम्। यज्ञकर्मणि प्रारम्भे प्लुतोदात्तत्वस्योमित्यत्र सिद्धावपि जपे प्लुतानापत्तेः। न सुब्रह्मण्यायामिति सूत्रे स्वरितोदात्तत्वस्य तूदाहरणान्तरमप्यस्ति। इन्द्र आगच्छेति। अत्र हीन्द्रशब्द आमन्त्रितत्वादाद्युदात्तस्तदेकवाक्यतापन्न-

शेषनिघातेनान्त्याकारस्यानुदात्तस्योदात्तादनुदात्तस्य स्वरित इत्यनेन स्वरितत्वे कृतेऽनेनोदात्तत्वङ्क्रियते। ये यज्ञकर्मणि। उच्चारित इति शेषः। यज्ञक्रियायामुच्चारितो ये शब्दः प्लुतः स्यात्। इत्यर्थे वायमिति। किमत्र प्रमाणमिति चेद्भाष्यसम्मतं व्याख्यानमेवेति गृहाण। तत्र हि ये यज्ञकर्मणीत्यतिप्रसङ्गो भवति इहापि प्राप्नोति। ये देवासो दिव्येकादशस्थ इति। सिद्धन्तु ये यजामह इति ब्रूह्यादिषूपसंख्यानात्। सिद्धमेतत्कथम्। ये यजामहशब्दो ब्रूह्यादिषूपसंख्येय इत्युक्तम्। एतेन यत्र यत्रानेन प्लुत इष्यते ते ब्रूह्यादिषु द्रष्टव्याः प्रकृतसूत्रञ्च न कार्यमित्यभिहितम्। एतेन ये देवास इत्यत्र न भवतीति स्पष्टमेव लभ्यते। प्रणवष्टेः। यज्ञकर्मणीति वर्त्तते। प्रणवशब्दस्य लोके ओंकारमात्रे प्रसिद्धिसत्वादाह। टिस्थानिक इति। भाष्यादाविति। तत्र हि प्रणव इत्युच्यते कः प्रणवो नाम। पादस्य वा अर्द्धर्चस्य वा अन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्र ओकार ओंकारं वा विदधति तम्प्रणवमित्याचक्षते इत्युक्तम्। अत्र पादस्य वेत्यनेन शास्त्रान्तरे यः प्रणवशब्दार्थः प्रसिद्धः स एवात्राश्रीयत इत्युक्तम्। देवतेत्यादिशब्दस्य यथा शास्त्रान्तरप्रसिद्ध एवार्थोऽस्मिन्नप्याश्रीयते तथा। अन्त्यमक्षरमुपसंहृत्येति। अक्षरमच्। अन्त्यमचङ्गृहीत्वा इत्यर्थः। तदाद्यक्षरशेषस्येति। अत्र तच्छब्दोऽक्षरवाची। अक्षरञ्च शेषश्चाक्षरशेषम्। शेषशब्दो हल् बोधकः। स आदिर्यस्य तत्तदादि। तदादि च तदक्षरशेषञ्च तदाद्यक्षरशेषन्तस्य टिसंज्ञकस्येत्यर्थः। न च टिस्थानिकादेशस्यैव चेत्प्रणवसंज्ञा तदा प्रकृतसूत्रे टिग्रहणं व्यर्थमिति वाच्यम्। वाक्यस्य टेरित्यधिकारादलोन्त्यपरिभाषाया उपस्थानाट्टेरन्त्यस्यौकारः स्यात् कृते तु टिग्रहणे ओकार ओंकारश्च टेरेव भवति टेरेव षष्ठिरित्यर्थस्य सम्भवेनालोन्त्यपरिभाषाया अनुपस्थानादेवञ्च टिग्रहणमेवोक्तयोर्द्वयोः प्रणवसंज्ञायामुभयोर्विधेयत्वे च मानम्। अच्परिभाषयोपस्थितमजिति टेर्विशेषणमच्सम्बन्धी यष्टिस्तस्येत्यर्थः। वस्तुतस्तु प्रातिशाख्योक्तरीत्या टिस्थानिकस्यैव प्रणवग्रहणेन ग्रहणमिति प्रकृतसूत्रस्थटिग्रहणमुक्तानुवाद एवेत्याशयेनाह। टेरितित्विति। मूलोक्तटिग्रहणप्रयोजनमुपपादयति हलन्त इतीत्यादिना। तदभावे। प्रकृतसूत्रे टिग्रहणाभावे। टेरित्यननुवृत्त्या। टिपदार्थेऽभेदसम्बन्धेन विशेषणतापन्नो योऽर्थस्तत्ता-

त्वर्थकस्याननुवृत्त्या । तदानीमनुवर्त्तमानटिग्रहणमलोन्त्यपरिभाषयोपस्थापितो योऽन्त्यपदार्थस्तस्य विशेषणभूतो योऽर्थस्तत्तात्पर्यको भविष्यतीति भावः। तदन्त्यस्य। अनुवर्त्तमानटिशब्दार्थान्त्यस्य। ननु प्लुतश्रुत्याऽच्परिभाषोपस्थित्यान्त्यस्याच एवौकारः स्यान्न तु हलोऽत आह । व्यभिचाराभावादिति। ओकारस्य त्रिमात्रस्यैव प्रणवपदार्थत्वात्। न चोङ्कारस्य प्लुतोकारघटितस्य न त्रिमात्रत्वमिति वाच्यम्। प्लुताभिन्न प्रणव इत्यर्थे तस्येहानुपस्थिति स्यादिति भावः। यदीत्वयमपीष्यत इत्युच्यते तदाऽस्याऽर्द्धचतुर्मात्रिकस्येष्टत्वेन तस्य प्लुतत्वाभावात्प्लुत इत्यस्यात्रानुपस्थितिकल्पनमेवेति तात्पर्यम्। यदा तु प्लुत इत्यस्याऽननुवृत्तिस्तदा प्लुत इत्यनेन शब्देन विधानाभावादच्परिभाषाया अनुपस्थितिरेव। इदं सर्वं सौत्रटिग्रहणस्य प्रयोजनवर्णनम्प्रातिशाख्योक्तमतभिन्नमताभिप्रायेणेति बोध्यम्। याज्यान्तः। याज्यापदार्थं व्याचष्टे। याज्याऽनुवाक्येति। अन्त इति किमिति प्रश्नाभिप्रायमाह। यद्यन्तग्रहणमिति। अयम्भावः। सौत्रमन्त इतिप्लुतश्रुत्योपस्थितस्याच इत्यस्य विशेष्यं विशेषणं वा। नाद्यः। हलन्तेऽस्य सूत्रस्य प्रवृत्त्यभावापत्तेः। न द्वितीयः । अन्ताभिन्नोऽच् तस्येत्यर्थे प्रकरणप्राप्ते न टिनाऽच्पदार्थे विशेषितेऽप्यन्तस्य लाभो भविष्यतीति । उत्तराभिप्रायस्त्वन्तपदसामर्थ्यादत्र सर्वान्त्यस्यैव ग्रहणमिति। तदुक्तम्भाष्ये। अन्तग्रहणं किमर्थम्। याज्यानामऋचो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति। इष्यते चान्त्यस्य स्यादिति तच्चान्तरेण यत्नन्न सिध्यतीत्येवमर्थमन्तग्रहणमिति । अन्तग्रहणसामर्थ्याद्याज्यानामन्तो यष्टिस्तस्य योऽच् तस्य प्लुत इत्यभिप्रायः। ब्रूहिप्रेष्यश्रौषट्। हरदत्त इति । तादृशानामुच्चारणस्य याज्ञिकसम्प्रदायसिद्धत्वमत्र मानमिति तद्भावः। भाष्यन्त्वत्रोदासीनम्। अतिप्रसङ्गमाशङ्क्य निराचष्टे। आवहेति। अग्नीत्प्रेषणे। आदेरित्यनुवर्त्तते। अग्नीत्प्रेषण इति वाक्यस्येत्यस्यानुवर्त्तमानस्य विशेषणम्। एवञ्चाग्नीधः प्रेषणे यद्वाक्यन्तस्यादेरिति लब्धम् । परशब्दोपादानेनावध्याकाङ्क्षया तस्मादित्यस्याध्याहारे सति तत्पदार्थजिज्ञासायामाह। आदिभूतादिति । इत्यनयोरेवायमिति। ओ३श्रा३वया३श्रा३वयवौरिति वक्तव्यमिति भाष्योक्तिरत्र बीजम्। पित्र्यायामन्यत्राप्यादेस्तस्मात्परस्य च दर्शनादाह। प्लुतमात्रस्येति।

भवत्येवेति। एवञ्च न भाष्ये परिगणनङ्किन्तु प्लुतस्य वैकल्पिकत्वेनाप्रवृत्त्यभ्याख्यानमेवेति तात्पर्यम्। अत एव भाष्ये बहुलमन्यत्रापीति वक्तव्यम्। उद्धरा३ उद्धर अभिहरा३ अभिहर। आहरा३ आहर। तत्तर्हि वक्तव्यम वक्तव्यम्। योगविभागः करिष्यते। अग्नीत्प्रेषणेपरस्य च विभाषा। ततः पृष्टप्रतिवचने हेः। विभाषेति। अपर आह। सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्त्तव्यः इत्युक्तम्। विभाषा पृष्टप्रतिवचनेति सूत्रघटकपृष्टप्रतिवचनशब्दं व्याचष्टे। पृष्टप्रतिवचनमिति।निगृह्य।एतद्व्याचष्टे।निगृह्येति ल्यबन्तमित्यादिना।आम्रेडितभर्त्सने।नन्वाम्रेडितसंज्ञापरभागस्यैवेति तस्यैव प्लुतः,स्यान्न तु पूर्वभागस्य इष्यते तु पूर्वभागस्यापीत्यत आह। उपलक्षणमितीति। अत्र मानन्तु भर्त्सने पर्यायेणेति वक्तव्यमिति वार्त्तिकम्। चौरा३चौर। चौरचौरा३ इति भाष्येवेति। यथोभयोः सिद्धिस्तत्प्रकारमाह।तत्रैकैकेति। मण्डूकप्लुत्या गुरोरनृत इति सूत्रादेकैकग्रहणस्यानुवृत्तिः। अमर्षे इति। अमर्षे सूचयितव्ये सम्बोधनद्योतकस्याङ्गशब्दस्य प्रयोग इत्यर्थः। अनुनये। सान्त्वने। अनाकाङ्क्षोदाहरणम्मूले अङ्ग पचेति। अत्रामर्षसूचनायाङ्गेत्येवोच्चार्य पचेत्येवं यन्नोच्चारितन्तत्रोभयोरेव प्रयोगेण,शाब्दबोधपर्यवसानन्न त्वन्याकाङ्क्षेति भावः। कोटिद्वयस्पृगिति। कोटिद्वयविषयकमित्यर्थः। नन्वर्थस्य विचार्यमाणत्वन्न तु वाक्यस्येति विचार्यमाणानामिति कथं वाक्यानामिति पदेन समानाधिकरणमत आह। इह त्विति। प्लुतविकारः। एचो प्रगृह्यस्यादूराद्धूत इतिसूत्रेण पूर्वार्द्धस्य प्लुतरूपो विकारः। पूर्वन्तु। अत्र तु शब्दोऽवधारणे। विचार्यमाणार्थप्रतिपादकवाक्ये यत्पूर्वम्प्रयुक्तन्तस्येत्यर्थः। अत्र पूर्वसूत्रेण सिद्धे इदं सूत्रन्नियमार्थम्पूर्वमेवेति तु शब्दस्त्विष्टतोऽवधारणसूचनाय। प्रतिश्रवणे च। अत्र प्रतिपूर्वकः श्रुधातुर्येष्वर्थेषु वर्त्तते तानर्थानाह। प्रतिश्रवणमित्यादिना। अभ्युपगमः। अङ्गीकारः। प्रतिज्ञानम्। आवश्यकत्वस्य क्रियायाम्बोधनम्। एतयोरर्थयोर्यदा प्रतिश्रवणशब्दस्य प्रयोगस्तदा प्रतिश्रवणे गतिसमास इति कथनेनैतेऽर्थाः शक्या एवेति दर्शितम्। तृतीये दत्तकिमात्था३ इत्यनेन स्वस्य श्रवणाभिमुख्यं स्पष्टतया प्रतीयते। अनुदात्तम्प्रश्नान्ता। अत्रानुवर्त्तमानस्य प्लुत इति पदस्योद्देश्यसमर्पकत्वकल्पनेन दूराद्धूतादिषु सिद्धस्य तस्य उदात्तपदेनोदात्तत्वे प्राप्तेऽनु

दात्तत्वमाचमनेन क्रियते इति फलति। प्रश्नान्ते यत्रानेनानुदात्तत्वविधानन्त-त्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतस्य किम्पृच्छसि त्वमित्यादिर्वोध्यस्तथा सत्यग्निभूते शब्दस्य प्रश्नान्तत्वं सम्पद्यत इति प्रश्नान्तरेणापि प्रश्नान्तत्वमाह। आद्योदाहरण इत्यादिना। चिदिति चोपमार्थे। चिदिति निपातः। उपमार्थे यत्रास्य प्रयोगस्तत्र वाक्यस्य टेरनुदात्तः प्लुतो भवति। अनेन शास्त्रेणाप्राप्त एव प्लुतोऽनुदात्तत्वगुणविशिष्टो विधीयते। अत्र सूत्रे इतिशब्दश्चिदित्यस्योप-मार्थकस्य प्रयोगे सति वाक्यस्य टेः प्लुतार्थः। तदभावे तु उपमानेयत्किञ्चिच्छब्दे प्रयुज्यमाने सति चिच्छब्दस्य प्लुत इत्यर्थो गम्येत। इति शब्दोपादानेन तु वाक्यस्य टेरित्यस्य प्रकरणप्राप्तस्याबाधो बोधितो भवति। प्रयुज्यमान इति पदस्य प्रत्युदाहरणेऽग्निर्माणवको भायादित्यत्रोपमार्थस्य शब्दान्तरस्य गम्यमानत्वेऽपि चिच्छब्दोऽपि गम्यत इति भवति प्रत्युदाहरणम्। उपरिस्विदासीत्। अयं शब्दः स्वरूपपरः। इति चेत्यस्यास्य शब्दस्येत्यर्थः। अनेनापि शास्त्रेणानुदात्तत्वगुण-मात्रं विधीयते। प्लुतस्तु विचार्यमाणानामिति सिद्ध एव। स्वरितमाम्रेडिते। स्वरितमिति सामान्ये नपुंसकम्। पूर्वन्तिङन्तमिति। यदा पूर्वतिङन्तघटित-वाक्यप्रयोगेण तादृशतिङन्तार्थघटकक्रियाकर्तुः क्षिया विवक्षिता तदोत्तरति-ङन्तस्य प्रयोग आवश्यक एव। न हि पूर्ववाक्यमात्रप्रयोगेण क्षिया गम्यते। एवञ्च तादृशस्यपूर्ववाक्यजन्यशाब्दबोधविषयक्रियायाः स्वसमानकर्तृकत्वस्वस-मानकालिकत्वोभयसम्बन्धेनोत्तरवाक्यार्थक्रियाम्प्रतिविशेषणत्वम्। तत्साका-ङ्क्षत्वञ्च तन्निष्ठविषयतानिरूपितायाः विषयतातन्निरूपकविषयताविशिष्टबोध-जनकत्वेनाभिमतत्वम्। क्षियायाः यत्र विवक्षा तत्र द्वयोः क्रियानिष्ठविषय-तयोः साक्षान्निरूप्यनिरूपकभावः। इतरयोः परम्परया सः। द्विविधोऽपि नि-रूप्यनिरूपकभावः प्रकृते विवक्षितः। अनन्त्यस्यापि। अपिनान्त्यस्य सङ्ग्रहः। प्रमाणेन स्नानगमनकम्प्रतिकार्यान्तरसूचनाय नेदं वाक्यङ्किन्तु प्रश्नवाक्यघटवा-मितिध्वननायाह। आद्योदाहरण इति। तत्रानन्त्यापेक्षया विशेषमाह। तत्रा-न्त्यस्य त्विति। नन्वनेन विधीयमानस्य स्वरितप्लुतस्य नित्यत्वात्पक्षे इत्यनुपप-न्नमित्याशङ्क्य तस्य वैकल्पिकत्वं साधयति। यद्यपीत्यादिना। प्रश्नान्त्यस्य तेना-नुदात्तः प्लुतो विधीयतेऽनेन तु स्वरितः उभयमपीदम्परस्परविरुद्धमिति स्वरित-

स्य पाक्षिकप्रवृत्तिकत्वमिति भावः। वचनसामर्थ्यादिति। ऐच इत्यस्य द्रुतावि-त्ये तद्विशेषणेन वर्णैकदेशयोर्ग्रहणमिति भावः। ऐचोर्मात्राऽवर्णस्येति। न च ऐचोश्चोत्तरभूयस्त्वादित्यनेनात्र विषमविभागः प्रदर्शित इति तेनेदं विरुद्धमिति चेन्न। तस्य पक्षान्तराभिप्रायकत्वात्। स्पष्टञ्चेदमिति। तत्र हि इष्यत एव च-तुर्मात्रः प्लुत इत्युक्तम्। ऊकाल एवाजितिनियमो नाश्रीयते तेन चतुर्मात्र-स्याप्यच्कार्यम्भवति। प्रत्यङ्ङितिकायनः। अत्र ङमुट्। ग्लौ४चातित्यत्रानचि चेति द्विर्वचनम्भवतीति कैयटः। ननूकालोऽजिति योगेन त्रिमात्रस्य प्लुतसंज्ञा विधीयतेऽयत्तु न तथेति कथमस्य प्लुतत्वन्तदभावेऽच्त्वमपि कथं ग्रहणकशा-स्त्रप्रवृत्त्यभावादिति चेन्न। प्रकृतभाष्यप्रामाण्येन तत्र तृतीयवाक्ये ऊ३काल इति पदमेकद्विमात्रभिन्नलाघणिकमित्यत्र तात्पर्यात्। तदेवाह। अत्रेति। एचोऽप्रगृह्यस्या। अनेन। याज्यान्तेष्वेवेत्येव कारेणानुदात्तः स्वरितो वेति। अनुदात्तम्प्रश्नान्तेति सूत्रेण यत्र प्लुतिस्तत्राऽनुदात्तः स्वरितमाम्रेडितेत्यस्य वि-षये तु स्वरितः। ननु वाक्यस्य टेरिति सूत्रस्थस्योदात्तपदस्य प्लुतेन सम्बन्धस्य क्लृप्तत्वात्कथमिदुद्भ्यान्तस्य सम्बन्धोऽत आह। व्याख्यानादिति। इदुतोरुदा-त्तयोः श्रवणमूलकव्याख्यानादित्यर्थः। तत एव। व्याख्यानादेव। भाष्ये तादृ-शाकारप्रदर्शनमूलकव्याख्यानात्। इदम्। परिगणनेति कथनोत्तरमदूराद्धूत इति न वक्तव्यमिति कथनम्। वृत्त्यनुरोधेनेत्यभिधानमूलन्दर्शयति। केचित्त्वि-ति। आगच्छ भोमाणवकाग्निभूते इत्यादौ प्लुतस्तु दूराद्धूत इत्यनेनैव तस्यानु-दात्तत्वमभिपूजितविषयत्वात्प्राप्तमनेनादूराद्धूत इत्यनेन क्रियते इतिनिषेध-स्यावश्यकत्वमेव। तत्र प्रमाणमाह। भाष्यादिति। तत्र हि एचः प्लुतविकारे पदान्तग्रहणङ्कर्त्तव्यम्। इह मा भूत्। भद्रङ्करोषि गौ३रिति। विषयपरिगण-नञ्च कर्त्तव्यम्। प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति व-क्तव्यमित्युक्त्वा प्रश्नात इत्यादिना तेषामुदाहरणानि मूलोक्तानि प्रतिपादिता-नि तेन विषयपरिगणनेऽपि प्रतिषेधस्यावश्यकर्त्तव्यता सूचितैव। सावपिपद-मिति। स्वादिष्वित्यस्य पदसंज्ञाविधायकसूत्रे पृथक्करणेनोत्तरपदत्वे चापदा-दिविधावित्यस्याकर्त्तव्यता प्रदर्शनकाले स्वीकृतेऽस्मिन्पक्ष इत्यर्थः। वाक्यान्त-त्वाभावादिति। वाक्यस्य टेरित्यतो वाक्यग्रहणमप्यनुवर्त्तते तेन वाक्यान्तः स-

न्य: पदान्तस्तस्यानेन प्लुतप्रसङ्गे विशेषो बोध्यत इत्यतो भद्रङ्करीषीत्यत्र पदान्तत्वेऽपि वाक्यान्तत्वाभावान्न तस्य प्लुतप्रसङ्गे विशेषः। ननु भाष्ये पदान्तग्रहणङ्कर्त्तव्यमित्येवोक्तन्न तु वाक्यशब्दस्यापि तच्चोच्चारणमतो न्यूनतःपत्तिरत आह। पदशब्देनेति। वाक्यमपीत्यपि शब्देन पदसंज्ञकस्य संग्रहः। पदान्तग्रहणमित्यत्र पदशब्देन पद्यते बोध्यतेऽर्थो येनेति व्युत्पत्त्योभयोरपि सङ्ग्रहान्न न्यूनतेति भावः। अप्राप्त इति। दूरादाह्वानसत्त्वात् प्लुतविकारस्याप्राप्तिः। प्लुतस्तु गुरोरनृत इत्यनेन प्राप्नोत्येव। न च गुरोरनृत इति सूत्रे वाक्यस्य यदनन्त्यम्पदन्तस्य टेः प्लुतविधायकमिति पक्षे वा इत्यन्त्यस्य कथमप्राप्तिरिति वाच्यम्। अनन्त्यस्यानन्त्यस्य पदस्येति नार्थः। किन्तु दूराद्धूते यद्वाक्यन्तदवयवानन्त्यस्यापीत्येवार्थः। एवञ्चास्त्येव प्राप्तिरित्याशयात्। अथ वा दूराद्धूते चेति सूत्रेण वाक्यान्तस्यैवं प्लुते प्राप्ते तस्य प्लुतस्यान्त्यानन्त्याच्स्थानिकत्वमाचङ्गुरोरनृत इत्यनेन क्रियते न त्वनन्त्यपदस्यापीत्यनेनानन्त्यस्यैव पदस्य योऽनन्त्योऽपि शब्दादन्त्यस्तस्यापूर्वप्लुतविधायकमेतदिति प्लुतस्य सिद्धस्य स्थानिप्रदर्शनमात्रङ्क्रियते। तथा च दूराद्धूते चेत्यनेनात्र प्लुतस्य प्राप्तिरस्त्येवेत्याशयात्। तयोर्य्वावचिसंहितायाम्। अत्र तयोरिति पूर्वसूत्रनिर्दिष्टयोः परामर्शकमित्याशयेनाह। पूर्वसूत्राभ्यामिति। अत्र द्विवचनोपादानेन प्लुतावैच इदुतावित्यनेन स्थितयोरिदुतोः प्लुतमात्रविधानमिचो प्रगृह्यस्येत्यनेन तु प्लुतयोरवयवकारयोर्मात्रिकयोरेवेदुतोर्विधानमिति सूचितम्। अत्र पूर्वसूत्रादिदुतोरनुवृत्त्या सिद्धे तयोरिति पूर्वसूत्राभ्यां विहितयोरेव बोधकस्तच्छब्द इत्यस्य स्पष्टप्रतिपत्त्यर्थमिति बोध्यम्। इदम्। प्रकृतसूत्रम्। अग्ना३ इइन्द्रमिति। स्थितिप्रदर्शनमेतत्। प्लुतप्रकरणं व्याख्याय तस्मिन् विशेषं वक्तुमुपक्रमते। यद्यपीत्यादिना। तस्य। प्लुतस्य। दाश्वान्। अस्य सूत्रस्य वैदिक्यामेव लेखनस्य निमित्तमाह। प्रसङ्गादित्यादिना। छान्दसानाम्प्रयोगाणां साधकसूत्रव्याख्यानात्साद्दश्यात्स्मृतस्यास्य सूत्रस्यापि व्याख्यानमुचितमतोऽत्रैवोक्तमिति भावः। तदनुबन्धकपरिभाषायाः प्रवृत्तिशङ्कायामाह। मूले अनुबन्धपरिभाषेति तदनुबन्धकपरिभाषेत्यर्थः। अत एव। अनुबन्धोच्चारण एव तस्याः परिभाषायाः प्रवृत्तिस्वीकारादेव। प्रकृतत्वादिति।

च्छस्वित्यनुवर्त्तत इति भावः। एवञ्च । उभयथेत्यस्योपादानेन कार्यस्य वैकल्पिकत्वबोधने च। सूत्ररीत्या। उभयथर्च्विति सूत्ररीत्या। आतोटीति सूत्रस्य त्यागे लाघवमप्याह। सर्वविकल्पानामित्यादिना । व्यवस्थितविकल्पेनेति। विकल्पस्य व्यवस्थितत्वञ्च छान्दसत्वाद्बविध्यर्थात। सूत्राण्यपीति। स्पष्टार्थानीति शेषः। कः करत्। अदितिभिन्नात्परस्य विसर्गस्य सः स्यात्। उदाहरणे करिष्यादीनाङ्कृधातुप्रकृतिकत्वम्बोध्यम्। पञ्चम्याः परावध्यर्थे। अत्र परावध्यर्थ इति समानाधिकरणे सप्तम्यौ। अध्यर्थ उपरिभावः। लट्प्रथमैकवचनान्तत्वभ्रमनिवृत्तये आह। यानावितीति। मनुः पुत्रेभ्य इति। अत्र मनुरिति प्रथमान्तत्व तु षष्ठ्यन्तास्ति। निसस्तपता। आसेवनम्पौनः पुन्यन्ततोऽन्यत्रेत्यर्थः । उदाहरणे निष्टपतमित्यस्य सकृत्तप्तमित्यर्थः। लोकवेदसाधारणत्वादिति। छन्दसीत्यस्याप्रकृतत्वादन्यस्य छान्दसत्वप्रयोजकस्याभावादिति भावः। निष्टप्तं रक्ष इत्यस्य छन्दस्त्वादेतस्यानेन शास्त्रेण साधनमित्यभिप्रायेणास्य सूत्रस्य वैदिक्यां लेखनमिति केचित्। युष्मत्ततत्क्षु। छान्दसानामुदाहरणानान्दर्शनादस्य छान्दसत्वमित्यस्यात्र लेखः। विशेषणमिति। व्यावर्त्तकं विशेषणमित्यर्थः । इतरयोस्तु परत्नकन्तत्। न त्वेकदेशस्य युष्मच्छब्दस्य। समासघटकत्वात् । यजुष्येकेषाम्। यजुःशब्दे पर इति भ्रमवारणायाह। यजुर्विषय इति। न तु स एवार्थः । युष्मत्ततत्क्षुष्वित्यस्यानुवृत्तेः। स्तुत्स्तोमयोः । ननु गोस्तोममित्यस्य वाक्यत्वात्कथम्पूर्वपदादित्यनेन सिद्धिरत आह। पूर्वम्पदमिति। तदुक्तम्भाष्ये। स्तुत्स्तोमयोश्छन्दसि वचनमनर्थकम्। किङ्कारणम्। पूर्वपदादिति सिद्धत्वादिति। पूर्वपदमात्रस्येति। पूर्वोक्तभाष्यादत्र पूर्वभूतपदमात्रस्य ग्रहणमिति भावः। सुञः। उक्तार्थकम्पूर्वपदादित्यनुवर्त्तते। निपातग्रहणमिति। न तु धातोरिति शेषः। सनोतेरनः। छन्दसीति वर्त्तते। सनोतेरन इति समानाधिकरणे षष्ठी नत्वन इति पूर्वपदस्य विशेषणमिण्कोरित्यधिकारात्। नियमार्थमिति। अनकारान्तस्यैवेति नियमार्थमित्यर्थः। इणः परस्य सनोतेः सकारस्य षत्वमनकारान्तस्यैवेति नियमः । अत एव भाष्ये सनोतेरन इति वचनमनर्थकम्। पूर्वपदादित्येव सिद्धत्वादित्याशङ्क्य नियमार्थमिदं वक्तव्यमिति सूत्रफलमादर्श्य गोसनिमितिनियमस्यावत्यमुक्ता सवनादिषु कृतत्वात्सिद्धमिति कथनेन

गोसनिमित्यस्य सिद्धिरुक्ता। केचित् भाष्यानुसारिणः। अयन्त इति। प्रकृतिग्रहणे व्यधिकस्य ग्रहणमिति नास्तीति भावः। तदा शयः। एयन्तस्य व्यावर्त्यस्य यत्प्रदर्शनन्तदाशयः। अन्य इति। एतदप्युक्तम्भाष्ये। अथ वा अयमस्याण्यन्तः। सिसनिषतेरप्रत्ययः सिसनीरिति। नियमप्रवृत्तिरिति। सामान्यतः प्रवृत्तिर्नियमस्य दर्शिता। सद्भिः प्रत। छन्दसीति वर्त्तत इति। स्तुत्स्तोमयोरित्यत इत्यादिः। उभयत्र संहिताधिकारस्य फलमाह। अवग्रह इति। मनोरमेति। न हि हन्तीत्यनेन प्रतिपदोक्तत्वाद्दीर्घे सिद्धेऽन्येषामपीत्यस्य प्रवृत्तिस्वीकारो निष्फल इत्यनेन ध्वनितम्। निव्यभिव्यः। सुनोत्यादिग्रहणाननुवृत्त्याह। एभ्य इति। सुनोत्यादेरिति। एतस्य लाभप्रकारमाह। प्रकरणप्राप्तस्येति। छन्दस्यृदवग्रहात्। नोण इत्यनुवर्त्तते। अवग्रहादित्यत्राशं आद्यच्। नन्वेवमवग्रहेऽपि णत्वं स्यादत आह। अवग्रहविषयत्वञ्चेति। चस्त्वर्थे। तेन संहिताधिकारस्यावाधः सिद्धः। अवग्रहविषयत्वमुपपादयति। यदकाले चेति। अत एव। अवग्रहविषय एव णत्वप्रवृत्तिस्वीकारादेव। नश्च धातुस्थो। निमित्तात्। रेफषकाररूपात्। तेन। सुञोऽनुकरणस्वीकारेण। नसशब्दे विशेषमाह। नसितीति। उभयोः। नासिकाशब्दादेशास्मच्छब्दादेशयोः। हरदत्त इत्यनेन सूचितामरुचिम्प्रकाशयति। उत्तरसूत्र इति। धातुस्थात्परस्योदाहरणमाह। रक्षाण इति। इति शिवमित्यत्र शिवशब्दो मङ्गलार्थः॥

## इति श्रीवैदिकप्रकरणेऽष्टमोऽध्यायः।

विशेषः स्पष्ट एव। सूत्रद्वये। उपोत्तमं इति। चङ्यन्यतरस्यामिति सूत्रद्वये। पचद्वयेऽपीति। सामान्यापेक्षज्ञापकं विशेषापेक्षं वेति पचद्वयेऽपीत्यर्थः। मध्य इति। तिसृभ्यो जसः। सा वैकाचस्तृतीयादिर्विभक्तिरित्येतयोर्मध्य इत्यर्थः। एतयोः सूत्रयोः विभक्तिस्वरविधायकतया चतुर इत्यस्यापि तथात्वे चतुरः शस इत्येव पूर्वसूत्रवद्वदेत्। उपमानं संज्ञायामिति सूत्रस्येति। उपमानशब्दः संज्ञायामाद्युदात्त इत्यर्थकं यत्संज्ञायामुपमानमिति सूत्रं तद्व्याख्यानभाष्येत्यर्थः। तत्र हि चञ्चेव चञ्चेत्यादौ ञ्नितीत्येव सिद्धे संज्ञायामुपमानमित्यस्य वैयर्थ्यमाशङ्क्यानुबन्धलक्षणे स्वरे प्रत्ययलक्षणन्न भवतीत्यर्थे संज्ञायामित्यस्य ज्ञापकतोक्ता साञ्नितीत्यस्य तदन्तसप्तमीत्वे न लुमता तस्मिन्निति न्यासेन निषेधाप्राप्त्याप्रत्ययलक्षणप्रवृत्त्योपपादयितुं शक्यते नान्यथेति तद्भाष्यविरोधादित्यर्थः। एवं सतीति। तेन सर्वस्याद्युदात्तत्वमेवं विधीयते तच्च तदन्तविधिसत्त्वासत्त्वाभ्याङ्कार्यभेदाभावेन तदन्तविधिर्न स्यादिति भावः। इष्टापत्तावाह। तथा चेति। सर्वस्तोमासिद्धिरिति। सर्वस्तोमित्यस्याद्युदात्तस्यासिद्धिरित्यर्थः। वक्तुं शक्यत्वाच्चेति। एवञ्च सौवरीणामित्यस्य सामान्यापेक्षतैव युक्तेति शेषः। गर्गावत्साविदा इत्यादौ दोषवारणपरभाष्यविरोधस्परिहरति। न लुमतेतीति। वार्त्तिकानि। लुमतिप्रतिषेध इत्यादिवार्त्तिकानि। इतिवदिति। तस्य यथा प्रयत्नेनान्यथासिद्धिप्रदर्शनेन प्रत्याख्यानेऽपि पुनस्तया पाठेनावश्यकता सूचिता तद्वत्। कैयटाविरोधमप्युपपादयति ञ्नितीति। उपलक्षणमिति। अनाङ्गत्वादित्येतत्सौवरीणां सप्तमीनान्तदन्तबोधकत्वादित्यस्यापि बोधकमित्यर्थः किञ्चिचान्यत्रेति। ञ्निनिकितस्वराः। प्रतिषेधो ग्राह्य इति। तत्र भाष्ये हि अङ्गोरविधाने लुमता लुप्ते प्रत्ययलक्षणन्न भवतीति वक्तव्यम्। अहर्दातीत्यत्र रोऽसुपीति प्रत्ययलक्षणेन प्रतिषेधो मा भूदित्युक्तम्। लितीति। प्रकृतसूत्रे भीह्रीति सूत्र इवाभ्यस्तानामित्यतोऽभ्यस्तानामिति सम्बध्यते अनन्तरमस्य पाठादत आह। अत्रेति। परत्वात्। लितीति सूत्रात्परत्वात्। अचः परस्मिन्निति स्थानिवद्भावस्य प्राप्तिमाशङ्क्याह। स्वरदीर्घेति। आदिर्णमुल्यन्यतरस्याम्। अभ्यस्तानामिति मण्डूकगत्यात्र सम्बध्यते। तस्य णमुलन्तत्वासम्भवादाह। णमुलीत्यस्येति। नातिप्रसङ्ग इति। मना व्यवधानेन णमुलेऽस्यस्तात्परत्वा-

भावात्। विशेषाभावमिति । अस्य सूत्रस्याद्युदात्तविधायकतया तदन्तसप्त-मीत्वे परसप्तमीत्वे वा फलतो न कश्चिद्विशेषः। एतेन। अभ्यस्तात्पर इतिव्या-ख्यानेन। अनुदात्त इति । तस्य परमाम्रेडितमनुदात्तञ्चेति सर्वानुदात्तः। उभयमप्युदात्तमिति। आदिर्णमुलीत्यस्य वैकल्पिकतया यदाऽनेनाद्युदात्तता तदा लोशब्द उदात्तः। एतदभावे तु लितीत्यनेन लूशब्द उदात्त इत्यर्थः। अ-चः कर्तृयकि। इत्यर्थादिति। अतो मूलकृता कर्तृयकि पर इत्येव व्याख्या-तमिति शेषः। पक्षे। अचः कर्तृयकीत्येतत्सूत्रप्रवृत्त्यभावपक्षे। इदञ्च। उपदे-शेऽजन्तानामिति व्याख्यानञ्च । एवं उपदेशेऽजन्तानामिति व्याख्याने। ये इति । ये विभाषेति सूत्रे ये इति । पर्यायेणेति । अस्य वैक-ल्पिकत्वादित्यादिः । चङ्यन्यतरस्याम् । एतद्व्याख्यानभूते चङन्ते धा-ताविति वाक्ये धाताविल्यपाठः । चङन्तस्याधातुत्वात् । अन्तशब्दस्य परसमीपपरत्वेन चङ्परे धाताविल्यर्थ इति तु न धाताविल्यस्याप्रक्तत्वात्। आक्षेपेण लाभस्तु न। आक्षेपे अनुपपत्तेः सह कारितया तदभावात् । फला-भावाच्च। सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतद्विरोधाच्च । अनुदात्त इति। एवञ्च मा हि चीकरतामित्यत्र चङ एवोत्तत्वे प्राप्ते धात्वकारस्योदात्तत्वार्थ-मिदं सूत्रमिति शेषः । मा हि दधदिति। विभाषा धेट्श्व्योरिति चङ्। अत्र चिप्रभृतीनामभावादुपोत्तमञ्चङन्तस्य नास्तीति चङ एवोदात्तत्वम्भवति। परस-प्तम्यान्तु धातोः स्यात्॥

## ॥ इति धातुस्वराः॥

अथ प्रातिपदिकस्वरा इति । निरूप्यन्त इति शेषः। तेषु विशेषमाह। ते चेति। अत एव। प्रातिपदिकादिसंज्ञाप्रयोजकप्रत्ययबलेन स्वरप्रवृत्तिकल्पना-देव। सर्वानुदात्तत्वमेव क्यजन्ते चित इत्यनेन क्यजकारस्योदात्तत्वे तदेकवा-क्यतापन्नशेषनिघातेन पुत्रेत्यनयोरनुदात्तत्वे सत्यवशिष्टोऽकार एवोदात्तः स तु लुप्त इति सर्वानुदात्तत्वमेव। अत एव। उणादिषूणादिप्रत्ययैः स्वरकल्पना-देव। तथैव अन्तोदात्तमेव। आद्युदात्तत्वम् । अञ्जेरकारस्योदात्तत्वात्तेन स-हाङोदात्तेन सहैकादेशस्यान्यतरतस्यादुदात्तत्वादाद्युदात्तत्वम्। कर्षात्वतः।

ननु वद्ग्रहणाभावे तदन्तविधिः कथं विशेष्याभावादत आह । घञाचित्ते ति । ननु पाक इत्यत्र ककारस्याऽविद्यमानवत्त्वेनादन्तात्परत्वमस्त्येवेत्यत आह । स्वरविधाविति । निर्दिश्यमानपरिभाषयेति । इदमनागमकानां सागमका आदेशा इति पक्षाभिप्रायेण । अन्यथा तु यदागमा इति परिभाषयेति बोध्यम् । इत्यर्थः स्यादिति । सामर्थ्यादिति शेषः । प्रकृतसूत्रस्थान्तशब्दस्य सार्थक्यमाह । यद्यपीत्यादिना । एवञ्च । उक्तरीत्यान्तपदसार्थक्ये च । सिद्धेरिति । अत्र हि हनश्च वध इतिसूत्रेणादन्तवधादेशोऽप्प्रत्ययस्य च विधानेनानुदात्तस्य च यत्रोदात्तलोप इत्यनेन सिद्धेरित्यर्थः । गरो विष इति । गरो व्याधावुपविषे विशेषे करणे गरम् । अयन्तोऽन्तोदात्त इति । गरवाचकस्योञ्छादिगणे पाठादिति शेषः । अन्यत्र । उपविषातिरिक्ते । आदुदात्त इति । नप्विषयस्येत्यनेनाद्युदात्त इत्यर्थः । करणे घञन्ता इति उञ्छादिगणे पठ्यन्त इति शेषः । आद्युदात्ता एवेति । तेषामपाठादिति शेषः । स्तोत्र इत्यस्य व्याख्यासामनीति । अन्यत्रेति । वर्त्तनीवर्कुपिण्डे स्याद्वर्त्तनी मलिने पथि इति कोशात् । अन्तोदात्त इति । अनिप्रत्ययान्ततयान्तोदात्त इत्यर्थः । अन्यत्र । श्वभ्रातिरिक्ते । दरश्चोरे दरो भेदे दरः साध्वसगर्तयोः । कन्दरे तु दरीमाहुरीषदर्थे दरोऽव्ययम् । चतुरः शसि । शस इत्येवेति । तिसृभ्यो जस इत्यस्य षष्ठ्यन्तस्योपक्रमादिहापि षष्ठ्यैव निर्देश उचित इति भावः । तकाराकारस्येति । स्वरविधौ व्यञ्जनमविद्यमानवदिति सकाररेफयोरविद्यमानवद्भावात्तकारकारस्य प्राप्तिः । आद्युदात्तनिपातनसामर्थ्यादिति । एकश्रुत्या तिसृचतस्रिति द्वन्द्वसमाससत्त्वेनान्तोदात्ते वा उच्चारयितव्ये आद्युदात्तस्य चतसृशब्दस्योच्चारणप्रयोगे तादृशस्य श्रवणार्थमिति तत्सामर्थ्यादित्यर्थः । तत्र । षडादिषु । वार्त्तिकप्रामाण्येनेति । प्रकृतसूत्रभाष्ये शसि स्त्रियाम्प्रतिषेधः । शसि स्त्रियाम्प्रतिषेधो वक्तव्य इत्युपक्रमे चतस्रः पश्येत्यत्र प्रतिषेधस्य प्रयोजनमुक्त्वा आद्युदात्तनिपातनं करिष्यते स निपातनस्वरश्चतुरः शसीत्यस्य बाधको भविष्यतीत्यनेन पूर्ववार्त्तिकं खण्डितं ततो निपातनस्वरस्य सतिशिष्टत्वाच्चतसृणामित्यत्र यो विभक्तिस्वरः षट्त्रिचतुर्भ्यो हलादिरिति तस्यापि बाधः स्यादत उपदेशिवद्भावो वक्तव्य इति परेण शङ्किते षट्त्रीति सूत्रे हलादिग्रहणस्य चतसृशब्दादन्यत्प्रयोजनन्नास्तीत्यतो

विभक्तिस्वरस्याबाधस्य सिद्धिरित्युक्तम् । षट्संज्ञकानां बहुवचनान्तया जश्श-
सोरस्मात्परयोर्लुग्विधानेन च षट्संज्ञकविषये न प्रयोजनम् तिसृशब्दोऽपि न
प्रयोजयति । द्विवचनैकवचने न स्तः । जस्य सर्वनामस्थानमिति प्रतिषेधात् ।
शसि तूदात्तयणो हल्पूर्वादित्यनेन सिद्धम् । अन्याः सर्वा हलादिविभक्तयः ।
चतुःशब्दस्यापि न प्रयोजयति । असर्वनामस्थानमिति वचनाज्जसि न भवित-
व्यम् शसि तु चतुरः शसीत्यनेन भवितव्यमिति चतसृशब्दादेकस्माज्जसि परे
विभक्तिस्वरस्याप्रवृत्तये हलादिग्रहणमित्यभिहितम् । यदि गौणे हलादिग्रहण-
स्य चारितार्थ्यं स्यात्तदा विभक्तिस्वरभावश्च हलादिग्रहणादिति वार्त्तिकविरो-
धः स्पष्ट एवेति । अत्राहुरित्यनेन सूचितामरुचिं स्वयमेवाह । तन्नेति । तिसृ-
भ्यो जस इति सूत्रे भाष्ये जस इत्यस्य तिसृका इति प्रयोजनमादावभिहित-
स्ततो नित्स्वरेणात्र बाधो भविष्यतीत्याशयेन जस्ग्रहणमनर्थकमन्यत्राभावा-
दिति वार्त्तिककृतोक्तम् । शसि उदात्तयणो हल्पूर्वादित्यनेन सिद्धमन्याविभ-
क्तयो हलादयस्तासु षट्त्रिचतुर्भ्यो हलादिर्झल्युपोत्तममित्याभ्यां भवितव्यमिति
तदाशयः। अनेन प्रकारेण जस्ग्रहणाभावे वार्त्तिककृता प्रतिपादिते उपसमस्ता-
र्थमेके जसो ग्रहणमिच्छन्ति । अतितिस्रौ । अतितिस्रः इति भाष्यकारेणोक्तम् ।
अत्र द्विवचने एव जस्ग्रहणाभावेऽतिप्रसङ्गापादने तात्पर्यम् । जसि त्विष्यत
एव तिसृभ्यो जस इति प्रसङ्गोच्चारितमेतत् । एवम्प्रकारेण वार्त्तिकं यथा ख-
ण्डितन्तथा चतुरः शसीतिसूत्रेऽपि षट्त्रीति सूत्रस्थहलादिग्रहणस्योक्तरीत्या
विभक्तिस्वरा बाधकत्वे ज्ञापकता वार्त्तिककृताऽभिहिता ततोऽग्रे भाष्यकृता
चतस्रः पश्य त्यत्र नैव वा पुनः शसि स्वरः प्राप्नोति । यणादेशे शसः पूर्व उदा-
त्तभावो नास्तीति कृत्वे त्यनेन वार्त्तिककारमतङ्खण्डितम् । ऋकारस्य यणा-
देशे तस्य स्थानिवद्भावेन व्यवधानान्न तकाराकारस्य प्राप्तिः स्वविधौ स्थानि-
वत्त्वाभावेन न ऋकारस्यैव प्राप्तिरित्याशयः । स्वरविधिम्प्रतीति स्थानिवत्त्व-
निषेधस्तु नास्ति । स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेध इति
नियमात् । वार्त्तिकदूषणपरभाष्याभिप्रायमाह । तस्मादितीति । उक्तभाष्यप्र-
घट्टकरीत्योपसंहरति तस्माड्डीण इति । झल्युपोत्तमम् । अपवाद इति । येन
नाप्राप्तन्यायेनेत्यादिः । आषड्गिरिति समुदायेऽप्युपोत्तमसम्भवोऽस्त्येवेति वा-

ग्रसुपोत्तमग्रहणस्य प्रत्युदाहरणमिति शङ्कावारणायाह । आ इति भिन्नम्पद-मिति। सर्वस्य सुपि। सर्वशब्दस्य स्वाङ्गशिटामदन्तानामित्यादुदात्तत्वं सिद्ध-मेवेत्याशङ्कायामाह। सर्वशब्दस्येति। एवञ्च सुपीत्यस्य तदन्तसप्तमीत्वेन प्र-त्ययलक्षणेनादुदात्तस्य अवणमस्त्येव। ननु वृत्त्युक्तप्रयोगेऽत्यन्तस्वार्थिकस्य प्र-योगस्तस्य तु सुबुत्पत्तेः प्रागेवोत्पत्तिरत आह। अत्यन्त इत्यादि सुपीत्युक्तेः फलमिति। यदि सुपीत्युक्तं तदा सुबन्तस्यादुदात्तत्वमप्रकृतेस्त्वनुदात्तादि-त्वमिति व्यवस्था सिध्यतीति भावः। अन्तोदात्त एवेति। चितः सप्रकृतेर्बह्वक-जर्थमिति वचनात्। ञ्नित्यादिर्नित्यम्। अत्रादिपदमन्तपदासम्बन्धबोधनाय। तद्धि यलि च सेटीतिपूर्वसूत्रे स्वान्वय्यन्वय्यन्तपदार्थकमभूत्। नन्वेवं सति तत्सम्बद्धान्यतरस्यामित्यस्य निवृत्तिः सिद्धैवेति नित्यमिति व्यर्थमिति चेन्न। स्पष्टार्थत्वात्। सन्नन्तस्य विधीयमाना धातुसंज्ञा सनोनित्वञ्चेत्युभयमपि पर-स्वरपरिहारेणाचरितार्थमित्याशयेनाशङ्कते। जुगुप्सेत्यादावित्यना। नित्स्वरस्य चारितार्थ्यन्तु द्वितीयस्तृतीयोभाग इत्यादौ। सति शिष्टस्यापीति। धातुस्व-रस्येति शेषः। पथिमथोः। अन्तोदात्तावितिः। फिट्स्वरेणैतावन्तोदात्तावित्यर्थः। अत एवाह। अत्रेति। अस्य। पथिमथोः सर्वनामस्थान इति सूत्रस्य। प्रकृतसूत्रा-त्तत्पुरुषे तुल्यार्थेत्यस्य परत्वात्तेन बाधाचेत्यपि बोध्यम्। चयो निवासे। नि-वासे वाच्ये सति चयशब्द आदुदात्तः स्यात्। इति च इति। निवास इत्यत्रा-प्येवम्। तेनैव। पुंसि संज्ञायामित्यनेनैव। अन्यत्र। जयातिरिक्ते। वृषादी-नाञ्च। ञ्नित्यादिरित्यत आदिरित्यनुवर्त्तते। अविहितादुदात्तस्येति। अवि-हित आदुदात्तो यस्य तस्येत्यर्थः। षष्ठ्यर्थ इति। आदिपदार्थापेक्षया या ष-ष्ठी तदर्थ इत्यर्थः। आशितः कर्त्ता। आशितशब्दस्य कर्तृवाचकत्वमुपपादयति। सकर्मकेति। भाष्यानुसारिमतान्तरमाह। आङ्पूर्वत्व इति। इत्यस्याप्ययेति। अपिना प्रत्ययस्वरपरिग्रहः। भाष्यासम्मतमिति। तत्र हि किन्निपात्यते। आ-शिते कर्त्तरि निपातनमुपधादीर्घत्वमादुदात्तत्वञ्च। आशित इति क्तः कर्त्तरि निपात्यते। अशितवान् आशितः। आदुदात्तत्वमनिपात्यमधिकारात्सिद्धम्। उपधादीर्घत्वमनिपात्यम्। आङ्पूर्वस्य प्रयोग इति प्रातिपादितम्। रिक्तेऽवि-भाषा। रिक्तशब्दावयवस्यैवायं स्वरो विहितो न तु तस्मिन् परेऽन्यस्येत्याशये-

नाह्व। पूर्वौ तरेति। आश्रितः कर्त्ता जुष्टार्पिते इत्युभयत्रोपात्तशब्दावयवस्यैव कार्यित्वेनाश्रयणादित्यर्थः। सप्तम्युपपत्तये आह । विद्यमान इति। षष्ठ्यर्थे सप्तमीत्यपि वक्तुं शक्यम्। पत्त इति। छन्दसीति शेषः। नित्यम्मन्त्र। पूर्वसूत्रस्य ब्राह्मणे विकल्पविधायकता द्रष्टव्या। सूत्रविरोधात्। नित्यम्मन्त्र इति सूत्रविरोधात्। यथा सङ्ख्यमङ्क्तिप्रत्ययोः प्राप्तं वारयति। योगविभाग इति। विभक्त्युदात्ते प्राप्त इति । युष्मच्छब्दस्य मदिक्प्रत्ययान्ततया तदादेशस्यान्तरतम्यादन्तोदात्तस्य तव शब्दस्यैकादेश उदात्तेनेत्यनेनोदात्ते प्राप्त इत्यर्थः। पर्युदासैकवाक्यतयाऽर्थमाह । नौभिन्नाद्विहित इति । हल्स्वरप्राप्ताविति। हलः स्वरप्राप्तावित्यर्थः। हलः स्वरप्राप्तिमुपपादयति। हलादावादेरिति। तद्विषयकेति। हलादिविषयकेत्यर्थः। प्रतिलक्ष्यं लक्षणभेदस्य सम्प्रदायसिद्धत्वात्। स्पष्टञ्चेदम्भाष्ये इति। समासस्येतिसूत्रभाष्ये इदं स्पष्टमित्यर्थः। तत्र हि आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं यतोऽनाव इति प्रतिषेधं शास्तीत्युक्तम्। नचैवं नाव्यमित्यत्राप्यादेर्नकारस्योदात्तगुणकः स्थानकृतान्तरतम्यवान् लकारः स्यात्तद्रावत्तकतयःऽनाव इतिप्रतिषेधस्य चारितार्थ्येन कयमस्य ज्ञापकत्वमिति वाच्यम् । द्व्यच्कत्वमस्य सूत्रस्य प्रवृत्तौ लिङ्गम्। यदि नकारस्य स्थानेऽच्स्यात्तदा निमित्तस्य द्व्यच्कत्वस्य विनाशः स्यादित्युपजीव्यविरोधात्तादृश ऽनु भविष्यतीति नौप्रतिषेधो व्यर्थ इत्याशयात्। अत्र केचित्। नौप्रतिषेधो हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्यर्थ एव ज्ञापक इति न। किन्तु स्वरविधौ व्यञ्जनमविद्यमानवदित्यर्थ एव। स्वरविधिशब्दे च तन्त्रन्यायेन स्वरस्य विधिः स्वरविधिः स्वरेण विधिः स्वरविधिरित्यर्थयतसम्बन्धो विवक्षितः। अथ वा सम्बन्धसामान्यार्थकषष्ठ्या समास एवास्तु। तत्र षष्ठ्यर्थः सम्बन्धश्च क्रियाकर्मभावो निमित्तनिमित्तिभावश्चाभिमत इति हल्स्वरप्राप्तावित्यस्य स्वरोद्देश्यके विधावित्यस्य च लाभः । नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रेत्यादिप्रतिषेधैकवाक्यतया चायमर्थः कल्प्यते स्वरे विधातव्ये व्यञ्जनमविद्यमानवदित्यत्र व्यञ्जनं स्वरस्थानित्वेन प्रसक्तं विवक्षितं ज्ञापकसाजात्यात्। एवञ्च नौप्रतिषेधस्य पृथिव्यादिपर्युदासस्य च या ज्ञापकताऽन्यत्राभिहिता सोक्तार्थद्वयस्य विवक्षायामित्याहुः । ईडवन्दवृशंसदुहाम् । द्व्यनुबन्धकत्वादिति।

तकारस्यानुबन्धस्येत्संज्ञोपादानादस्ति तदनुबन्धकपरिभाषाप्राप्तिः । वेणुशब्दस्या-द्युदात्तत्वमुपपादयति । श्रीणुरित्येति । स्वरभेदप्रतिपादनमन्यकर्तृकं कन्निरसि-तुमाह । यन्त्विति । प्रतिषेधादिति । तथा च नोदात्तनिवृत्तिस्वरप्राप्तिरिति भा-वः । इष्यते इति । अत्र प्रमाणन्तु प्रकृतसूत्रभाष्ये किमियम्प्राप्ते विभाषा आ-होस्विदप्राप्ते । कथञ्च प्राप्ते कथञ्चाप्राप्ते । यदि संज्ञायामुपमानमिति नित्ये प्राप्ते आरम्भस्ततः प्राप्तेऽन्यथात्वप्राप्ते । अप्राप्ते विभाषा । प्राप्ते नित्यो विधिः। वेणुरिव वेणुरिति प्रतिपादनमेवेति । त्यागराग । विभाषावेत्यस्यतो विभाषा-ग्रहणमनुवर्त्तते । एतदभावे स्वरमाह । मूले आद्या इति । तत्र । आद्येषु । तत्र । अन्त्येषु त्रिषु । प्रत्ययस्वरेण । प्रत्ययस्य यः स्वरः प्राप्तस्तेन । चित्वं हि प्रत्ययस्येति तेनान्तोदात्तत्वम्प्राप्तमिति फलितम् । मतोः पूर्व । पूर्वशब्दार्थस्या-दित्येतद्विशेषणत्वात्पुंल्लिङ्गेन निर्देशे कर्त्तव्ये नपुंसकनिर्देशोऽनुपपन्नोऽत आह । पूर्वमितीति । स्त्रियां संज्ञायामिति व्यधिकरणे सप्तम्यावित्याशयेन व्या-चष्टे । स्त्रियामित्यादि । खट्वावतीति । यौगिकोऽयन्न तु संज्ञा । उदुम्बराव ति-ति । देशस्य संज्ञेयम् । उदाहरणे । उदुम्बरावती इत्यत्र । नगर्याः संज्ञेयम् । गवादनी इति । अत्ति यस्यां सा अदनी । अधिकरणे ल्युट् । टित्वान्ङीप् । गोरदनीति विग्रहः । नाद इति लोके । इत्यर्थः स्यादिति । तथा च पूर्वग्रह-णमव्यवहितपूर्वपरमिति बोध्यम् । अन्तोऽवत्याः । अवत्या इत्यत्राकारोच्चारण-स्य प्रयोजनमाह । वत्या अन्त इति त्विति । ननु वेत्रवतीत्यादाववतीशब्दो मादुपधाया इत्यस्याऽसिद्धत्वान्नास्तीति कथमुदाहरणमत आह । वस्त्वन्त्वाश्र-येति । अथ फिट्सूत्राणीति । फिषां सूत्राणि व्याख्यायन्ते इति शेषः । एतेषां साधुत्वव्यवस्थापकत्वे प्रमाणमाह । अपाणिनीयेति । आवश्यकत्वादिति । अय-ञ्च पक्षः पाणिनीयानामपि सम्मत एव । पाटला । लघावन्त इति प्राप्त इति कथनमेकादेशष्टापा सह यावन्न जातस्तावत्प्राप्त्यभिप्रायेण । तस्यैवोषधिविशेषे रूढतया ततः स्त्रियाष्टाप उत्पत्तेः । बाधकबाधनार्थत्वादिति । आद्यसूत्रबा-धकस्यान्यस्याभावादिहैव निपातनमाश्रीयत इति भावः । अन्तरङ्गमिति । स्वाङ्गवाचकत्वस्य टाबुत्पत्तेः प्रागपि सत्त्वात्तस्यान्तरङ्गत्वमिति भावः । ध्यपूर्व-स्य स्त्रीविषयस्य । ध्यपूर्वस्येत्यन्तपदार्थे विशेषणसभेदेन सा च स्थानषष्ठी ।

स्त्रीविषयस्त्वेत्यवयवषष्ठी । लघावन्त इति । एकादेशात्प्रागस्य प्राप्तिः । ध्वनितञ्चेदमिति । तत्सूत्रभाष्ये क्यब्विधौ वृञ्ग्रहणम् । क्यब्विधौ वृञ्ग्रहणङ्कर्त्तव्यमिह मा भूत् । वार्या ऋत्विज इत्यभिहितम् । तत्र कैयटः। क्यब्विधाविति। ईडवन्दवृशंसदुहां ण्यत इति वार्यशब्दस्याद्युदात्तविधानादेतज्ज्ञायते । तत्र ईडिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृशब्देन वृणातिर्गृह्यते । ततो भाष्ये अञ्जेश्चोपसंख्यानं कर्त्तव्यम् । आज्यम् । यदि क्यप्वृद्धिर्न प्राप्नोति । तस्मात्स्वरदेशः । यदि ण्यत् । उपधालोपो न प्राप्नोति तस्मात्कारकेपः । ननु चोक्तं वृद्धिर्न प्राप्नोति । आङ्पूर्वस्य प्रयोगो भविष्यतीति । अत्र तस्मात्स्वरदेष इति प्रतीकमुपादाय ननु स्वरे भेदो भवति । क्यपि सत्याद्युदात्तम्पदम् । ण्यति सत्यन्तस्वरितम् । नैष दोषः । नञ्विषयस्यानिसन्तस्येत्याद्युदात्तविधानादिति कैयटेनोक्तम् । एवं व्युत्पत्तिमार्गप्राप्ते ण्यदन्ते नञ्विषयस्येत्यस्योपन्यासेन लक्ष्यानुसारेण फिट्स्वरस्य बाधकताऽन्यत्राप्यूहनीयेति ध्वनितमिति । स्वान्तस्याश्मादेरिति सूत्रम्फिष इत्यस्य यद्बाधकन्तद्बाधनार्थन्तद्बाधकप्रदर्शनञ्च मूल एव कृतमश्मादेरिति पर्युदासस्योपपादनावसरे उक्तसूत्रेऽप्रसिद्धत्वशङ्कावारणायाह । इदमिति । स्वाङ्गत्वापेक्षत्वादिति । न च टाप उत्पत्तौ स्त्रीत्वापेक्षास्तीति साम्यमिति वाच्यम् । प्रातिपदिकसंज्ञाप्रवृत्तिकाले लिङ्गस्याप्युपस्थितिसत्त्वेन लिङ्गाधिक्ये तस्मिन् द्योतनीये टाबादेरुत्पत्त्या लिङ्गोपस्थितेरुभयोत्पत्तिप्राक्कालिकत्वेन नलिङ्गोपस्थितिकृतं टापो बहिरङ्गत्वमित्याशयात् । एतेन स्वरस्य बहिरङ्गत्वन्ध्वनितम् । इदमल्पापेक्षमन्तरङ्गं बह्वपेक्षं बहिरङ्गमिति वादिमतेन । चिन्त्यमिति । अत्रेत्थञ्चिन्तयन्ति । स्वाङ्गशिटामिति सूत्रेऽत इत्येवं तदन्तविधिनान्तपदार्थलाभेऽन्तवचनमुद्देश्यतावच्छेदकसंज्ञाप्रवृत्तिकालिकतदन्तत्वं सूत्रप्रवृत्तौ नियामकमिति शिखशब्दस्य यदा प्रातिपदिकसंज्ञा तदैव स्वाङ्गेत्यस्य प्राप्तिरेकादेशस्य तु टावुत्पत्त्युत्तरम्प्राप्तिरेतावतैव स्वरस्यैकादेशापेक्षयाऽन्तरङ्गत्वमिह विवक्षितमिति तन्मतमेवाह । तस्मादिति । स्वयम्प्रत्युदाहरणमाह । अस्थ्यादीति । नन्वन्तशब्दोपादानसामर्थ्यात्पूर्वोक्ता कल्पना चेत्तदा ग्रीवाशब्दे वाशब्दस्योदात्तस्य श्रवणङ्ग्रीवायामित्यत्र यत्तद्विरोध इत्यत आह । ग्रीवायामिति । सिद्धमिति । तथा च सम्वत्सरशब्द एव चेद्वत्सरशब्दोपा-

दानेनान्तोदात्तत्वसिद्धिः प्रयोजनन्तदा चित्वादेव सिद्धमतोऽन्यत्रास्य सूत्रस्य प्रवृत्तिर्वक्तव्येति भावः। उदाहरणान्तरमेवाह। परिवत्सरेति। अनेन। प्रकृतसूत्रेण। तद्वर्ग्यमिति। सम्पूर्वाच्चिदित्यत्र चिदित्यस्योपादानं व्यर्थमित्यर्थः। पङ्क्त्यादिसूत्रेति। तेन प्रातेर्डतिरित्यस्य व्यावृत्तिः। साधावित्यस्यार्थमाह। प्रवीण इति। वाच्य इति शेषः। स्वाङ्गाख्यायाम्। दक्षिणस्येत्यनुवर्त्तते। बाधकबाधनार्थत्वादिति। तथा च परस्याप्यनेन बाधः स्यादिति भावः। अन्तोदात्त इत्येवेति। मण्डूकप्लुत्याऽनुवर्त्तत इति शेषः। कृष्णो मृग इति। गुणोपसर्जनद्रव्यवाच्ययम्। अत्र वर्णानान्तेऽत्येव प्रवर्त्तते। पक्षे। वा नामधेयस्येत्यस्याप्रवृत्तौ। आद्युदात्तत्वमिति। वाग्रहणसामर्थ्यादिति शेषः। अन्तोदात्तत्वमेवेति। फिट्स्वरेणेति शेषः। शुक्लशब्दे प्रकारान्तरमप्याह। ऋज्रेन्द्रेतीत्यादि। शङ्केति। वस्तुतोऽस्वरितत्वादेव तत्स्वरस्याभावे सिद्धे स्पष्टार्थमेवान्तशब्दोपादानमिति भावः। अङ्गुष्ठोदकेतिसूत्रस्याङ्गुष्ठशब्दस्य प्रयोजनम्मूलेऽभिहितमिति तस्यरित्यज्योदकशब्दोपादानस्य प्रयोजनमाह। उदकस्येत्यादिना। वशाशब्दस्य चित इत्यन्तोदात्तत्वे सिद्धे नियमार्थमुपादानमित्याह। मूले वशाग्रहणमिति। तत्। आद्युदात्तत्वम्। आद्युदात्त एवेति। यतोऽनाव इत्यनेनेत्यादिः। ज्ञापकादित्येतत्पर्यन्तानुसरणमनुचितमित्याशयेनाह। स्त्रीविषयेति। आब्विषयाणामित्येतद्वाचष्टे। नित्येत्यादिना। अवतीति। अत्र अशब्दः अवशब्दपरस्तस्मान्मतुप्। बहुलेति। आर्या बहुलेति कृत्तिकापर्यायौ। ताभ्यां स्वार्थिके के इत्वमित्याशयेनाह। आर्यिकेत्यादि। अत्र। घृतादिगणे। ज्येष्ठकनिष्ठयोः। वयसीत्यस्य प्रयोजनमाह। वृद्धयुवेति। उदात्तग्रहणानुवृत्तेरिति। एवञ्च विल्वतिष्ययोरन्तः स्वरित उदात्तो वेति सूत्रार्थ इति भावः।

## ॥ इति प्रथमः पादः ॥

वलिशब्दस्य स्वभावात् स्त्रीलिङ्गता। तस्य वाच्यार्थमाह। वलिशब्द इति। मरुद्वृधेत्यत्र मरुशब्दो देशविशेषवाची। लघुर्बहुरिति। नैतौ नित्यस्त्रीलिङ्गौ। न च वल्यादिशब्दस्यापि वलिरिवेत्यर्थे लिङ्गान्तराभिधायकत्वसम्भव इति वाच्यम्। प्रवृत्तिनिमित्तैक्ये सतीत्यस्यापि विवक्षितत्वा-

त्। विषयपदोपादानसामर्थ्यमत्र बीजम्। नब्विषय। अत्र पूर्वसूत्राद्विषयपदानुवृत्त्यैव सिद्धे विषयेति व्यर्थमित्यत आह। कस्वेत्यादि। यथाश्रुते वैलक्षण्यमलभ्यमित्याह। कस्वान्तस्येति। नपोऽनिसन्तस्येत्यत्र पूर्वसूत्राद्विषयपदानुवृत्तिः प्रदर्शनीया सा स्त्रीविषयस्येति पाठे विषयपदस्य समासघटकतया क्लिष्टेति पूर्वसूत्रस्य पाठप्रदर्शनमेतत्। पुनर्विषयपदमिति। अयम्भावः। नेह विषयपदन्नित्यनपुंसकलाभाय। तस्य पूर्वसूत्रस्थविषयपदानुवृत्त्यैव लाभात्। किन्तु नपुंसकविषयतासम्बन्धि यत्तस्य लाभाय। एवञ्चोपलक्षणीभूतो नपुंसकविषयतासम्बन्ध इहाश्रीयते। लिङ्गव्यत्ययेन प्रत्ययलोपेन वा यत्प्रातिपदिकं लिङ्गान्तरसम्बद्धन्तदपि नपुंसकविषयतासम्बन्धोपलक्षितं भवत्येवेति। ध्वनितञ्चेदमिति। तत्र ह्नी च द्विवचन इति सूत्रस्य किमुदाहरणमिति प्रश्ने आदौ अक्षी ते इन्द्र पिङ्गले इत्यभिहितम्। ततश्छान्दसत्वात्पुंवद्भावेन श्यादेशनुमागमयोरप्राप्तौ प्रथमयोः पूर्वसवर्ण इत्यनेनाक्षि औ इति स्थिते एकादेश इत्याशयेन नैतदस्ति पूर्वसवर्णेनाप्येतत्सिद्धमित्युक्त्वा अक्षीभ्यान्ते नासिकाभ्यामिदमुदाहरणमित्युक्तम्। इदञ्चाप्युदाहरणमक्षी ते इन्द्र पिङ्गले। ननु चोक्तम्पूर्वसवर्णेनाप्येतत्सिद्धमिति। नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति। छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः। मधोस्तृप्ता इवासते इत्येवमर्थम्पुंवद्भावेन नुमो निवृत्तिर्नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम्। स्वरार्थस्तर्हीकारो वक्तव्यः। उदात्तस्तर्हीकारो वक्तव्यः उदात्त ईकारो यथा स्यान्नपुंसकस्वरो मा भूत्। नब्विषयस्यानिसन्तस्येत्यनेनाद्युदात्तत्वम्मा भूदित्यर्थः। मधोस्तृप्ता इत्येतदर्थम्पुंवद्भाव आवश्यक इत्याशयेनाह। ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति। अशक्यः पुंवद्भावातिदेशस्तत्राश्रयितुमिह हि दोषः स्यात्। मध्वस्मिन्नस्ति मधुर्मास इति। सामान्ये नपुंसकमात्रस्य पुंवद्भावो न किन्तु क्व चिदेवेत्याशयेनाह। स तर्हि पुंवद्भावो वक्तव्ये न वक्तव्यः। प्रकृतस्पुंवदिति वर्त्तते इति भाष्ये उक्तम्। ननु च पुंवद्भावेत्युक्तिरव्युत्पत्तिपक्षाभिप्रायेण व्युत्पत्तिपक्षे तु अशेर्निदिति नित्त्वाद्युदात्तत्वेन भाव्यम्। अत्र मधुर्मास इति प्रतीकमुपादाय कैयटेन प्रतिपादितम्। मत्वर्थे मासतन्वोः मधोर्ञ चेति यत उत्पन्नस्य लुकि मासे पुंसि मधुशब्दो वर्त्तत इत्याद्युदात्तत्वन्न स्यात्। इत्यन्तेन ग्रन्थेन भाष्य-

क्षता पुंवद्भावातिदेशस्याशक्यत्वमुपपाद्य ई च द्विवचन इतीकारादेशस्याव-श्यकत्वं सूत्रारम्भवादिरीत्याभिहितम्। ततः स तर्हि पुंवद्भावो वक्तव्यो न व-क्तव्यः प्रकृतमुपुंवदिति वर्त्तत इत्यनेन पुंवद्भावस्यावश्यकत्वप्रदर्शनेनेच द्विवच-ने इत्यनेनेकारादेशविधानन्न कार्यम्। स्वरस्य सिद्धिस्तु यस्यान्यत्र नपुंसकत्वन् दृष्टन्तस्यास्सत्यपि नपुंसकत्वे आद्युदात्तत्वम्भवति नपुंसकविषयतासम्बन्धस्यो-पलक्षणभावेनाश्रयणादिति ध्वनितम्। लुगत्र मधुशब्दादुत्पन्नस्य लुगकारेकार-रेफाश्च वक्तव्या इत्यनेन कार्यः। यत्त्वत्र कैयटेन पुंवद्भावस्य मधोर्ष्ट भणा-तीत्यर्थमावश्यकत्वेपि वाक्यभेदेन सम्बन्धः क्रियते छन्दसि नपुंसकम्पुंवदित्येकं वाक्यम्। अस्थ्यादीनाञ्छन्दसीकारादेशो वक्तव्य इति द्वितीयं वाक्यमित्युक्त-न्तत्तु सूत्राभिप्रायवर्णनमिति न तद्विरोधः। तृणधान्यानाञ्च द्व्यषाम्। धान्य-वाचकस्य तिला इत्युदाहरणम्मूले। न चास्य धान्यवाचकत्वे माषे मासि ति-लभक्षणमेकादश्यां विरुध्येतेति वाच्यम्। तन्मासस्म्बन्ध्येकादश्यामेव वचन-बलात्प्रवृत्तेः। तिला इत्यस्याद्युदात्तत्वङ्कैयटासम्मतमिति शङ्कते। यत्त्विति। इदञ्चिन्त्यमिति। तिलशब्दस्य घृतादौ पाठकल्पनञ्चिन्त्यमित्यर्थः। इदञ्चिन्त्य-मिति। द्व्यषामित्यस्य गोधूमा इत्यत्राद्युदात्तत्वाप्रवृत्त्यभिधानन्नव्योक्तञ्चिन्त्यमि-त्यर्थः। त्रः सङ्ख्यायाः। नान्तरेफान्तसङ्ख्यावाचकस्यादिरुदात्तः स्यात्। सङ्ख्या-या इति स्त्रीलिङ्गनिर्देशस्सङ्ख्याशब्दार्थगतस्य स्त्रीत्वस्य नान्तरेफान्तशब्दे आ-रोपेण। ननु पञ्चेत्यत्र नलोपे कृते न नान्तत्वन्नलोपासिद्धत्वेन तथात्वन्तु षत्तुमशक्यम्भिन्नकर्तृकत्वादित्यत आह। पञ्चेत्यादाविति। पाणिनीये इति। शास्त्रे कर्त्तव्य इति शेषः। एतदेवाह। अनुदात्तेत्यादिना। सप्ताष्टशब्दयो-रस्यातिव्याप्तिं वारयति। सप्ताष्टशब्दाविति। मूलानुक्तं रेफोदाहरणं स्वय-माह। रत्योदाहरणमित्यादिना। समासे उदाहृत इति। अस्य अस्माभिरि-त्यादिर्बोध्यः। चतुष्कपाल इति समासे उदाहृत इत्यर्थः। स्वाङ्गशिटाम्। स्वा-ङ्गवाचिनामदन्तानां शिटाञ्चादिरुदात्तः स्यात्। इदम्। स्वाङ्गेति सूत्रम्। तेन। तादृशव्याख्यानेन। सर्वादिशब्देऽतिप्रसङ्गं वारयति। सर्वेभेति। तथा दर्शनात्। अन्तोदात्तस्य दर्शनादित्यर्थः। परो मात्रयेति। परशब्दस्य सर्वना-मत्वेन लोके त्वाद्युदात्तत्वमेव भवति। ननु सर्वादिशब्दवत्परशब्दोऽपि गणेऽ-

न्तोदात्तः पठनीयस्तावतैव सिद्धौ व्यत्ययकथनमसङ्गतमत आह। परमिति। कुपूर्वमिति पाठे पूर्वशब्दस्य प्रथमान्तत्वादादिरित्यनेन सामानाधिकरण्यसम्बन्धोऽस्ति। कुपूर्वाणामिति पाठे तु कथमस्य सम्बन्ध इत्याशङ्कायामाह। तस्य समूह इति। ननु पूर्वशब्दस्य सर्वनामत्वादामः सुट् स्यादत आह। सर्वनामकार्यन्त्विति। कर्द्दमादिरयमिति। तेनादिर्द्वितीयो वा पर्यायेणोदात्तौ। कीत्यादीति। कुपूर्वमिति कथमित्यर्थः। हरदत्तोक्तपाठः। कुपूर्व इति पाठः। आहुरित्यस्वरसबीजन्तु कावित्येव सिद्धे पूर्वशब्दोपादानमेवं सत्यनर्थकमापद्येतेति। खय्युवर्णम्। कृत्रिमाख्ये तत्रस्य कृत्रिमस्याख्या पुरुषप्रयत्नसाध्यस्याख्येत्यर्थः। वन्धुकः। पुष्पविशेषस्याख्येत्यर्थः। ऋवर्णान्तत्वात्प्राप्तमतिप्रसङ्गं वारयति। पितेत्यादि। व्यर्थ इति। सस्वरस्य तकारस्य प्रथमोपादानेन ग्रहणसम्भवादिति भावः। बोध्य इति। तेन श्वेतो वाजीत्यत्रान्तोदात्तपाठस्योपपत्तिः। ह्रस्वान्तस्य। अचादिरिति सम्बध्यते। प्राज्ञमिति। कप्रत्ययान्तत्वादन्तोदात्तोऽयम्। ताच्छील्ये किमिति। ताच्छील्ये गम्ये इत्यर्थकन्ताच्छील्य इति पदङ्किमर्थमित्यर्थः। इत्येके इति। लोके प्रवीणे कुशलशब्दप्रयोगेऽपि ताच्छील्यन्न प्रतीयत इत्यस्वरसबीजम्। अत एवाह। अन्तोदात्त इति। मूले अचस्यादेवनस्य। देवनशब्दः करणल्युडन्तः। अर्द्धस्यासमद्योतने। असमद्योतने योऽर्द्धशब्दस्तस्यादिरुदात्तः। समस्य समांशकस्य द्योतने प्रतिपादने फिट्स्वरेणान्तोदात्तत्वम्। पीतद्‍र्थानाम्। आदिरिति सम्बध्यते। ताच्छील्यानवगमात्। समुदायेन संज्ञानवगमात्। लुबन्तस्योपमेयनामधेयस्य। उपमेयनामधेयस्येत्यस्योपमेयवाचकस्येत्यर्थः। चञ्चेव चञ्चेति। इवे प्रतिकृताविति कनो लुम्मनुष्ये इति लुप्। न च लुप्संज्ञाऽभावस्य तस्य च नावयवत्वमिति चरमात्रयवाचकान्तशब्दार्थाप्रसिद्धिरिति वाच्यम्। लुबन्तस्येत्यस्य लुब्विशिष्टस्येत्यर्थात्। वैशिष्ट्यञ्च स्वविषयकज्ञानाधिकरणचरणोत्पन्नध्वंसप्रतियोगिसमयवृत्तित्वसम्बन्धेन। अग्निर्माणवक इति। अत्राग्निशब्द उपमानवाची। माणवकशब्द उपमेयवाचकस्स च न लुबन्त इति। यद्यप्यपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणव इत्युक्तेर्माणवशब्दोऽजन्तत्वादाद्युदात्त एव। तथापि ततः स्वार्थिके के प्रत्ययस्वरेणान्तोदात्तोयमिति

भवति। प्रत्युदाहरणमिति बोध्यम्। वरणा इति। अन्तोदात्तोऽयम्। नामित्यादि किमिति। उपमेयस्येत्येवास्तु। उपमेयत्वञ्चार्थस्य न च तस्य लुबन्तत्वमिति उपमेयशब्दस्य तद्वाचके वृत्त्येष्टसिद्धिर्भविष्यतीति प्रश्नः। न तु तस्य संज्ञेति। नामधेयशब्दः संज्ञापर इति भावः। न वृत्तपर्वत। उपमेयनामधेयस्येत्यनुवर्त्तते। विशेषपदोपादानाद्विशेषवाचकस्यैवोद्देश्यत्वं निषिधे। तेन स्वरूपस्य व्यावृत्तिः। एवञ्च वृत्त इव वृत्तः पर्वत इव पर्वत इत्यत्र पूर्वेणाद्युदात्तत्वम्भवत्येव। राजविशेष। आङ्गेत्यत्राङ्गशब्दः क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवदित्यञन्तात्क्वनि तस्य लुपि तदन्त उदाहरणम्। अङ्गाः प्रत्युदाहरणमिति। बहुत्वे लुप्। तदन्तात्क्वनो लुप्। एवञ्च। पूर्वसूत्रानुवृत्तौ च। राजविशेषवाचकस्य लुबन्तस्योपमेयनामधेयस्य चेद्वृत्तस्यैवेति नियमोऽत्राभिप्रेतः। वृत्त्युपपत्तये मतविशेषमाह। यमन्वाशब्द इति। कालिङ्ग इत्युदाहरणमिति। अत्र कालिङ्ग इव कालिङ्ग इत्युदाहरणे बोध्यम्। इच्छन्तीति। एतन्मतेऽकृतकन्कमेवोदाहरणम्बोध्यम्। लघावन्ते। अस्यादिरित्यधिकारे पाटेऽयसम्बन्धे प्रमाणमाह। अत एवेति। आदिरित्यस्यासम्बन्धादेव। नन्वेवं वराहशब्दोऽपि मध्योदात्तः स्यादत आह। वराहशब्दस्त्विति। अनेनैवाद्युदात्तत्वसिद्धये शङ्कते। न चेति। लघावन्त इत्यादि किमिति। बह्वषो गुरुरित्येवास्त्विति प्रश्नः। वातप्रमीरिति। अत्र संयोगे गुर्वित्यनेन तकाराकारस्यापि गुरुत्वादस्याप्युदात्तत्वापत्तिरिति भावः। सिद्धान्ते त्वत्रान्त्यस्य लघोर्द्वयोर्वा लघ्वोरभावादेतत्सूत्राप्रवृत्तौ कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्भवति। वातप्रमीरित्यत्रान्त्यस्यालघुत्वं सज्जननशब्देन्त्यस्य द्वयोर्वा लघुत्वेऽपि गुरोर्न तत्परत्वमिति प्रदर्शयितुमनयोरुपादानम्। कपालीशब्दस्येनिप्रत्ययान्ततयाऽन्त्यस्य लघुत्वसम्भावनयाऽस्य सूत्रस्य प्रवृत्तिशङ्कां वारयति। नान्तत्वादिति। नान्तत्वेन सर्वनामस्थाने परतो दीर्घे कृते नात्रान्त्यलघुपरत्वमिति भावः। किसलयमिति। गुरुपदाभावेऽन्त्यलघुपरकस्य लकाराकारस्य गुरुद्वयपरकस्य सकाराकारस्य वा उदात्तत्वापत्तिरिति भावः। न च किसलयशब्दे प्राप्तमप्येतत्सूत्रं यान्तस्याऽन्त्यात्पूर्वमित्यनेन परत्वाद्बाध्येतेति वाच्यम्। किसलयकमित्यस्योपलक्ष्यत्वात्। अस्य प्राप्तिमात्रेण। स्त्रीविषयेत्यस्य प्राप्तिमात्रेण। बाधादिति। तथा च द्वितीय-

स्योदात्तत्वमिह भवति। उदाहरणन्दत्तमिति। मूले इति शेषः। अनुपूर्वाणामित्यत्र व्यधिकरणो बहुव्रीहिर्मूले दर्शितस्तद्बीजमाह। अच्चादेरितीति। अन्वयानापत्तेरिति। सामानाधिकरण्ये नान्वयानापत्तेरित्यर्थः। यदि त्वचोः पूर्वः फिषोऽवयव इत्युच्यते तदा व्यर्थत्वं क्लिष्टत्वञ्चेति भावः। शकुनीनाम्। पक्षिविशेषवाचकानामित्यर्थः। बहुवचनस्वारस्यात्। न तु शकुनिशब्दस्येत्यर्थः कार्यः। अन्त्यात्पूर्वमिति। पूर्वशब्दस्यावधिसाकाङ्क्षार्थप्रतिपादकतयाऽन्त्यस्य त्वावत्त इत्यत्रान्तस्य निमित्तत्वेन श्रवणादिह तदर्थस्यावधित्वमिति भावः। एतेन। मध्योदात्तदर्शनेन। बहुव्रीहिस्त्विति। लघुः पूर्वो यस्य तस्य समुदायस्यादिरित्यर्थकल्पनया तित्तिरिरित्यादाविष्टसिद्धेः सम्भवादित्यभिप्रायः। अनयोः। ऋतुप्राणिवाचकयोः। मूले यथालक्षणमप्राप्तमिति। उत्सर्गबाधकसूत्रेण प्राप्तमित्यर्थः। अन्तोदात्तत्वमिति। उत्सर्गतः प्राप्तसूत्रेणान्तोदात्तत्वमित्यर्थः। कैयटश्चेति। चिन्त्य इति शेषः। धान्यानाम्। ह्रस्वान्तानामित्यत्र कर्मधारयः। चान्तानामित्यत्र ककारषकारौ पृथङ्निमित्ते चन्तानामिति वक्तव्ये चान्तानामिति कथनेन षकाराकारौ विवक्षितः। एवङ्ककाराकारोऽपि चान्तानामिति तु सौत्रः प्रयोगः। लक्ष्यानुसारिव्याख्यानादित्याशयेनाह। ह्रस्वसंज्ञकेत्यादि। त्वधान्येति। तृणविशेषवाचकस्य ग्रहणार्थमित्यर्थः। केचित्तु तत्र सूत्रे ईषान्तस्येतिसूत्रादादिर्वेत्यस्यानुवर्त्तनात्तस्य वैकल्पिकत्वेन मध्योदात्तोऽप्ययन्तृणविशेषवाची भवतीत्याशयेन तत्र पाठ इत्याहुः। ननु चान्तानामिति सूत्रे उक्तमिह त्वकारान्तसमुदाक्रियत इति तद्विरोध इत्यत आह। ह्रलन्तानामिति। जनपदशब्दानाम्। जनपदवाचिनामजन्तानामादिरुदात्तः। तस्याप्यनेनेति। अपिना फिष् इत्यस्य सङ्ग्रहः। अङ्गो राजेति। ततः क्षत्रियसमानशब्दादितिविहितप्रत्ययस्य जनपदे लुबिति लुप्। एवन्दरच्छब्देऽपि। ह्रयादीनाम्। लान्तानामित्यत्र लेति समुदायो विवक्षितः। न चैवमसंयुक्तेति व्यर्थम्। हलोऽनन्तरा इति व्यञ्जनसमुदायस्यैव संयोगसंज्ञा विधीयते न त्वज्घटितस्येति वाच्यम्। असंयुक्तेत्यस्य व्यञ्जनान्तरासंश्लिष्टो यो लस्तदन्तानामित्यर्थात्। पूर्वमित्यस्यान्त्यात्पूर्वमित्यर्थः। अन्ये तु द्वयोरुदात्तयोरसति प्रयत्ने समावेशादर्शनादन्तः पूर्वमित्यनेनैव पर्याये लब्धे वाशब्दोऽत्र चार्थे। तेन प्रकरणप्राप्तस्यादि-

रित्यस्यापि प्रकृते सम्बन्धस्तेनादेरपि पक्षे उदात्तत्वम्भवतीत्याहुः। इगन्तानाञ्च द्व्यषाम्। इगन्तानाञ्चेत्यत्र चशब्दो वाक्यालङ्कारे। वेत्यनुवर्त्तत इति। विकल्पार्थकः प्रकृते वाशब्दोऽनुवर्त्तते शब्दाधिकारात्। वाशब्दाननुवृत्तिमभिप्रेत्याह। छान्दसत्वादिति। केषाञ्चिन्मतमाह। ये त्विति। एतन्मते कृषिशब्दः प्रत्युदाहरणम्॥

## ॥ इति द्वितीयः पादः ॥

अभिमान इति। एकस्यैवोभाभ्यामुदात्तत्वस्यैव प्राप्त्या विरोधाभावेन परत्वादित्यसङ्गतमित्येवमुक्तिः। अस्योदाहरणन्तु जघनमिति बोध्यम्। उदाहरणदिगिति। तेनात्र कूर्पर इत्युदाहरणमिति ध्वनितम्। रसना। वदनमित्यत्र तु स्वाङ्गशिटामित्याद्युदात्तत्वम्। मादीनाञ्च। मादीनां त्र्यषान्द्वितीयमुदात्तम्। अस्योदाहरणं यन्मूले मलय इत्युदाहृतन्तदन्यथा सिद्धमित्याह। मलय इत्यादिना। संज्ञाभूतः शब्दप्रवृत्तिनिमित्तकः। मकरवरूढेत्यत्र तु जातिप्रवृत्तिनिमित्तको गृह्यते। इति न्यायेनेति। एवमुक्तिः प्रातिपदिकस्य कार्येऽपि प्राचाम्मते त्वस्य प्रवृत्तिमभ्युपेत्य। वस्तुतस्तु जातिविशिष्टस्य शीघ्रोपस्थितत्वाद्वाचकतासम्बन्धेन तद्विशिष्टग्रहणम्। जलजन्तुविशेषे प्रसिद्धोऽयम्। शादीनां शाकानाम्। शकारादीनां शाकवाचिनान्त्र्यषान्द्वितीयमुदात्तम्। मूले शीतन्याशतपुष्पा इत्युक्तम्। तत्र शीतन्येत्युदाहरणम्। तेन। आद्युदात्तत्वविधायकमिति कथनेन। कैयटमतं वृत्तिविरुद्धमित्याह। फिडिति। त्र्यच्त्वाभावादिति। उभयोरप्युदाहरणत्वेनोपन्यास इति वादिमतमसङ्गतमित्यनेन कथितम्। कैयटादिरीत्येति। तन्मते त्र्यषामित्यस्यात्रासम्बन्धादिति भावः। केचित्त्विति। त्र्यच्पदस्य त्रित्वसंख्याविशिष्टाच्परतया शते पञ्चाशदिति रीत्या चतुरच्कादिष्वपि त्र्यषः सद्भाव इति भावः। वदन्तीति। अनेनास्वरसः सूचितः। स चोत्तरसङ्ख्यायाः पूर्वसंख्याबाधकत्वस्य न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते इत्यादौ सुप्रसिद्धतया एकाच्कद्व्यच्कमेव प्रत्युदाहरणमित्यसङ्गतमिति। पान्तानाङ्गुर्वादीनाम्। स्वरविधौ व्यञ्जनमविद्यमानवदित्यस्य सामान्यतः प्रवृ-

त्तिमभ्युपेत्य पादप इत्युदाहरणम्मूलेऽभिहितम् । हल्स्वरप्राप्तौ स्वरोद्देश्यके विधौ वा तत्प्रवृत्तिरिति सिद्धान्ते त्वस्यातप इत्यं वोदाहरणम्पादप इत्यादौ तु स्वरव्यत्ययो बोध्यः लौकिके त्वाद्युदात्तत्वमेव लघावन्त इत्यनेनेति बोध्यम्। पान्तानाङ्किङ्कर्दभ इत्यादिग्रन्थस्तु तस्याः परिभाषायाः सामान्यतः स्वरविधौ प्रवृत्तिमभिप्रेत्य। युतान्य। अव्ययपूर्वपदप्रकृतिस्वरे प्राप्त इति। अयुतशब्दस्य सङ्ख्याविशेषे रूढत्वेऽपि संज्ञाशब्दानां व्युत्पादनमवयवार्थारोपेणेति प्रकृतेऽव्ययपूर्वपदप्रकृतिस्वरप्रवृत्तिः । मकरवरूढ । अत्रादिरित्यस्योपादानाद्वितीयाधिकारबाधो मा भूदित्याशयेन वाशब्दोपादानम्। एवञ्च मकरादौ पर्यायेणाद्द्वितीयस्य वोदात्तस्य श्रवणम्। वरूढ इतीति। अस्यादिरिति शेषः। आदिशब्देन सङ्ख्याद्यान्दर्शयति। पारेवत इत्यादिना। मकरः। मकरो यादसि ज्ञेयो निधिराशिप्रभेदयोः। वरूढः। अयं सबलवाची। वरूढः सबलेऽपि स्यादिति। पारावतः। पारावतः कलरवे शैले मर्कटतिन्दुके। वितस्ता। नदीविशेषे प्रसिद्धोऽयम्। इक्षुः। अस्याभिधेयं व्यक्तम्। आर्जिः। अर्जनेऽव्युत्पन्नोऽयम्। द्राक्षाकलाः। द्राक्षायाः कला इत्यर्थः। उमाः। उमोऽतसीहैमवतीहरिद्राकीर्त्तिकान्तिषु। काशाः। दिशः। काशीनम्। काशीनः। काश्या इन इत्यर्थः। अयमिति। सुगन्धिते जनशब्द इत्यर्थः। नपः फलान्ता। सूत्रे लिङ्गवचनस्याविवक्षितत्वान्नप इत्येकवचनान्तस्य फलान्तानामिति बहुवचनान्तेन सामानाधिकरण्यमविरुद्धम्। केचित्तु मते फ इति षष्ठ्यर्थे प्रथमा। अन्ये त्विति मते फाशब्दाकारस्य षष्ठ्येकवचने आत इति योगविभागाल्लोपः। यान्त्यस्यान्त्यात्पूर्वम्। अत्रादिर्द्वितीयो वेत्यस्यासम्बन्धार्थमन्त्यात्पूर्वमित्युपात्तम्। न कश्चिद् विशेष इति। एतेनैतस्य सूत्रस्य कुलाय इति नासाधारणप्रयोजनमित्यभिहितम्। यान्तस्य ना। षष्ठ्यर्थे प्रथमा। अत्र लघुपदस्यासत्त्वमभ्युपेत्योदाहरणान्याह। नानेत्यादि। इति पाठ इति। यान्तस्य नालघुनी इति पाठ इत्यर्थः। केचित्त्विति। एतन्मते यान्तस्य त्यच थश्च आश्चेति द्वन्द्वगर्भो बहुव्रीहिः। तत्र आकारघटितं वाक्यं लघुशब्दरहितम्। तेन पूर्वोक्तोदाहरणानामपि सङ्ग्रहः। सम्बधात इति। मण्डूकप्लुत्येत्यादिः। सांकाश्यकाम्पिल्य। आदिर्वेति वर्त्तत इति। मकरवरूढेतिसूत्रादादिर्वेतिमण्डूकप्लुत्या सम्बध्यत इत्य-

र्थः। अत एव। आदिपदसम्बन्धादेव । ननु कैयटोक्तावन्त इत्यप्रकृतस्याभिधानम्। किञ्च द्वितीयमित्यस्यानभिधानेन न्यूनता चेति दोषद्वयमत आह। अन्तान्तशब्देनेति। काशिकायां विरोधोऽप्येवमेव परिहर्त्तव्य इत्याह। एवमिति। इत्येव सिद्धेरिति।न चाधुनापि द्वितीयोऽन्त्यात्पूर्व एवेति त्रयाणां ग्रहणं व्यर्थमिति वाच्यम्।आदेरप्युदात्तत्वसम्पादकत्वेन चारितार्थ्यात्। ईषान्तस्य ह्रयादेरादिर्वा। अत्रादेरुदात्ताभावेऽन्तोदात्तत्वम्फिष इत्यनेन प्राप्तमपि न किन्तु द्वितीयस्य एतत्सूत्राव्यवहितप्राक्सूत्रे द्वितीयमित्यस्य सम्बन्धात्। न च प्रागीषादिति प्रागभिहितमिति कथमत्र द्वितीयमित्यस्य सम्बन्ध इति वाच्यम्। तत्र प्रागीषादिति नापूर्वङ्किन्तु प्रकृतसूत्रे विभिन्नार्थकादिपदोपादानेन च तद्घटितवाक्ये द्वितीयमिति न सम्बध्यते इत्याशयकमेव वा ग्रहणेनादेरुदात्ताभावे तु विरोधाभावेन द्वितीयमित्यस्य सम्बन्धः स्यादेवेत्याशयात्। अत एवाह। पक्षेऽधिकारादिति। मञ्जूषेति। अत्र ईषान्तेत्यनेन प्राप्ताद्युदात्ताभावे भादीनाञ्चेति द्वितीय उदात्तः। अम्बरीषमिति। अत्राद्युदात्ताभावे लघावन्त इति सूत्रेण तृतीयस्योदात्तत्वम्। उशीरदाशेर । अत्रादिरित्यनुवर्त्तते। वेति तु निवृत्तम्। हृदयशब्दोपादानस्य प्रयोजनमाह। अत्र हृदयेति । देवरग्रहणमिति । प्रकृतसूत्रे देवरपदोपादानाभावेऽप्यादेरुदात्तत्वन्द्वयोर्लघ्वोः परतः उपस्थितस्य गुरोरिकारस्य तेनैव सिद्धमिति भावः। अनित्यत्वज्ञापनार्थमिति । तत्फलन्तु कपालुशब्दे गुरोर्द्वितीयस्योदात्ताभावेऽन्तोदात्तत्वम्फिट्सूत्रेण भवति। केचित्त्विति। एतन्मते प्रकृतसूत्रे यदि देवरशब्दो न स्यात्तदा त्वन्तोदात्तत्वमेव घृतादीनाञ्चेत्यनेन स्यात्। देवरशब्दोपादानसत्त्वे तु घृतादिपाठसामर्थ्यात्पक्षे प्रकृतमाद्युदात्तत्वम्भवति अथ वा वेत्यनुवर्त्तते। एतदभावे तत्र पाठादन्तोदात्तत्वमिति भावः। केचिदिति।मुख्या इत्यर्थः। महिष्यषाढयोः। जायाचेष्टका च जायेष्टके जायेष्टकयोराख्येति समासः। इन्द्वान्ते श्रूयमाणस्याख्याशब्दस्य प्रत्येकं सम्बन्धः। मित्यादि किमिति। महिष्यषाढयोरिति किमर्थमित्यर्थः। सिंहीति। इयमपि सिंहस्य या जाया तदाख्येति भावः। जाया शब्दस्यात्र भार्यापरत्वात्। इत्यादिकिमिति । महिषीति राजपत्नीं रूढोयत्र तु भार्यासामान्यवाची योजायाशब्दस्तद्बोध्यबोधक इति भावः।

महिषीजायेति मूले महिषीशब्दस्तु जायापर्यायवाची । अषाढा उपदधातीत्य-षाषाढाशब्द इष्टकावाचकः । प्रत्युदाहरणे तु नक्षत्रवाचकस्तदाह । अषाढेति॥

## इति तृतीयः पादः ।

शकटि शकव्योरक्षरम् । पर्यायेणेत्यस्य प्रयोजनमाह । अक्षोभ इति । युगपद्ग्रहणबोधितेत्यस्य इत्यर्थे त्वत्रार्थेऽन्वयः । इति पदेन अनुकरणभूतसमुदायस्य परामर्शः । अस्य वार्मीयमितिवद्भि नैरलुक् तत्फलम् । पर्यायेणेत्ये तत्फलम् । अनुवादकमिति । वस्तुतस्तस्या परिभाषाया अनित्यत्वज्ञापनार्थमिति तत्त्वम् । मूलेऽन्यत्रेति । ब्राह्मणनामधेयातिरिक्त इत्यर्थः । तेन यौगिकस्य लाभः । पारावत । ब्राह्मणनामधेयस्येत्यत्र न सम्बध्यते । उपोत्तमवर्जमिति यदुक्तन्तत्फलमाह । अत्र यशब्द इति । कपिकेश । एतयोश्छन्दसि अक्षरमक्षरम्पर्यायेणोदात्तम् । अच्छन्दसि स्वरप्रवृत्तिमाह । भाषायामिति । कपिरन्तोदात्त इति । इगन्तानाञ्च द्व्यषामित्याद्युदात्तत्वम्प्राप्तमपि न भवति घृतादित्वात् । न्यङ्स्वरौ । तदनुवादकम् । उक्तरीत्यादि इय स्वरितस्याऽनुवादकम् । तिल्यशिक्य । स्वरिताविति वचनविपरिणामेन सम्बध्यते । सूत्रस्थवार्त्तिकेनेति । नवसूरमर्त्तयविष्ठेभ्यो यदिति वार्त्तिकेन यत् स च स्वार्थे । प्रयुज्यते चेति । अन्त स्वरितो धान्यशब्दः प्रयुज्यते इत्यर्थः । स्वरितान्तोऽन्तोदात्तो वेति । कर्द्दमादीनाञ्चेत्यनेनाद्युदात्ते तदेकवाक्यतापन्नशेषनिघातेनान्त्यस्यानुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितः । आद्युदात्ताभावे त्वन्तोदात्तः फिट्स्वरेण । त्वत्त्वसमसिमेतिसूत्रे विशेषानुपादानादाह । सर्वानुदात्तानीत्यर्थः । भाष्यप्रामाण्यादिति । तत्र हि प्रत्ययाद्युदात्त[illegible]तोरन्तः[illegible]प्रत्ययाद्युदात्ताद्धातोरन्त इत्येतद्भवति विप्रतिषेधेन । प्रत्यय [illegible]दात्तत्वस्यावकाशः । यत्राऽनुदात्ताप्रकृतिः । समत्वं सिमत्वम् । धातोरन्तइत्यस्यावकाशः । यत्राऽनुदात्तः [illegible] । पचति पठतीति । इहोभयम्प्राप्नोति । गोपायति । धूपायति । धातोरन्त इत्येतद्भवति विप्रतिषेधेनेत्युक्तम् । अत्र प्रत्ययाद्युदात्तत्वस्यावकाशप्रदर्शनावसरे लौकिके समत्वम् सिमत्वमिति प्रयो[illegible]दात्तत्वप्रदर्शनेन प्रकृते छन्दसीति न सम्बध्यत इति लभ्यते । निपाता आद्युदात्ताःइत्यन्तेति प्रसङ्गं वारयति । अग्रुक्तीत्यादिना ।

अभ्यभिद्दीति । अत्राभिशब्दस्याद्युदात्तत्वाभावेऽन्तोदात्तत्वे सति यणादेशे उदात्तस्थानेऽयं यणिति द्वितीयाभिशब्दाद्याकारस्य स्वरितत्वम्भवति । इदं सूत्रमिति । उपसर्गाश्चाभिवर्जमित्येतत्सूत्रघटकमुपसर्गाश्चेति पदमित्यर्थः । तदभावज्ञापनाय । आद्युदात्तत्वाभावज्ञापनाय । एवमभिवर्जमित्यपि न वाच्यमित्याह । अभिश्चैवमादिषु पाठ्य इति । एवञ्च निपातत्वात्प्राप्तमप्याद्युदात्तत्वमेवादीनामन्त इत्यनेन बाधिष्यत इति भावः । केचित्त्विति मते त्वभेरेवमादिषु न पाठ इति बोध्यम् । एवादीनामिति पाठं व्याचष्टे । एवादीति । गणे । चादिगणे । मूले तच्चिन्त्यमिति । सहशब्दस्य एवादिषु पाठादन्तोदात्तत्वस्य न्यायसिद्धत्वात् । ते पुत्रसूरिभिरित्यत्रान्तोदात्तदर्शनाच्च । चिन्तावीजञ्चिन्त्यमिति यदुक्तन्तत्र साधकमाह । सहशब्दस्यापीति । ननु सहशब्दस्य निपातत्वेऽपि परत्वाद्विशेषविहितत्वाच्चान्तोदात्तो भविष्यतीत्यत आह । प्रयुज्यते चेति । आद्युदात्तः प्रयुज्यत इत्यर्थः । क्वचिदस्यान्तोदात्तत्वन्दृश्यमानन्तु छान्दसमित्याह । ते पुत्रेत्यादिना । वावादीनामुभौ । अत्र सूत्रे उदात्ताविल्यस्य पाठदर्शनेन तस्य सूत्रघटकत्वमिति भ्रमनिवृत्तये आह । अनुवृत्तिप्रदर्शनमिति । प्रकरणादेवोदात्तावित्यस्य लाभात् । वावादीनामित्यत्र द्विरुक्तानां वावादीनां निर्देशः । त्रिसूत्रग्राम् । वावादीनामुभौ । चादयोऽनुदात्ताः । एवम्पूर्वपठितं एवादीनामन्त इति इतित्रिसूत्रग्राम् । यदि पूर्वसूत्रेऽप्यादिशब्दः प्रकारे तर्हि तत्सूत्रव्याख्यानावसर एव कुतो नेत्थं व्याख्यातमिति चेत् । शृङ्गग्राहिकान्यायेनेति स्पष्टार्थ । प्रकारे । सादृश्ये । न तु गणनिर्देश इत्यर्थः । सादृश्यञ्च निपातत्वेन । चादयोनु । यदत्र निपातपदानुवृत्तिरुक्तातत्फलमाह । पशुनेतीति । अत्र पशुशब्दो न निपात इति नानेनानुदात्तत्वम् । यथेतिपा । आद्युदात्ता इत्यस्य चादयोऽनुदात्ता इत्यत्र बाधदर्शनात्प्रकृतेऽनुदात्तपदस्यैवानुवृत्तिरित्याह । अनुदात्त इतीति । अनुवादकमिति । कर्मधारयवद्भावे सति समासस्येति सूत्रेणान्तोदात्तस्य सिद्धत्वादनुवादकमित्यर्थः । शेषमिति व्याचष्टे । प्रकारादीति । अनुवादकमिति । तस्य परमाम्रेडितमनुदात्तञ्चेत्यनेनानुदात्तत्वस्यसिद्धत्वादनुवादकमित्यर्थः । अनुदात्तम्पदमित्यस्येति । नेदं वचनम्प्रकारादिद्विरुक्तावित्यस्य शेषभूतङ्किन्तु सर्वविशेषविधायकवचनशेषभूता या परि-

भाषा तत्सिद्धान्तोदात्तत्वानुवादकमित्यर्थः। शान्तनवाचार्यप्रणीतेषु सूत्रेष्विति दर्शनेन शन्तनोराचार्यस्य यदपत्यन्तस्य प्रणेतृत्वमिति भ्रमनिवारणायाह। इदम्मात्र इति। तथा च शन्तनुशब्दात्तेन प्रोक्तमित्यण्। तदन्तस्याचार्यप्रणीतशब्देन कर्मधारयः। आचार्यस्य शन्तनुरेवेत्यर्थाल्लभ्यते। नन्वेव शन्तनुशब्दस्याचार्यशब्देन कर्मधारयङ्कृत्वा तदन्तस्य तृतीयान्तस्य प्रणीतशब्देन समासे विवक्षितस्यार्थस्य लाभसम्भवे किमर्थम्प्रोक्तार्थाणन्तस्याचार्यप्रणीतशब्देन समासनिर्देश इति चेत्। प्रियतद्धिता दाक्षिणात्या इति लौकिकवैदिकेषु कृतान्तेष्वित्यत्र भाष्यकृतोक्तेर्दर्शनेन स्वस्यापि दाक्षिणात्यत्वसूचनायेतीच्छाण। फिट्सूत्राणि समामनानीति। फिषां संस्कारोपयुक्तानि सूत्राणि सम्यगामनामि व्याख्यानेन व्यामनानीत्यर्थः॥

## इति फिट्सूत्रवृत्तिविवरणम्।

अथ प्रत्ययस्वराः। व्याख्यायन्त इति शेषः। सूत्रेऽग्निरिति। अङ्गेर्निः स चाद्युदात्तः। उणादिप्रत्ययेष्वपीदम्प्रवर्त्तत इत्याशयेनास्योपादानम्। वस्तुतस्तु फिट्सूत्रेणान्तोदात्तत्वे नास्यसिद्धिरत आदौ कर्त्तव्यमित्यस्यैवविवरणम्। तव्योऽयमिति। तव्यत्तव्यानीयर इति सूत्रनिर्दिष्टो द्वितीयः प्रत्ययः। प्रथमस्य त्यागस्तु तस्य सूत्रान्तरेण संस्कारात्तदाह। तव्यत्त्विति। स्वरितो भवतीति। एवञ्च तित्वप्रयुक्तो न विशेष इति शङ्का। विशेषमाह। तथापीति। अत्रार्थे। स प्रकृतेरित्यर्थे। अन्यथा। स प्रकृतेरित्यर्थाभावे। तस्य। अकचः। ककारादकार उच्चारणार्थोऽत एव पचतकीत्यस्य सिद्धिः। इति न्यायादिति। एवञ्चाकृती एव स्वरे लुक्। पुनस्तु न स्वरप्रवृत्तिः प्रत्ययलक्षणेनेत्याह। प्रत्ययलक्षणन्त्विति। नन्वेवञ्चतुः करोतीत्यत्र द्विचितुभ्य इति विहितसुचो लोपाच्चित इत्यस्य प्रवृत्तिर्न स्यादित्यत आह। चतुरिति। ततः परः। अकचः परोऽकारः। तदनुसारेण व्याचष्टे। योगं विभज्य व्याचष्ट इत्यर्थः। ननु योगविभागाभावेऽपि चुफञश्चित्वसामर्थ्यान्न ञित्स्वरो बाधको भविष्यतीत्यत आह। चुफञश्चित्वमिति। आम्नायनादपीति। अत्र ह्रस्वादिभ्यः फञिति फञ्। मा भूदिति। किन्तर्हि प्रत्ययाद्युदात्तत्वमेव भवति। क्यचीति। एतिस्तुशास्वृदृजुष इति क्य-

प् । इति नियमेनेति । यदि क्यपोऽनेन सूत्रेणोदात्तत्वस्य प्राप्तिवारणाय तद्धितस्येति ब्रूषे तदा मन्त्रे वृषेष इति सूत्रादुदात्त इत्यस्य व्रजयजोरिति सूत्रेऽनुवृत्त्या व्रजयजोर्भावे यः क्यप् एवोदात्त इति नियमः स्वीकार्योऽन्यथा इत्य इत्यत्रैव तस्याप्युदात्तत्वसिद्धेरोदात्तग्रहणानुवृत्तिर्व्यर्थैव स्यात् । एवञ्च तेनैव नियमेनेतीत्यादि विहितस्य क्यप उदात्तत्ववारणे सिद्धे तद्धितस्येत्यस्य नेदम्प्रत्युदाहरणमिति भावः । अविदूसमिति । अवेर्दुग्धे दूसप्रत्ययः । तिसृभ्य इति सूत्रे तिसृशब्दस्य शब्दस्वरूपपरतया बहुवचनासङ्गतिरत आह । बहुवचनमिति । वार्त्तिकक्रदुक्तं जस्ग्रहणानर्थक्यं दूषयन्तस्य सार्थक्यमाह । यत्त्वित्यादिना । अनेन । उपसमस्तार्थमिक इति कथनेन । इति सूचितमिति । यत्र यत्र पञ्चमीनिर्देशस्तत्र तत्र तस्मादिति परिभाषा प्रवर्त्तते विहितविशेषणतया व्याख्यानञ्च भाष्यकारादिव्याख्यानं यत्र साधकत्वं तत्रैवेत्यप्यस्मादेव भाष्यात्कल्प्यते । प्रकृतसूत्रे जस्ग्रहणे कृते सत्येतत्सूत्राप्रवृत्तावति तिस्रावित्यादौ स्वरप्रवृत्तिमाह । अतितिसृशब्द इति । इत्युक्तेरिति । यद्यपि यथा श्रुतसूत्रसत्त्वेऽप्यतितिसृशब्दावयवस्य तिसृशब्दस्याकृदन्ततयाऽतिशब्दात्परस्य तिसृशब्दस्य स्वरः सिद्धस्तथापि वक्ष्यमाणरीत्याऽनेर्धातुलोप इत्यस्यावश्यकतया तादृशन्यासेऽप्यत्र स्वरः प्राप्नोतीत्याशयेनेत्थमुक्तिः । तथा । अन्तोदात्तः । साविकाचस्तृतीयादिर्विभक्तिरितिसूत्रस्य सुपरकं यदेकाज्रूपन्न हि ततः परा तृतीयादिर्विभक्तिः सम्भवतीति यथा श्रुतार्थो न घटतेऽतो नैतत्साविकाजिति विशेषणङ्किन्तूपलक्षणतया तद्विवक्षितमित्याशयेनाह । सौ यदेकाज्रूपमिति । दृष्टमित्यस्याध्याहारः । यदिति शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । उपलक्षणीभूतधर्माश्रयणफलन्तु राज्ञेत्यत्र विभक्त्युदात्तत्वव्यावृत्तिरिति स्फुटम्मूले तच्चानुपपन्नम् । राजस्वित्यत्र जेत्यस्मादेकाचः सौदर्शनेन ततः परत्वं राजभ्यामित्यादौ सम्भवत्येवेत्यत आह । अर्थवत्परिभाषयेति । एवञ्चार्थवत्परिभाषैकवाक्यतया यादृशो वाक्यार्थो भवति तमाह । सौ यदर्थविशिष्टमिति । राज्ञेत्यत्र स्वरप्रवृत्तिमाह । राजन्शब्द इति । ननु एकाज्ग्रहणाभावे सावित्यव्यावर्त्तकमत आह । सावित्यस्येति । साविति प्रथमैकवचनबोधकमेवास्त्वित्याशयेन शङ्कते सप्तमीत्यादीति । प्रथमैकवचनस्य सुपदेन ग्रहणे सावित्यस्य व्यावर्त्यं मह्निरि-

ति भविष्यति। विकृतिग्रहण इति। प्रथमैकवचनपरकं यानिति यान्त इति वा तद्विकृतिरूपमेवेति भावः। आगमसहितेति। यानित्यस्यनुमागमविशिष्टत्वात्। लौकिकेन तन्मध्यपतितन्यायेनासिद्धिमाह। तन्मध्येति। य एकाच् यः शब्द एकाजित्यर्थोऽस्त्विति भावः। ततः परेति। दोष्णा दोषभ्यामित्यत्र प्रथमैकवचने यः शब्द एकाच् दोःशब्दस्तस्मात्पराऽस्तीति भावः। नन्वेवमपीति। सौ सप्तमीबहुवचने यदेकाज्रूपन्ततः परा विभक्तिः स्थानिवद्भावेनास्ति। स्थानिवद्भावेन तत्त्वबुद्धिजननादिति भावः। अत एव। स्थानिवद्भावस्वीकारादेव। मम तु। स्थानिवद्भावेन तत्त्वबुद्धिस्वीकर्तुर्मम तु। न दोष इति। शुनः शुनेत्यत्र श्वस्वित्यत्र य एकाच् तस्यैव सर्वे सर्वपदादेशा इति न्यायेन तत्त्वबुद्ध्या तस्मात्परायाविभक्तिस्तस्या उदात्तत्वे प्राप्ते न गोश्वन्निति निषेधस्य प्रवृत्त्या निषेधोदाहरणासङ्गतिरूपः दोषो नास्तीति भावः। वारणादिति। दोषभ्यामित्यत्र स्थानिवद्भावेन प्रसक्तस्य दोषस्य वारणात्। दोष्ण इत्यत्र तु न दोषः। सप्तमीबहुवचने य एकाच्दोःशब्दस्ततः परा न विभक्तिः किन्तु दोषन्नादेशस्य य आदेशस्ततः परा। परम्परया स्थानिवद्भावप्रवृत्तौ मानाभावादिति भावः। एवमेव त्वयेत्यत्र दोषं वारयति। त्वयेत्यादाविति। प्रथमैकवचनप्रकृतेः। युष्मच्छब्दस्य। अविधानादिति। युष्मच्छब्दस्य त्व अदित्यादेशस्तस्य स्थाने त्वय् इत्यादेशेऽपि यः प्रथमैकवचने एकाच् ततो न विभक्तिरिति भावः। रूपविवक्षायाः फलान्तरमप्याह। किञ्चेति। न गोश्वन्निति निषेध इति। अत्र गोश्वनोः प्रतिषेधो ज्ञापक इत्यर्थः। इति भाष्यमेवेति। तत्र हि सप्तमीबहुवचनस्य ग्रहणम्। कथं ज्ञायते। यदयन्न गोश्वन्साववर्णेति गोश्वनोः प्रतिषेधं शास्ति। कथङ्कृत्वा ज्ञापकम्। यदि प्रथमैकवचनस्य ग्रहणं स्याद्गोश्वनोः प्रतिषेधवचनमनर्थकं स्यादित्युक्तम्। अत्र कैयटः। गोषु श्वस्विति सप्तमीबहुवचने एकाच्त्वाद्गोभ्यां श्वभ्यामित्यादौ विभक्तेः प्राप्तमुदात्तत्वम्प्रतिषिध्यते प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोऽनर्थकः। प्रथमैकवचने हि यदेकाच्छब्दरूपङ्गौरित्यौकारान्तन्न च तस्मात्तृतीयादिर्विभक्तिः परासम्भवतीति प्राप्त्यभावात्किम्प्रतिषेधेनेति भाव इति। रूपविवक्षायामप्यतिप्रसङ्गमाह। स्यादेतदिति। कैयटरीत्येति। तेन श्वन्वादेशेऽप्युदाहरन्ति। पथ्य पथिभिरिति सप्तमीबहुवचने

एष्वित्यशादेशे कृते भवत्येकाच् । प्रथमैकवचने त्वयमित्येकाच् न भवतीति स्वराप्रसङ्ग इत्युक्तम् । तेनापि । कैयटेनापि । अर्थभेदात् । स्त्रीत्वविशिष्टार्थवाचकत्वसत्त्वेनार्थभेदादित्यर्थः । इति निषेधादिति । तस्मिन्नपि सूत्रे सप्तमीबहुवचनग्रहणेन तत्र एत्वप्रवृत्तिप्राक्कालेऽवर्णान्तत्वमस्तीत्याशयेन शङ्क्यम् । प्रथमैकवचनेति । तस्मिन् सूत्रे तथैव सिद्धान्तात् । इष्टापत्तेरिति । इष्टस्यैव भवता साधनात् । ननु प्रागुक्तं सर्वानुदात्तत्वङ्कथमत आह । एभिरत्र इत्यादि। अन्तोदात्तादुत्तरपदात् । अनित्यसमास इत्यस्यार्थे प्रतियोगितया विशेषणीभूतन्नित्यसमासपदं व्याचष्टे । नित्यशब्दस्येति । वाशब्द उदात्तः । समासस्वरेण वाशब्द उदात्तः अग्निचितेति । अग्नौ चेरिति क्विप् । यदुक्तान्नित्याधिकारविहितेत्यादि तस्य फलमाह । यस्त्विति । पदमात्रेत्यत्र मात्रपदमवधारणे । इति विग्रह इति । अत्र विद्यमानेत्यस्याधिक्यात् समस्यमानपदमात्रघटितत्वं विग्रहस्येति निरुक्तान्नित्यसमासत्वमत्र कृतबहुव्रीहिः । इदञ्चेति । नित्याधिकारविहितसमासादन्यत्रेति यत्तदित्यर्थः । वृत्त्याद्यनुरोधेनेत्यनेन भाष्यानुरोधाभावे उक्तः । भाष्यान्तरविरोधोऽप्यस्तीत्याह । उपपदमपीति । अन्यथा । एतादृशनित्यसमासभेदस्यापि प्रयोजकत्वाविवक्षायाम् । उपस्वेन । स्वस्य समीपमुपस्वन्तेन । अत्रे च्छन्दस्यसर्वनाम । अत्रासर्वनामस्थानमित्युक्तेः फलमाह । शसादिरित्यादिना । अस्य लाघवायेत्यादिः । इकः । इक्श्तिपाविति विहितस्येकः । विवक्षित इति । एतन्मते प्राञ्चेत्यादुदाहरणम् । नन्वत्र न गोश्वन्निति सूत्रेण निषेधो भविष्यतीति कथमेतदुदाहरणमत आह । छन्दसीत्यादि । निषेधः । सावेकाच इति प्राप्तस्य निषेधः । तस्यापि । न गोश्वन्निति निषेधस्यापि । लक्ष्यविरोधादिति । अत्र विभक्तेरुदात्ताया दर्शनं नकाराविवक्षायामुपपद्यते । यदि तु नकारस्य विवक्षा तदेतन्न लक्ष्यङ्किन्तु प्राञ्चेत्याद्येव तदा सामान्यतस्तस्य निषेधस्य प्रवृत्तौ तदेवोदाहरणमस्यापि सूत्रस्येति प्रतीचरत्यन्तोदात्तत्वमेतत्सूत्राप्रवृत्तौ नोपपद्यते नकारस्य विवक्षितत्वे तु एवन्न स्यादिति लक्ष्यविरोधः स्पष्टः । आकरेति । पदमञ्जर्यादीत्यर्थः । तत्र ह्यञ्चेरितिसूत्रस्य चाविति सूत्रबाधकतोक्ता । सा यद्यत्र नकारस्य विवक्षा स्यात्तदा चावित्यस्य लुप्ताकारनकारे ऽताविव प्रवृत्त्याऽस्य सूत्रस्य तु तत्राप्रवृत्त्या न सङ्गच्छेतेति

भाव:। इहापि मूलेऽस्य चुस्वरबाधकतोक्ता। नन्वस्य सूत्रस्यासमासे चारितार्थ्यात्कथञ्चुस्वरबाधकत्वमत आह। अचोत्तरपदादितीति। उत्तरपदेन समासाक्षेपे सति तस्य विशेष्यत्वमुत्तरपदभूताञ्चतिस्तद्विशेषणत्वन्तथा च यादृशो वाक्यार्थस्तमाह। तेनोत्तरेत्यादिना। तदपवाद इति। चावित्यस्यापवाद इत्यर्थ:। अत्र तदपवादत्वमुपपादयति। लुप्ताकारेति। सावकाशमिति। एवञ्चापवादत्वोक्तिर्विरुद्धा। समाधत्ते। तत्रेत्यादिना दध्यञ्चेत्यत्र पूजायान्नकारलोपाभावेन चावित्यस्याप्राप्त्याऽस्य सूत्रस्य तत्र प्राप्त्या तदप्राप्तियोग्येऽपि विषये प्राप्तिरेतावताऽपवादत्वाभावशङ्का न युक्ता तत्र न गोश्वन्निति निषेधेन चारितार्थ्यस्य विरहादिति भाव:। दध्यग्भ्यामिति। अत्रालोपाभावेन चावित्यस्य नकारलोपस्य सत्त्वेन न गोश्वन्निति निषेधस्य चाप्राप्तिरिति भाव:। तत्रापि। दधीच इत्यत्रापि। पराञ्च इत्यादावस्य चारितार्थ्यमाशङ्क्य निराचष्टे। नवेत्यादिना। इष्टत्वादिति। अत एव भाष्ये चोरनिगन्तोऽञ्चतावप्रत्यये। चुस्वरादनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन। चुस्वरस्यावकाश:। दधीच: पश्य। अनिगन्त इत्यस्यावकाश:। पराङ् पराञ्चौ पराञ्च:। इहोभयम्प्राप्नोति। अवाचा। अवाचे। अनिगन्त इत्येतद्भवति विप्रतिषेधेनेत्युक्तम्। न च चुस्वरस्य दधीच इत्यत्र चारितार्थ्यम्प्रदर्शितमिह तु भवता चुस्वरस्बाधित्वाञ्चेश्छन्दसीत्यस्य प्रवृत्तिरुच्यत इति विरोध इति वाच्यम्। अवकाशप्रदर्शनपरभाष्यस्य लौकिकोदाहरणविषयत्वात्। सति शिष्टेति। भाष्ये विप्रतिषेधन्दूषयित्वा सति शिष्टत्वेनैवानिगन्त इत्यस्य चुस्वरबाधकतोक्ता। एतस्यापि। अञ्चेश्छन्दसीत्यस्यापि। पराञ्च इत्यादौ प्रकारान्तरेणास्याप्रवृत्तिमुपपादयताम्मतमाह। केचित्त्वचेति। अत एव। अन्तोदात्तादित्यस्य सम्बन्धादेव। ननु धातुस्वरेणाञ्चतिरन्तोदात्त एवेत्यत आह। सामर्थ्यादिति। अन्तोदात्तादित्येतद्विशेषणसामर्थ्यादित्यर्थ:। विभक्त्युत्पत्तिकालावच्छिन्नमिति। यस्या विभक्तेरयं स्वरो विधीयते तदुत्पत्तिकालावच्छिन्नमित्यर्थ:। ऊडिदम्। इति च वर्त्तत इति। एकाज्भ्योऽन्तोदात्तेभ्य एभ्य: पराऽसर्वनामस्थानविभक्तिरुदात्ता। अत्रानुवर्त्तमानमेकाजग्रहणं यत्र सफलं तदाह। तत्रैकाजिति। अव्यभिचारादिति। ऊशब्दस्यैव सूत्रप्रवृत्तियोग्यबोधकतया तस्यैकाच्त्वाव्यभिचारादित्य:

र्थः । असर्वनामस्थानविभक्त्याच्छिन्नस्यार्थवत इत्यस्य विशेषणतायामूढ इत्यस्य विशेष्यत्वे एकाजभिन्नादूठोऽर्थवतः परादित्यर्थो वाच्यः स चासम्भवग्रस्तः । ऊठोऽर्थवत्त्वासम्भवादित्यपि बोध्यम् । ननु आच्छिन्नं विशेष्यमर्थवत्पदार्थस्तत्र ऊडभेदो बाधित इत्यूडित्यस्य ऊड्घटिते लक्षणा भविष्यति तदभेदश्च न विशेष्येऽर्थवति बाधित इत्यत आह । तद्घटितेति । ऊड्घटितेत्यर्थः । अस्तिहीति । तथा चैकाज्ग्रहणन्नोडित्यस्य विशेषणमिति भावः । इदं शब्दस्य चैकाज्ग्रहणं विशेषणम्भवत्येव । आभ्यामित्यत्र सम्भवस्येमकाभ्यामित्यत्र व्यभिचारस्य च सम्भवात् । एवञ्चोपात्तस्येदमित्यस्य तद्विशेषणम् । पदादयश्च पद्दन्न इति सूत्रनिर्दिष्टा बोध्यास्तेषु निशपर्यन्तानामेवैकाच्त्वस्य सम्भव इति तद्विषये आह । एतम्पदाद्यं शीऽप्रीति । प्रकृतेरिति । अर्थवत इत्यर्थः । अत एव । उपात्तविशेषणत्वादेव । इदमेव ध्वनयितुम् । उपात्तविशेषणत्वमेव ध्वनयितुम् । जूरित्येति । ज्वरधातोः क्विपि ज्वरत्वरिति सूत्रेण वस्योपधायाश्च स्थाने ऊडादेशः । तन्नोदाहृतमिति । जूरिति नोदाहृतमित्यर्थः । जूरित्यस्य तदुदाहृतत्वे एकाज्ग्रहणस्य प्रकृतिविशेषणत्वेऽपि चत्यभावशङ्का स्यादिति भावः । तदप्रासेरिति । तृतीयादिर्विभक्तिरित्यस्य तस्मिन् सूत्रे उपादानादिति भावः । एनानिति । द्वितीयाटौस्स्वेन इत्येनादेशः । सर्वानुदात्तत्वमिति । एनादेशोऽनुदात्तः । विभक्तिश्चानुदात्तेति भावः । यत्त्वत्र मूलेऽसर्वनामस्थानविभक्तिरुदात्तेति व्याख्यातन्तन्न युक्तम्प्राग्दिशो विभक्तिरिति सूत्रभाष्यात्तृतीयादिर्विभक्तिरित्यस्य सावेकाच इति सूत्रादनुवृत्तेर्लाभादिति केचित्तन्न युक्तमित्याशयेनाह यद्यपीत्यादि । भाष्यादिति । एवं हि तत्रोक्तम् । विभक्तित्वे किम्प्रयोजनम् । विभक्तित्वे प्रयोजनमित्प्रतिषेधः । इदानीम् । न विभक्तौ तुस्मा इति प्रतिषेधः सिद्धो भवति । यद्येवङ्किमोत् । क्व प्रेप्सन्दीव्यसे । क्वाईमासा इत्यत्रापि प्राप्नोति । तौ चोक्तम् । किमुक्तम् । विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति । इदमो विभक्तिस्वरश्च प्रयोजनम् । २ । इतः । इह । इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येषः स्वरः सिद्धो भवतीति भाष्ये । अत्र कैयटः । इत इति मुख्यमुदाहरणमत्र लित्स्वरे प्राप्ते रूडिदमित्युदात्तत्वम्भवति । इहेत्यत्र तु प्रत्ययस्वरेणान्तोदात्तत्वं सिद्ध्यति । ननु मध्येऽपवादन्यायेनानुदात्तौ सुप्पिता-

ग्रहणङ्करोतीत्येव वक्तव्ये सम्पूर्णसूत्रोपादानमनर्थकमिति वाच्यम् । अभाव ज्ञानस्य भावज्ञानसापेक्षसिद्धिकत्वेन प्रतियोगिप्रसिद्धिसौलभ्याय तथोच्चारणात् । इत्याहुः । भाष्याक्षरस्वारस्य वेत्तारः । यदेतस्य सूत्रस्योदाहरणमकार्णवेष्ट्रिकमित्यादि तत्र कथङ्गुणप्रतिषेधार्थकत्वन्नञ इत्याकाङ्क्षानुत्थानाय गुणपदार्थनिर्वचनमूले गुणो ह्मीत्यादि । प्रवृत्तिनिमित्तमिति । तत्त्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति स्वभिन्नवाच्यानधिकरणत्वम् । प्राथमिकं वाच्यपदमर्थधर्मिकशक्तिग्रहीयमुख्यविशेष्यताश्रयभिन्नपरम् । द्वितीयन्तु तदीयविषयतासामान्याश्रयपरमेव । येन सम्बन्धेन यस्य प्रवृत्तिनिमित्तताऽभिप्रेता तत्सम्बन्धावच्छिन्ना वृत्तिताऽत्र ग्राह्या । जात्याकृतिव्यक्तिचितयस्य जात्याकृतिव्यक्तयः पदार्था इति गौतमसूत्राद्वाच्यत्वेऽपि घटादिशब्दानाञ्जातिरेव प्रवृत्तिनिमित्तन्न त्वाकृतिस्तस्या अवयवसंयोगविशेषरूपायाः प्रवृत्तिनिमित्तत्वे साक्षात्तस्य संयोगस्याऽवयव्यवृत्तितया स्वाश्रयसमवेतत्वस्य प्रवृत्तिनिमित्ततावच्छेदकत्वं वाच्यञ्जातेः प्रवृत्तिनिमित्तत्वे तु समवायसम्बन्धस्तथेति लाघवमिति जातिरेव प्रवृत्तिनिमित्तम् । आकाशशब्दस्य शब्दावच्छिन्ने शक्तिरिति शब्दत्वे प्रवृत्तिनिमित्तताऽऽकाशशब्दस्य स्यादिति तद्वारणाय द्रव्यत्वे घटादिपदप्रवृत्तिनिमित्तता वा माय वा वाच्यत्वे सतीति । कृष्णयव्यक्तिविशेषे घोटकोऽयमिति यत्र प्रयोगस्तत्राकृतिप्रकारकोपस्थितिसत्त्वेऽप्याकृतेः प्रवृत्तिनिमित्तता वारणाय वाच्यवृत्तित्वमिति । तदुपादाने चाकृतेर्न समवायेन वाच्यवृत्तित्वमिति नातिप्रसङ्गः । द्व्यादित्र्यणुकसमवेतत्रसरेणावति व्याप्तिवारणाय स्वभिन्नवाच्यानधिकरणत्वस्य निवेशः । प्रमेयत्वे प्रमेयत्वरूपप्रमेयाधिकरणेऽव्याप्तिवारणाय स्वभिन्नेति । नचैवमपि प्रमेयत्वे स्वभिन्नवाच्यत्वाधिकरणत्वस्य सत्त्वादव्याप्तिरेवेति वाच्यम् । स्वसमनियतभिन्नं यद्वाच्यं तदनधिकरणत्वस्य विवक्षितत्वात् । नञ्स्वरः एवेति । अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः । ययतोश्चातदर्थे । तद्धिता इत्यनुवर्त्तते । वचनविपरिणामेन ययतोरित्यत्र तस्य सम्बन्धः । आकरे । भाष्यातिरिक्ते । भाष्यन्त्वत्रौदासीनमिति भावः । उक्तरीत्या । अवयवद्वारकसम्बन्धेऽपि तद्धितोत्पत्तिरित्युक्तप्रकारेण । अचकाव । गुणप्रतिषेधार्थेति । तयचापच इत्यस्य न पक्तुं शक्त इत्यर्थोऽभिप्रेतो यत्र तत्रोदाहरणम् । पचादन्य

इत्यर्थविवक्षायान्तु प्रत्युदाहरणम् । दीक्षित इतीति । दीक्षा यज्ञदीक्षा । यज्ञारम्भ सङ्कल्पः । सा सञ्जाता यस्य तस्य पाको निषिद्ध इत्यर्थः । प्रकृतसूत्रे त-द्धिता इति न सम्बध्यत इत्याशयेनाह । उत्तरेति । गतिकारकपूर्वत्वेऽपीति । अविलिख इति यथा । इगुपधलक्षणः कः । कृत्मात्रग्रहणसत्त्वात्कृद्ग्रहणपरिभाषाप्रवृत्तिः । स्वयं कृद्ग्रहणपरिभाषाप्रवृत्तेः स्थलान्तरमाह । अप्रपच इती-ति । अत्र । आक्रोशे चेति सूत्रे । इति स्थितमिति । यदि प्रकृतसू-त्रे तयोरनुवृत्तिः स्यात्तदा पूर्वविप्रतिषेधविचारासङ्गतिः स्पष्टैव । नन्वे-वमत्र तयोरननुवृत्तौ संज्ञायामित्युत्तरसूत्रवैयर्थ्यन्तस्याप्याक्रोश एव प्र-वृत्तेरत आह । संज्ञेति । तत्कार्यम् । देवकार्यम् । अत्र । कृत्य इतिसूत्रे । भाष्यसम्वादेन पूर्वत्र गुणप्रतिषेध इत्यस्यासम्बन्धेऽपि मण्डूकप्लुत्यात्र सम्वध्यते. इकारादेरितीति । खिष्णुच्प्रत्ययस्य भूधातोर्विधानात्तस्योपदेश उदात्तत्वाद्व-लादिलक्षणे नेडागमेन सिद्धे खिष्णुजित्यत्रेकारोच्चारणमिष्णुज्ग्रहणेन खिष्णु-च्प्रत्ययस्यापि ग्रहणार्थमिति द्व्यनुबन्धकत्वेऽपि न तदनुबन्धकपरिभाषाप्रवृ-त्तिरिति भावः । चार्वादीन् प्रदर्शयति । चारुसाध्वित्यादिना । विभाषाहन्नञ्। नञ इत्यनुवर्त्तते तदाह। नञः पराणीति । वेति शेषः॥बहुव्रीहौ । अत्र प्रथमपू-रणयोरित्यन्तपदार्थापेक्षयाऽवयवषष्ठी । तृतीयेति योगविभागादिति । हेताव-त्र तृतीया । इदम् । योगविभागेन समास इत्येतत् । समासान्ता इत्यत्र स-मासपदं समासीयोत्तरपदपरमिति वादिमतेऽन्तोदात्तत्वङ्कप एव स्यात्परन्तु तन्मतन्निरासेन समासावयवत्वमेव व्यवस्थापितमिति यत्र कप् तत्रापि कपः पूर्वस्यैवोदात्तत्वम्भवतीत्याशयेनाह । समासान्तास्विति । सङ्ख्यायाः स्तनः । सङ्ख्यावाचकात्परः स्तनशब्दो बहुव्रीहावन्तोदात्तः स्यात् । द्विस्तनेति । पाषा-णमयी प्रतिमाऽत्र विशेष्यः।नेनास्वाङ्गत्वान् ङीष् न।ङीष् तत्र यत्र विशेषमाह। द्विस्तनीत्यादाविति । पक्षे । उत्तरपदस्य स्तनशब्दस्यान्तोदात्तत्वाभावे । अत्र बहुव्रीहाविति । विश्वो मित्रं यस्येतिविग्रह इत्यादिः । इत्येव भवतीति । पू-र्वपदान्तोदात्तत्वमेव भवतीत्यर्थः । परत्वात् । बहुव्रीहौ प्रकृत्येतदपेक्षया प-रत्वात् । अन्तरशब्दस्य सर्वनामत्वेन पूर्वनिपाते प्राप्ते आह । उदाहरणेति । लक्षणलक्षितमिति । तेन स्वमङ्गमिति यौगिकस्य व्यावृत्तिः । नाव्ययदिक्श-

ब्द। मुखंस्वाङ्गमिति सम्पूर्णसूत्रमनुवर्त्तते। अव्ययादिभ्यः परं स्वाङ्गवाचि मुखमन्तोदात्तन्न स्यात्। अनेन सूत्रेणान्तोदात्तत्वनिषेधे सति यः स्वरः प्रवर्त्तते तमाह। उच्चैरादीनीति। भाष्यस्वरस इति। तत्र लुङ्मुखस्वरोपचारा इत्यनेन मुखस्वरनिवृत्तेरव्ययीभावस्याव्ययत्वे प्रयोजनकथनात्। सिद्धमेव। समासस्येति सिद्धमेव। पुत्रशब्दोऽन्तोदात्त इति। फिट्स्वरेणेति शेषः। एवञ्च पूर्वपदप्रकृतिस्वरेण मध्योदात्तमेतत्। एवमुत्तरेषु यथा यथमूहनीयम्। वा जाते। अवयविनो जातशब्दस्यान्तपदार्थनिरूपिताधारत्वविवक्षया वृत्ते शाखेतिवत्सप्तमी। सुखादिस्वरूपं शृङ्गग्राहिकान्यायेनेह दर्शयति। सुखदुःखेत्यादिना। उदाहर्त्तुमुचितमिति। प्रकृतसूत्रविषयतासत्त्वादिति शेषः। एवञ्च मासपक्व इत्याद्युदाहरणम्। नञ् सुभ्याम्। उत्तरपदग्रहणमत्र सम्बध्यते एवञ्च तस्यैव कार्यित्वे प्राप्ते आह। समासान्तानामिति। कपि पूर्वमित्यस्माज् ज्ञापकादिति। यदि नञ्सुभ्यामिति पञ्चमीनिर्द्देशादुत्तरपदमेवेह कार्यि स्यात्तदा यत्र कप् तत्रापि कपः पूर्वस्योत्तरपदान्तस्य कार्यं सिद्धमेवेति तस्य सूत्रस्य वैयर्थ्यं स्पष्टमेव। एवञ्चेहोत्तरपदान्तस्य समासस्येत्यर्थस्तावतापि प्रकृतसूत्रेणाव्रीहिरित्यादावन्त्यस्येकारादेरुदात्तत्वं सिद्धम्। यत्र च समासान्तो ऋक्पूरित्यनेन विहितस्तत्रानृच इत्यादावकाप्रत्ययस्योदात्तत्वमिति भावः। कपि पूर्वम्। पूर्वसूत्रेणोत्तरपदान्तस्य समासस्य कार्यविधानात्समासान्तानां समुदायावयवत्वेनोत्तरपदान्तसमासपदेन कबन्तस्य ग्रहणात्कप एवोदात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वमिष्यत इत्यस्यारम्भः। एवञ्चाब्रह्मबन्धूक इत्यादौ कपः पूर्वस्योकारादेरुदात्तत्वम्भवतीति भावः। तदन्तस्य समासस्येति। अत्र समासस्येति षष्ठी कपि पूर्वमिति पूर्वापेक्षयाऽवयवत्वार्था तथा च पूर्वसूत्राद्विशेष इति बोध्यम्। ह्रस्वान्ते। उत्तरपदग्रहणं प्रकृतसूत्रे आवर्त्तते। तयोरेकमुत्तरपदावयवके लाक्षणिकन्तदेकदेशस्योत्तरपदस्य ह्रस्वान्त इति विशेषणमित्याशयेनाह। ह्रस्वान्तोत्तरपदकसमास इति। उत्तरपदस्येति षष्ठीप्रकृतसूत्रेऽन्त्यापेक्षया। एवञ्चाव्रीहीकः सुमाषक इत्यादौ व्रीहिशब्दावयवो यो रेफादुत्तर ईकारादिः स एवोदात्तो भवति। मूले प्रवृत्तिभेदेनेति। ह्रस्वान्तेऽन्त्यादित्येकं वाक्यम् पूर्वमित्यनुवर्त्तते। ह्रस्वः अन्तो यस्येति बहुव्रीहाव-

न्यपदार्थे उत्तरपदं समासो वेत्याशयेन पूर्वत्र उत्तरपदे समासे वेति व्याख्यातम्। पूर्वमिति द्वितीयं वाक्यम्। तच्च नियमार्थम्। कपि परे यदुत्तरपदन्तद्घटितसमासेऽन्त्यादेव पूर्वमिति तेन यत् फलितन्तदाह न कपि पूर्वमिति। पुनस्तद् ग्रहणम्। पूर्वग्रहणम्। यदुक्तम्मूलेऽन्नकइत्यत्र कबन्तस्य वेति। तदुपपादयति। अन्त्यात्पूर्वं इति। एतदभावे। ऋस्वान्त इति सूत्राभावे। अनेन नियमेन। ऋस्वान्ते उत्तरपदे कपि पूर्वस्योदात्तत्वन्नेति नियमेन। कप एवोदात्तत्वमिति। कपि पूर्वमिति सूत्रस्य नियमेन व्यावृत्तौ प्राथमिकप्राप्तिकं यन्नञ्सुभ्यामिति तस्य प्रवृत्तौ कप एवोदात्तत्वमित्यर्थः। बहोर्नञ्वत्। बहुः सुवदिति। बहुशब्दः सुव्यपदेशं लभत इत्यर्थः। तथा च बहुशब्दस्य सुग्रहणे न ग्रहणे नञ्सुभ्यामितिसिद्धमेव पुनर्नञ्वदिति सूत्रान्तरप्रवृत्त्यर्थमित्याशयेनोदाहरणान्तरोपादानमिति भावः।बहुमित्र इत्यस्य बहूनि मित्राणि यस्येत्यर्थः। अत्रोत्तरपदस्य मित्रशब्दस्याद्युदात्तत्वम्भवति। पूर्वपदप्रकृतिस्वरः। सप्तम्यन्तस्य पूर्वपदस्य बहुशब्दस्य प्रकृतिस्वरः। न गुणादयो। बहोरिति वर्त्तते। अवयवा इतिश्रुतत्वाद्गुणादीनामिव विशेषणम्। न्यूनतामपाकर्तुमाह। नञ्सुभ्यामिति। एतत्। नान्तोदात्ता इति वाक्यम्। तेन। उपलक्षणत्वेन। इतीति। चेत्यस्यै तच्छेषत्वेनोभयोरप्यप्रवृत्तिरिति फलितमिति भावः। उपसर्गात् स्वाङ्गम्। उपसर्गग्रहणम्प्रादीनामुपलक्षणम्। नेति नानुवर्त्तते। अस्वरितत्वात्। तत्पुरुष इति। प्रपृष्ठ इत्यादौ तत्पुरुष इत्यर्थः। आयुधवाचिनः पर्शुशब्दस्य स्वाङ्गवाचकत्वाभावादाह। पर्शुः पार्श्वमिति। वनं समासे। समास इति पदं समाससामान्यग्रहणार्थम्। उक्तार्थकमुपसर्गग्रहणमनुवर्त्तते। स्वरः प्राप्त इति। स बाध्यत इति शेषः। इतिप्राप्तमिति। इतिसूत्रप्राप्तमित्यर्थः। तेन पर्यादीनामप्राप्तस्य प्रकृतिभावस्य प्रतिषेधः। अन्तः। लुप्तपञ्चम्यन्तमेतत्। अन्तश्च। उपसर्गग्रहणमण्डूकप्लुत्यानुवर्त्तते। अकारान्तान्तशब्दप्रकृतिकप्रथमान्तमेतत्। न निविभ्याम्। प्रथमान्तमन्त इत्यनुवर्त्तते। परेरभितो भावि। बहुव्रीहिरित्यादि। तेष्वयं विशेषः बहुव्रीहितत्पुरुषयोः पूर्वपदप्रकृतिस्वरयोः प्राप्तिरव्ययीभावे तु परिप्रत्युपापेति कूलतीरेत्यस्य वा प्राप्तिः। बहुव्रीहौ परितः कूलमस्येति परिगतङ् कूलादित्यर्थकाव्ययी भा

ने त्वर्थः । प्रादस्वाङ्गम् । अस्वाङ्गवाचकत्वं ग्रहादीनामपीत्याशयेनाह । प्रग्र-हादय इति । प्रपदमिति प्रत्युदाहरणे पूर्वप्रकृतिस्वरः । प्रपदशब्दः पादाग्रवा-ची । निरुदकादीनि च । निर्गतमुदकं यस्मादिति बहुव्रीहिः । निर्गतञ्च तदु-कमिति तत्पुरुषो वा । अर्थाभावेऽव्ययीभावो वा यद्यप्यत्र सम्भाव्यते तथा-पि तत्रै तत्सूत्रप्रवृत्तिं विनापि समासन्तोदात्तत्वेनैव सिद्धम् । अभेर्मुखम् । मु-खं स्वाङ्गमिति तु न भवति । नाव्ययेति निषेधात् । अस्य सूत्रस्याधुवार्थत्व-प्रदर्शनाय सूलेऽभिमुखा शालेति । अव्ययीभावेऽपीति । मुखं वर्जयित्वेत्य-र्थकाव्ययी भावेऽपीत्यर्थः । स्फिगपूत । हरदत्तप्रामाण्यादिति । एतेन कोशा-दिसाधका भावो ध्वनितः । व्याख्यानात् । शिष्टकृतादिति शेषः । एवञ्च नात्र-ज्ञापकापेक्षेति भावः । अपपाठ इति । वीणाया अस्वाङ्गत्वात्सिद्धेरिति शेषः । अनोरप्र । सूले प्रादिसमास इति कथमयुत्तरपदार्थस्याप्राधान्यसूचनाय । पुरु-षश्च । अप्रधानशिष्ट इति । अप्राधान्येन कथित इत्यर्थः । यथा सत्वं राजा-नं पूजयेत्यत्र भृत्यानामन्वादिष्टत्वम् । अनुशब्दोपादानस्यास्य सिद्धयद्वेतिप-क्षे तु यदा देवदत्तानयने प्रवृत्तस्य पुरुषस्य इतिपश्चाद्यज्ञदत्तञ्चानयेति कथ्यते स-ति यज्ञदत्तस्यान्वादिष्टत्वम् । अतेर । अयञ्चार्थः । पदशब्दस्य कार्यित्वप्रापकश-ब्देन कथितोऽर्थः । भाष्यान्त्विति । अतेर्धातुलोप इति वक्तव्यम् । अन्यत्वद इ-ति ह्युच्यमाने इह च प्रसज्येत । शोभनो गार्ग्योऽतिगार्ग्य इति । इह च न स्यात् । अतिकारक । अतिपदः शङ्करी इति भाष्यान्त्वित्यर्थः । अस्याङ्गाष्याद्य-था सुतन्यासेऽतिपदेत्यत्राव्याप्तिः प्रतीयते सा भवदुक्तार्थे न स्यादिति पदश-ब्दस्य वर्ज्यमानत्वप्रापकं व्याख्यानमेव यथा सुतन्यासस्योचितमिति भावः । अतिकारक इत्यस्य कावकमतिक्रान्त इत्यर्थ इति धातोरप्रयोग एव धातुलोपः । वृत्तिविषयेतिशब्दः क्रान्तार्थवृत्तिरिति धातोर्लोपः स्पष्टः । नेरनिधाने । अनि-धानेऽर्थे गम्ये इत्यर्थः । निर्गतम्मूलमस्येत्यर्थे मूलस्य भूतलान्निर्गतस्य प्रकाश-ता प्रतीयत इति भवत्युदाहरणम् । प्रत्युदाहरणात्तु दण्डो निहित इत्यर्थे प्र-तीते प्रकाशतया न प्रतीतिः किन्तु स्थापनमात्रमिति नायं स्वर इत्याह । निशब्द इति । निशब्दस्य निधानार्थकत्वे साधकमाह । प्रादयो हीति । अत्र समासान्तविधेरनित्यत्वे । उपाद्द्व्यज । गौरादिभिन्नन्द्वाजिति वाक्यार्थः । उप-

गतो गौर उपगौर इत्यत्र योऽव्ययपूर्वपदप्रकृतिस्वरस्स च न तत्पुरुष एव किन्तु समासान्तरेऽपीत्याह। बहुव्रीहेति। सोरवक्षेपणे। अवक्षेपणान्निन्दा। सुप्रत्यवसित इत्यत्र थाथादिस्वरेणैव सिद्धमिति शङ्कां वारयति। एवञ्चेति। ननु सुशब्दो यदि पूजायामस्ति तदा कथमवक्षेपणप्रतीतिरत आह। अनर्थ-इति। ननु सोरित्यस्याभावे कुब्राह्मण इत्यत्र यदि प्रकृतसूत्रेणान्तोदात्तत्वन्तदा तत्पुरुषे तुल्यार्थेति सूत्रघटकाव्ययपदेन नञ्कुनिपातानामेव ग्रहणार्थं यत्परिगणनन्तत्र कुग्रहणवैयर्थ्यापत्तिरत आह। नञ् कुनिपातेति। ईषदर्थ इति। ईषदर्थककुशब्देन यत्र समासस्तत्रावक्षेपणाविवक्षायामित्यर्थः। विभाषोत्पुच्छे। सप्तमीस्वरस्यादाह। तत्पुरुषरूप इत्यादि। उत्पुच्छशब्दस्तत्पुरुषसंज्ञक इत्याशयेन यदात्वितिसूत्रेऽभिहितम्। तत्र उदिति पृथक्पदमित्याशयेनाह। के चित्त्विति। लाक्षणिकत्वादिति। णिङन्तप्रकृतिकाजन्तस्य विलम्बितप्रतीतिकत्वादित्यर्थः। न तत्पुरुष इति। पुच्छमुदस्यतीत्यर्थे पुच्छभाण्डेति णिङि चिकीर्षिते यद्यप्युपसर्गसमानाकारस्योच्छब्दस्य पृथक् कृतिस्तथाप्युच्छब्दस्य पुच्छशब्देन सामर्थ्यसम्बन्धेनेतिन्यायान्न तु तत्प्रकृतिकाजन्तेन तस्य सम्बन्ध इति उदित्यस्यनाजन्तेन समासस्य प्रवृत्तिरित्याशयः। तदवयवक इति। अजन्तावयवकः तद्घटकः। अजन्तसमुदायघटकोऽकारान्तः पुच्छशब्द इत्यर्थः। अत एव। अकृतसमासान्तनिर्देशादेव। ददादेश इति। कृते सतीति शेषः। प्रवृत्त्यर्थमिति। अस्य सूत्रस्येत्यादिः। अत्र। पदन्नित्यादेशे। अत एव। बहुव्रीहिग्रहणादेव। एवञ्च। उक्तरीत्या समासान्तभिन्नस्य वारणे च। व्याख्यानादिति। अक्तान्तादित्युपादानमूलकव्याख्यानादित्यर्थः। यदि नञिति सूत्रविहिताजन्तस्य ग्रहणं स्यात्तदा चक्रनकृत इत्यादौ प्राप्तिरेवास्य न स्यादित्यक्तान्तादिति व्यर्थं स्यादिति भावः। एतस्य प्रवृत्त्यभावपक्षे पूर्वपदप्रकृतिस्वरे सति यः स्वरो भवति तमाह। शुक्लगौरयोरिति। तत्र हि वा नामधेयस्येत्यतो वा ग्रहणानुवृत्त्याऽऽद्युदात्तत्वाभावेऽन्तोदात्तत्वम्। इदम्। वेदभाष्योयव्याख्यानानुरोधेन मूलोक्तमुदाहरणमित्यस्योपादानम्। अस्योदाहरणम्। परादिरित्यस्योदाहरणम्। अत्र ऋतशब्दस्यादिरुदात्तः। अत्र प्राप्त-इति। तस्मिन् सति ऋकाराकारयोरुदात्तत्वं स्यात्। वा ग्रहणेऽनुवर्त्तमान इ-

ति। वासमानार्थके विभाषाग्रहणेऽनुवर्त्तमान इत्यर्थः। विभक्तीत्यत्र भोक्ती-स्वस्या प्रवृत्तौ त्वभ्यस्तानामदिरिति भवतीति बोध्यम्।

## इति समासस्वरविवरणम्।

तिङो गोत्रादीनि। गम्यमानयोरिति शेषः। गोत्रमित्यस्य। व्याख्यास्तकुत्सति। सुखाकरोतीति। एवं हि कर्त्तुः स्तुतिर्भवति न तु कुत्सेति न कुत्सनग्रहणेनान्यथा सिद्धिरिति भावः। पाटविशेषणमिति व्याचष्टे। योगविभाग इति। गोत्रादीनि दर्शयति। गोत्रेत्यादिना। कुत्सितं गोत्रमिति। अत्र गोत्रशब्दो गुधृवीपचिवचियमि सदिक्षदिभ्यस्त्र इति त्रप्रत्ययान्तत्वादन्तोदात्तः। सर्वानुदात्तमिति। सर्वेऽनुदात्ता यस्मिन्नित्यर्थकमेतत्। नन्वतिङः परस्य सर्वस्यादेरित्यर्थ आदेः परस्येत्येकत्राश्रयतया स्यादिति कथं सर्वानुदात्ततापदस्येत्याशङ्कायामाह। यथात्रेति। निरूपितमिति। तत्र हि विनिगमनाविरहात्सर्वानुदात्तत्वस्य लाभेऽपि सर्वग्रहणं स्पष्टार्थम्। अलोन्त्यस्यादेः परस्येत्यनयोस्तत्र न प्राप्तिः। अनुदात्तन्तिङीति श्रुतप्रथमान्तानुरोधेन पदस्येत्यस्य विभक्तिविपरिणामेन प्रथमान्तत्वकल्पनया स्थानषष्ठ्याभावादिति निरूपितमित्यर्थः। विशेषमाह। उदात्तस्वरितेति। भाष्यस्वरस इति। तत्रैकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्य इति हि वार्त्तिकम्। उदात्तानुदात्तयोर्य आदेशस्स आन्तरतम्यात् स्वरितो भवति तस्य स्थाने एकादेश उदात्तेनेत्यनेनोदात्तः क्रियते इति मते यद्यपि ब्राह्मणास्तुदन्ति ब्राह्मणा लिखेतीति प्रयोगे शस्यान्तिशब्दावयवाकारस्य च य एकादेशस्तस्यान्तरतम्यात् स्वरितस्य तिङ्ङतिङ इति निघातविधानादुदात्तस्याप्रयोगः सिद्धस्तयापि स्वरितापवाद उदात्त एकादेश उदात्तेनेति सूत्रेण विधीयत इति दर्शने जातस्याप्युदात्तस्यासिद्धत्वात्तिङ्ङतिङ इति निघातो न स्यादिति प्रयोगे उदात्त एव श्रूयेतेत्यभिप्रायेणोक्तवार्त्तिकस्य किं प्रयोजनमिति प्रश्ने सर्वानुदात्तार्थमिति प्रयोजनमुक्तन्तेन भाष्यग्रन्थेनोदात्तस्वरितगुणयोगि तिङन्तन्निहन्यत इति पक्षो लभ्यते। पाको भवतीति। पचिक्रिया भवतीत्यर्थो भवतीति तिङन्तार्थभवनक्रियाविशेष्यको बोधः। तत्र भवनक्रियाम्प्रति पचिक्रियायाः कर्तृत्वात्कार-

न्वितक्रियाबोधकान्तिङन्तचयो वाक्यमिति लक्षणेनास्य कथाकथंत्वाभिघातः स्यादित्यभिप्रायः। वार्त्तिकानुसारेणाह। वस्तुत इति। तदुक्तम्भाष्ये। अतिङ्वचनमनर्थकम्। समानवाक्याधिकारादिति। अनन्वयापत्तेरिति। पदार्थैकदेशत्वे नानन्वयापत्तेरित्यर्थः। यदादय इति। सूत्रपठिता इति शेषः। पृथग्ग्रहणादिति। यदि सर्वनाम्नो यच्छब्दस्य ग्रहणं स्यात्तदा यत्र ग्रहणं न कार्यन्तस्य यत्र प्रयोगस्तत्र यच्छब्दयोगादेव निषेधस्य सिद्धत्वादिति भावः। निपातानां यदादीनामर्थानाह। यद्यदार्थे चेति। एतेन। छान्दसत्वेन। अत्र समाध्यन्तरमाह। हन्तो इत्यादि। नेच्छब्दयोगे प्रतिषेधोदाहरणमाह। नेदेवमिति। नेच्चेच्छब्दयोरखण्डनिपातत्वं वारयति। अत्रेति। यत् कूजतीति। अत्र कूजतीति सर्वानुदात्तम्। परम्परासम्बन्धश्च स्वान्वय्यन्वयित्वरूपो बोध्यः। साक्षात्सम्बन्ध इति। तदन्वयित्वञ्च दधस इत्यस्येति पूर्वोक्तपरम्परासम्बन्ध इहास्तीति भावः। प्रतिषेधयुक्तत्वमुपपादयति। पूर्वमिति। लुप्तद्वतीयाकमिति। सूत्र इति शेषो बोध्यः। आद्युदात्तमिति। कुविति प्रत्ययस्वरेणान्तोदात्तमिति शेषः। अमर्षे इति। प्रत्युदाहरणेऽपि सम्बोधनविभक्त्यन्तमेवाङ्गशब्दो यद्यपि प्रयुज्यते तथाप्यमर्षे सति प्रयुज्यते एवञ्च प्रयोक्तृसमवेतक्रोधस्य व्यञ्जक इति प्रातिलोम्यमेव। आद्युदात्तमिति। धातुस्वरेणेति शेषः। छन्दस्यनेकमपि। हि चेत्यनुवर्त्तते। उदाहरणे यत इत्यस्य यद्यपि साक्षात्सम्बन्धो मत्तपदार्थे तथापि परम्परयाद्वयोरपि तिङन्तयोः साकाङ्क्षत्वमस्त्येव। अग्निर्हीति। अत्र हि शब्दसाकाङ्क्षत्वमजयदित्यनयोस्तयोरनेन निघातनिषेधः प्राप्तस्तथापि विशेष इत्याह। अनेकमिति। यावद्यथा। इत्युक्तमिति। निपातैर्यद्यदीति सूत्रव्याख्यानावसर इति शेषः। सोऽयम्यथा शब्दार्थमाह। यथेति। यावद्यथाभ्यामित्यस्य पञ्चम्यन्तत्वभ्रमं वारणायाह। भ्यामितीति। तेन यस्मिन्वाक्ये यावद्यथाशब्दयोः परत्वन्तत्रापि निषेधसिद्धिः। देवदत्तः पचति यावदिति यथा। पूजायान्नानन्तरम्। अत्रानन्तरमिति तिङित्यस्य विशेषणम्। नेत्यपि प्रकरणप्राप्तमनुवर्त्तते। एवञ्चाभावाभावस्य प्रतियोगिरूपत्वात्प्रतिप्रसवोऽयमिति फलितमिति बोध्यम्। अनिघातनिषेधस्य। पूर्वसूत्रविहितनिषेधनिषेधस्य। एवञ्च गति यथाक्रान्तन्तदेवानुवर्त्तत इति सिद्धम्। प्रथम्योमकरणमि-

ति । तु पश्येति पूर्वसूत्र एवाहोशब्दपाठे कर्त्तव्ये पृथग्योगकरणमित्यर्थः । विशेषार्थं व्याचष्टे । पूर्वमिति । अहो इति त्वनुवर्त्तत एव । पुरा च परीप्सायाम् । पुराशब्दस्य तृतीयान्तत्वभ्रमं निरस्यति । पुराशब्दोऽत्रेति । यद्यपि सूत्रान्तराहचर्येण व्यवस्थापकमिति सिद्धान्तस्तथापि निपातप्रकमान्निपातस्यैवोपस्थितिकत्वादित्यर्थः । लुप्ततृतीयेति । सुपां सुलुगिति लुप्ततृतीयान्तमित्यर्थः । उभयोरत्रीति । संशयविषयाऽर्थो हि प्रश्नस्य विषयः संशयविषयता च परस्परं भिन्नयोरेकद्वयोर्वा भावाभावयोः । एतच्चाहोस्विदित्येतदुपादानादुभयोः संशयविषयत्वेनोभयोः क्रियायुक्तत्वमिति भावः । कोचिदिति । शब्दद्वयस्य वेतरः । आहोस्विच्छब्दः संशयविषयताद्योतकः । किंशब्दस्तयोः प्रश्ने । हरदत्तस्त्विति । यथा किंशब्दः क्रियायां संशयताप्रतिपादकस्तथा आहोस्विच्छब्दोऽपि स्यात्तत्त्वेन प्रश्नविषयताद्योतक इति तस्याशयः । किंशब्दस्य प्रश्नार्थकत्वेन तल्लाभे सिद्धे प्रश्नग्रहणमनर्थकमित्याशयेनाह प्रश्ने किमिति । किम्पठतीति । अत्र किंशब्दः क्षेपे । सूलोक्तमप्यत्युदाहरणमयुक्तमित्याह । किमधीत इतीति । इदन्तु युक्तमिति । द्विजसामान्यस्यापठनन्न प्रतिषिद्धम् ब्रह्मचिन्तननिरतस्यापठनं हि युक्तमेवेति । सूलोक्तमेवेति । अत्रैव शब्दोपादानेन यत्र प्रतिषेधप्रतियोगित्वमुदाहरणत्वेनाभिप्रेतवाक्यात्प्रतीयते तत्र प्रकृतसूत्राप्रवृत्तिबोधकमप्रतिषिद्धग्रहणमिति ध्वन्यते । लोपे विभाषा । क्रियेत्याद्यनुवर्त्तते । तच्च षष्ठ्या विपरिणम्यते । अप्राप्तविभाषेयमिति । यत्र प्रयुज्यमानेन तादृशेन क्रियायोगस्तत्रैव पूर्वसूत्रस्य प्रवृत्तिरिति भावः । केचित्त्विति । योगः संश्लेषः स च द्रव्यस्यैव न शब्दस्य सम्भवत्यतः साक्षात्परम्परया वा तदर्थविषयतानिरूपितविषयताश्रयार्थकत्वरूप एव ग्राह्यः । स चाप्रयोगेऽपि सम्भवतीति भावः । एहि मन्ये प्रहासे । ननु सूत्रे मन्य इत्युत्तमान्तनिर्देशादत्र प्रहासे च मन्योपपद इतिसूत्रेण पुरुषव्यत्ययस्तत्रैवास्य सूत्रस्य प्रवृत्तिर्न तु तदभाव इति प्रहास इत्यस्याभावे एहि मन्यसे इत्यत्र कथमापत्तिरत आह । सूत्र एहीत्यादि । इत्यये इतीति । अत्र यद्यपि मन्यधातोरुत्तमोऽस्ति तथापि न प्रहासे चेति सूत्रविहितः किन्तु अस्मद्युत्तम इति सूत्रविहित एव । प्रहासे चेति सूत्रन्तु सामानाधिकरण्ये यत्र द्वयोस्तत्र प्रवर्त्त-

त इति भावः। एवं हि भाष्ये उक्तम्। किमर्थमिदमुच्यते। न गत्यर्थलोटा लृ-डित्येव सिद्धम्। नियमार्थोऽयमारम्भः। एहि मन्ये प्रहास एव। क्व मा भूत्। एहि मन्ये रथेन यास्यसीति। अस्मिन् भाष्योक्तवाक्ये यास्यसीत्यस्य निघातो भवत्येव। प्रत्युदाहरणे गत्यर्थलोटेत्यस्य प्राप्तिमुपपादयति। एहीत्यस्येत्यादि। आङ्पूर्वादिणो लोट्। सिप्। तस्य हिः। जात्वपूर्वम्। उभयत्र। विशेष्यविशेषणयोः। अनन्तरग्रहणादिति। तिङन्तस्यापूर्वमिति विशेषणञ्चेत्तदाऽऽहो देवदत्त पचतीत्यादौ पचतीत्यादेः सपूर्वत्वादेवानिघातो न भविष्यतीति तस्मिन् सूत्रेऽनन्तरग्रहणन्नोपाददीत कृतञ्च तन्निमित्तविशेषणमित्यर्थं ज्ञापयति। पूर्ववत्। व्यत्ययेन। व्याख्यानमेवेति। आकरसम्मतं व्याख्यानमेव। आहो उताहो। अत्रानन्तरग्रहणं शेषे विभाषेत्युत्तरसूत्रे शेषपदार्थस्य स्पष्टप्रतिपत्त्यर्थमित्याह। सान्तरं हीत्यादिना। आहो उताहोशब्दस्य सूत्रमेतदर्थनिर्दिष्टस्य लुप्तपञ्चम्यन्ततया निर्दिष्टपरिभाषयैवानन्तर्यलाभेऽनन्तरग्रहणमेवेति भावः। युक्तमनन्तरग्रहणस्य प्रयोजनमन्यथा सिद्धमित्याह। नन्वपूर्वमिति। न तिङन्तविशेषणमिति। किन्तु निमित्तविशेषणमिति शेषः। एवञ्चाहो देवदत्तः पचतीत्यत्र निमित्तस्यापूर्वत्वान्निघातनिषेधः स्यादिति कर्त्तव्यमनन्तरग्रहणमिति भावः। निमित्तविशेषणस्य प्रयोजनन्तु मूल एव स्पष्टम्। गत्यर्थलोटा। स्पष्टञ्चेदम्भाष्ये इति। तत्र हि कर्त्रपेक्षया यदन्यत्कारकन्तस्यान्यत्वे आगच्छ देवदत्त ग्राममोदनम्भोक्ष्यसे इत्यादौ निघातनिषेधाप्राप्तिशङ्कायामेकदेशिना व्यक्तमेव पठितव्यं चेत्कर्तृ सर्वान्यो भवतीति समाधाने कृते उह्यन्तान्देवदत्तेन शालयः यज्ञदत्तेन भोक्ष्यन्त इत्यत्र कर्मण एकत्वेऽपि कर्तुर्भेदान्निषेधस्याप्राप्तिः स्यादिति परेण दूषणे कथिते सिद्धन्तु तिङैकद्रव्याभिधानात्। सिद्धमेतत्। कथम्। तिङैकद्रव्याभिधानात्। यत्र तिङ्भ्यामेकन्द्रव्यमभिधीयते तत्रेति वक्तव्यमिति सिद्धान्तिनाभिहितम्। लोट् च। अत्रानुवर्तमानं यत्र चेत्यादि तद्घटितवाक्यार्थमाह। गत्यर्थेति। विभाषितं सो। अत्रानुत्तममिति सोपसर्गमिति च लोटो विशेषणम्। निषेधस्य विकल्पे विधिविकल्पः फलतीत्याशयेनाह मूले वानुदात्तमिति। अनेन कृतस्य विकल्पस्य फलमाह। पच इति। पचे। एतच्छास्त्रप्रवृत्तिपक्षे। पचे। एतदप्रवृत्त्य:

भावपक्षे। अस्यापीति। अपिना पूर्वशास्त्रसङ्ग्रहः। आम एकास्वर। अत एव। अनन्तिकशब्दस्योभयार्थकत्वादेव। दूरत्वे एवोभयोर्विधानादिति भावः। उभयार्थकत्वे मानन्त्वनन्तिक इत्युपादानमेव। अन्यथा दूरग्रहणमेव कुर्यात्। सूत्रत्रटकसप्तम्यन्तस्य यत्प्रयुज्यते तत्रेति शेषः। पक्षान्तरमिति। तत्र त्वनन्तिक इत्युच्यतेऽनन्तिकञ्च किम्। दूरमित्युक्तम्। तत्र तस्मिन् पक्षे। सामर्थ्यादिति। दूराद्यत्प्रयुज्यते तत्र यत्प्राप्नोति तस्य प्रतिषेधोऽनेन क्रियते तच्च चैकश्रुत्यमेव प्राप्नोति न तु निघातः। एकश्रुतेर्निघातबाधकत्वात्। अत एव। अस्य सूत्रस्यैकश्रुतिबाधकत्वादेव। ननु कथमसिद्धत्वम्प्राप्नोति। एकश्रुतिविधायकस्य प्रथमाध्याये पाठादिति चेन्न। देवब्रह्मणोरनुदात्त इत्यनेन स्वरितस्योदात्तादनुदात्तस्येति सूत्रविहितस्य स्थानेऽनुदात्तत्वविधानेन तस्यादित उदात्तमिति सूत्रादिनवसूत्र्या उदात्तादनुदात्तस्य स्वरित इति सूत्रात्परत्र स्थितेः सत्त्वस्य ज्ञापनादेकश्रुतेरसिद्धत्वप्राप्तेः। नन्वस्य सूत्रस्य निघातबाधकत्वव्यवहारस्य कथमुपपत्तिरत आह। प्रकरणाच्चेति। ननु दूरे प्लुतोदात्तत्वस्यापि विधानेन तस्याप्ययम्प्रतिषेध इति स्यादत आह। प्लुतोदात्तत्वञ्चेति। इति वार्त्तिकादिति। एका श्रुतिर्यस्य तदेकश्रुति तस्य भाव ऐकश्रुत्यन्तस्येत्यर्थः। अस्यैकश्रुतिनिषेधबाधकत्वे मूलसम्मतिरपीत्याह। मूलेऽपीति। प्रत्याख्यानादिति। एवं हि भाष्यकृतोक्तम्। अनन्तिक इत्युच्यते अन्यच्च दूरमन्यदनन्तिकमिति। अयम्भावः। दूरे इत्येव वक्तव्येऽनन्तिकशब्दोपादानसामर्थ्याद्दूराभिन्नार्थोऽनन्तिकशब्दस्याश्रीयते। अनन्तिकमन्तिकसदृशं यन्न दूरन्न चान्तिकन्तदित्यर्थः। आद्यः पक्ष इति। अनन्तिकशब्देनासन्निहितमदूरञ्चोच्यते इति पक्ष इत्यर्थः। ज्यायानिति। लाघवाद्दूरशब्द एवोच्चारणीये तदनुच्चारणादिति शेषः। प्लुतोऽपि नेति। प्राप्तेरेवाभावादिति भावः। यद्धि तु परम्। यद्धि तु एते शब्दाः परे यस्मादिति बहुव्रीहिः। भाष्ये उक्तत्वे नेति। तत्र हि प्रकृतसूत्रस्थपरग्रहणसहितस्य यद्धि तु परस्य छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थ इति प्रतिपाद्य जाये स्वा रोहावेहीत्यत्र लोट् चेत्यनेन गत्यर्थलोडन्तेनेहीत्यनेन युक्तस्य रोहावेत्यस्य निघातप्रतिषेधः प्राप्तः स नेति प्रयोजनमुक्त्वा अथेदानीं रोहावेत्यनेन युक्तस्यैहीत्यस्य कस्मान्न भवति लोड् चेति। अ-

त्यर्थक्रोटा युक्ता इति प्राप्नोति इत्येवमाशङ्का गत्यर्थाकर्मकेति सूत्रे पृथग्रु-
हिरुपादानं रुहिर्गत्यर्थ इत्यादावुक्तम् । ततो यदि न रुहिर्गत्यर्थस्तर्हि आरो-
हन्ति हस्तिनं हस्तिपकाः । आरोहयति हस्ती स्थलमनुष्यानित्यत्र गतिबु-
द्धीत्यनेन कर्मसंज्ञा न प्राप्नोति गत्यर्थत्वाभावादिति रुहेर्गत्यर्थत्वमावश्यकम् ।
लोड् चेत्यनेन ङ् पूर्वेणिण्धातुना निष्पन्नस्यैहीत्यस्य निवातप्रतिषेधस्तु नै । छा
न्दसत्वादिति प्रतिपादितम् । इत्याहुरिति । अत्रारुचिवीजन्तु यदि विभाषित-
मिति सूत्रेणैव तदभावस्तर्हि भाष्ये छान्दसत्वाभिधानमसङ्गतमिति विक-
ल्पाभिधानमसङ्गतमिति । गत्यर्थाकर्मकेति सूत्रे रुहिग्रहणन्तु प्रपञ्चार्थमेवेति
बोध्यम् । चनचिदिव । अनिहत एवेति प्रकृतसूत्रेण निषेधादिति शेषः । स-
ष्टस्याप्य इति । तत्र हि गतिग्रहणे उपसर्गग्रहणङ्कर्त्तव्यम् । इह मा भूत् । शु-
क्लीकरोतिचन । कृष्णीकरोतिचनेत्युक्तम् । अत्रैवेत्यमभिधानमिति न ।
किन्तु सर्वत्रैवाष्टमिके । तदप्युक्तभाष्ये अपर आह सर्वत्रैवाष्टमिके गतिग्रह-
णे उपसर्गग्रहणन्द्रष्टव्यम् । गतिर्गतौ । तिङि चोदात्तवति वर्जमिति । इह मा
भूदित्यस्यागतेरिति प्रतिषेधो मा भूदित्यर्थः । सर्वत्रेत्यनेन चादिषु च । चवा
योगे प्रथममिति सूत्रयोः सङ्ग्रहः । तयोरपि गतिग्रहणानुवर्त्तनात् । तिङो गो-
त्रादीनीति सूत्रे कुत्सनाभीक्ष्ण्ययोरिति पाठविशेषणमिति यदुक्तन्तत्स्मा-
रयति । कुत्सनेति । चादिषु च । अत्र चादिपदेन गणे पठितानाञ्चादीनाङ्ग्र-
हणमिति शङ्कां वारयति । न च वाहेतीति । सन्निकृष्टत्वात् । अनुदात्तमि-
त्यधिकारमध्यपाठे न शीघ्रोपस्थिति कत्वात् । प्रकृतसूत्रेण देवः पचतीत्या-
दौ प्रथमस्य पचतीत्यस्यैव तिङन्तस्य निवातप्रतिषेधो न तु द्वितीयस्य खा-
दति चेत्यस्यापि । तस्य निवातप्राप्तेरेवाभावादित्याह उदाहरण इत्यादिना ।
तदाशयः । वृत्त्याशयः । नियमोऽयमिति । प्रथमेत्यस्याभावेऽपि प्रथमस्य लाभे
सिद्धे पुनरेतदुपादानन्नियमार्थमिति भावः । अस्येत्यस्योत्तरवाक्य इत्यनेनान्व-
यः । एवञ्च प्रथमत्वमस्योपपन्नमिति भावः । हेति च्चियायाम् । च्चियापदार्थ-
माह । धर्म्म इति । इयोगाभावादिति । प्रायस्य भावाञ्चेत्यपि बोध्यम् विनि-
योगपदार्थमाह । अनेकस्मिन्निति । समानकर्तृक इत्यस्य क्रियावाचकपदघटि
तवाक्यद्वय इति शेषः । निवाताभावस्येति । चादिलोपे विभाषेत्यस्य वैकल्पि-

कत्वेन कं चिन्निपातोदाहरणप्रदर्शनेऽपि न न्यूनतेत्यभिप्रायः। उदाहरणान्तरम्। उत्तरवाक्ययोर्भवन्तीत्यादि। अन्यशब्दसाहचर्यादेकशब्दस्यान्यार्थकस्य ग्रहणे सिद्धे समर्थाभ्यामिति व्यर्थमत आह। अत्र प्रकरण इति। तत्प्रयोजनं यावद्यथाभ्यामिति सूत्रे यावदित्यनेन वत्वन्तस्यापि ग्रहणमिति। न च निपातैर्यद्यदीति सूत्रस्थनिपातग्रहणे नास्यार्थस्य ज्ञापितत्वादिदं व्यर्थमिति वाच्यम्। स्पष्टार्थत्वात्। यद्वृत्त्यान्नित्यम्। यदि यदिति शब्दस्य वृत्तमुच्चारणमित्यर्थस्तदा यः पचति। यस्पचतीयत्र न स्यात्। तत्प्रकृतिकविभक्त्यन्तादुच्चारितादित्यर्थे डतरडतमान्तात्यन्तरः पचति। यत्तमः पचतीत्यस्मान्न स्याद्विभक्तेरनुच्चारणादतो वृत्धातोरकर्मकत्वात्तस्मादधिकरणे क्तः तदन्तस्य पञ्चम्यन्तयच्छब्देन समासो यदो वृत्तमिति। अधिकरणवाचिना चेति प्रतिषेधस्त्वस्मान्निपातनान्न। यच्छब्दो यस्मिन् पदे वर्त्तते तत्पदं यद्वृत्तं तस्मादित्यर्थः स्वीकार्य इत्याशयेनाह। मूले यच्छब्द इत्यादि। यथा किं वृत्तञ्च चिदुत्तरमिति सूत्रव्याख्यानावसरे विभक्त्यन्तं डतरडतमान्तञ्च किमो रूपमित्युक्तान्तथेहापि विवक्षितमिति कश्चिद् भ्राम्येदत आह न त्विति। भाष्ये ध्वनितमिति। यद्यूङ् वायुः पचते। यत्कामास्ते जुहुम इत्युदाहरणोपन्यासेन ध्वनितमित्यर्थः। स्पष्टप्रतिपत्तयेऽन्ते व्याख्यातञ्च भाष्ये यदस्मिन्वर्त्तते यद्वृत्तमिति। ननु यद्वृत्तादिति पञ्चमीनिर्देशात्ततोऽव्यवहितपरस्यैव स्यादिति कथं यद्यूङ् वायुर्वातीत्युदाहरणमत आह। मूलेऽत्र व्यवहित इति। यथेच्छप्रवृत्ताविति। देशकालाद्यनपेक्ष्येष्टसाधनता ज्ञानमात्रेण या प्रवृत्तिः सा यथेच्छप्रवृत्तिस्तस्याङ्गम्यमानायामित्यर्थः। तद्भ्रमादिति। भाष्यापर्यालोचनमूलकभ्रमात्। भाष्ये हि पूजितस्यानुदात्तत्वे काष्ठादिग्रहणङ्कर्त्तव्यम्। काष्ठादिभ्यः पूजनादिति वक्तव्यमित्यभिहितम्। ज्ञापितमेतदिति। काष्ठादयः पूजनवचना ग्राह्या इति बोधितमित्यर्थः। अनुदात्तमित्यस्य प्रक्रान्तत्वेऽपि पुनरेतस्मिन् सूत्रेऽनुदात्तवचनन्नञो निवृत्त्यर्थम्। अत्र वृत्तिन्यासादय इति। अत्याहुरित्यनेनान्वयः। अत एव। असमास एव प्रवृत्तेरिष्टत्वादेव। दारुणमित्यादय इति। दारुणमध्यापक इत्यादय इत्यर्थः। भाष्यविरुद्धत्वादिति। मलोपश्च वक्तव्यः। दारुणाध्यापकः। दारुणाभिरूपक इति भाष्यविरुद्धत्वादित्यर्थः। एवञ्च यन्मूले समा-

सान्तोदात्तत्वापवाद एतत्समास इष्यत इति तद्वृत्त्यनुसारेणेति बोध्यम् । दारुणाध्यापक इति प्रत्युदाहरणङ्कर्मधारयसंज्ञकन्द्रष्टव्यम् । सगतिरपि तिङ् । पूजनादित्यनुवर्त्तते । काष्ठादिभ्य इत्यस्यापि शेषः । निपातैर्यद्यदीति निषेधे प्राप्ते प्रतिप्रसवार्थमेतत्सूत्रम् । फलान्तरमप्याह । न लुङित्यादीति । इत्याहुरिति । कैयटादय इति शेषः । लाभार्थमिति । उत्तरसूत्रे तिङ्ग्रहणादित्यादिना प्रागुक्तमपि पुनर्दार्ढ्याय स्मारितमिति बोध्यम् । भाष्यमिति । निरूपितमेतत् । पदस्य त्वधिकारात्सगतेस्तिङन्तस्याप्राप्तेः सगतिग्रहणमिति गतेस्तिङन्तस्य च निघातोऽनेन विधीयते । प्रतिषेध एवेति । न च गतिग्रहणस्योपसर्गपरत्वे सगतिरपीत्यस्य सोपसर्गोऽपीत्यर्थः । अपिनाऽनुपसर्गस्यापि ग्रहणमिति शुक्लीकरोतीत्यत्र सूत्रस्यास्य प्राप्तिरस्त्येवेति वाच्यम् । विप्रयोगस्य विशेषावगतिहेतुत्वे नानुपसर्गोऽपीत्यनेनोपसर्गसंज्ञकशब्दयोगयोग्यता यस्य धातोस्तत्प्रकृतिकतिङन्तङ्गृह्यते । तद्योगयोग्यश्च यत्र धात्वव्यवहितप्राग्गतेर्नोच्चारणं स एव ते प्राग्धातोरिति सूत्रस्वारस्यात्ताद्दृशस्तुनायमित्याशयात् । कुत्सने च सु । पदादिति निवृत्तमिति । अत्र प्रमाणन्तु कुत्सने क्रियायाः । क्रियायाः कुत्सनेइति वक्तव्यम् । कर्तुः कुत्सने माभूत् । पचति पूतिर्गिरति पूतिरिति भाष्यकारोक्तिरेव । क्रिया विशेषणत्वादिति । अयम्पूतिशब्दः कुत्सितवाची स चाभेदेन धात्वर्थफलविशेषणम् । बाहुलकादौणादिकेति यीति । वसेस्तिविति विहितस्तिब् बहुलग्रहणात्पूञः पूयीधातोर्वा स्वीकार्यः । तथा च धातुस्वरेणाद्युदात्तत्वस्य प्राप्तिरिति भावः । इदम् । चकारानुबन्धकत्वम् । अन्यदेति । यथा वा बह्वर्थमिति वचनेन बहुवचनान्तस्य तिङन्तस्य विकल्पेन निघाते बोधिते निघाताभावपक्षे पचन्ति पूतीत्यत्र पूतिशब्द आद्युदात्त एव । अभाविति । अग्न्युद्धरतीत्यत्र । विशेषाभावेऽपीति । अग्नेः प्रातिपदिकस्वरेणान्तोदात्ततया तस्य यणादेशे कृते य उदात्तस्तत्कृतविशेषाभावेऽपीत्यर्थः । इति नियमादिति । यदा प्रकृतसूत्रे गताविति नास्ति तदाऽनेनैवोदात्तवति तिङन्तेऽनुदात्तत्वे सिद्धे तिङीतिसूत्रन्नियमार्थमिति भावः । ननु ते प्राग्धातोरित्यनेन गतेर्धातोरव्यवधानेन प्राक् प्रयोगविधानात्कथमत्राङो व्यवधानेन प्रयोग इत्यत आह । ते प्रागिति । प्रयोगनियमार्थत्वमिति । प्रागेव ह्युपसर्गा धातोः प्रयोक्तव्या इत्या-

कारकनियमार्थत्वमित्यर्थः छन्दसि परेऽपि व्यवहिताश्चेत्यनेन व्यवधानेनाच्च प्रयोगेऽपि गतित्वमाङोऽस्त्येवेति भावः । संज्ञानियमार्थत्वमिति । धातोः प्राक् प्रयुज्यमाना एव गत्युपसर्गसंज्ञा भवन्ति न तु परे नापि व्यवहिता इति पक्ष इत्यर्थः । तत्प्रत्याख्यायत इति । प्रयोगनियमार्थञ्चेदनुकरणस्येति कारणपरम्प्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः छन्दसि परव्यवहितवचनञ्चेति गौरवाभिधानेन प्रत्याख्यायत इत्यर्थः । इहाप्युक्तम्भाष्ये । छन्दोऽर्थमिति चेन्नागतित्वात् । यत् क्रियायुक्तास्तम्प्रत्येव गत्युपसर्गसंज्ञे भवत इति । अयमेवार्थ इति । छन्दसि परेऽपि व्यवहिताश्चेति सूत्रद्वयप्रत्याख्यानपरक एवाचत्यो ग्रन्थ इत्यर्थः । परनिमित्तानुपादान इति । यथोपसर्गस्य घञि उपसर्गादसमासेऽपीत्यादौ तत्रैव यत्क्रियायुक्ता इति न्यायसञ्चारो न त्वत्रेति भावः । समर्थपरिभाषेति । येन गतेः सामर्थ्यन्तत्प्रतियो गतिः स तस्मिन्निहन्यत इत्यर्थ इति भावः । एकार्थीभाव एवेति । न चात्रैकार्थीभावस्य सम्भावना । साक्षाद्विध्युद्देश्ययोर्विधेयोद्देश्ययोर्वा तस्य स्वीकारात् । उक्तभाष्यन्त्वेवं व्याख्येयम् । यया क्रिययाऽव्यवहितपरशब्दबोध्यया युक्तास्तद्वाचकधातुम्प्रत्येव गत्यादिसंज्ञाः । प्रकृते तु यया क्रियया योगस्तत्र कस्य व्यवहितत्वेन संज्ञानियमपक्षे गतित्वाभावो येन चाव्यवधानन्तस्य क्रियावाचकत्वाभाव इति सर्वथा गतित्वाभाव इति । अत एव। साधनान्वयात्प्रागुपसर्गद्योत्यार्थवृत्तित्वादेव । तिङि चोदात्त । अपवादोऽयमिति । येन नाप्राप्तिन्यायेनेत्यादिः । तदेवोपपादयति । अनुपसर्गेति । शुक्लीशब्दस्य निघातः । अनेन सूत्रेण भवतीति शेषः । तन्निवृत्तिरिति । मन्द्रशब्दस्य निवृत्तिरित्यर्थः । अयम्भावः । गतिसंज्ञायाः क्रियायोगे विधानात्तद्वाचकस्य यत्र परत्वन्तत्र निघातेन भाव्यम्मन्द्रशब्दस्तु न तादृशः । न च कृदन्तेऽतिप्रसङ्गः । तत्र सुबुत्पत्तेः प्राक् समासे कृत्स्वरथाथादिस्वरगतिस्वराणां यथायथम्प्रवृत्त्या शेषनिघातेनानुदात्तत्वङ्गतेः सिद्धमेवेति तिङ्ग्रहणं व्यर्थमिति । मूले परिमाणार्थमित्यस्य यत्ताविशेषावच्छिन्नसमुदायस्य परिग्रहार्थमित्यर्थः । तत्र । पूर्वोक्तार्थे निश्चिते । ध्वनितञ्चेदम्भाष्य इति । तत्र हि यदि तिङ्ग्रहणं क्रियते आमन्त्रेन प्राप्नोति प्रपचतितराम् । प्रजल्पतितरामित्यत्रामन्ते तिङ्ग्रहणेऽव्याप्तिमुक्त्वा तदकरणे आमन्द्रैरित्यत्राप्यापत्तिमुद्भाव्य यत्क्रियायुक्ता इति

त्या तास्परिहृत्य यद्योगान्नतिङन्तस्योदात्तस्य ग्रहणे पुनरपि प्रत्ययस्योदात्तस्य सद्भावो यत्र तत्राव्याप्तिस्तदवस्थैवेत्युक्ता नैष दोषः। यत्क्रियायुक्ता इति नैवं विज्ञायते यस्य क्रिया यत्क्रिया इति कथन्तर्हि या क्रिया यत्क्रिया यत्क्रिया युक्तास्तम्प्रतिगत्युपसर्गसंज्ञे भवत इति समाहितम्। एवञ्च गतित्वनिरूपकस्य क्रियारूपस्यार्थस्य ग्रहणेऽर्थे कार्यासम्भवात्तद्वाचिनि शब्दे परतः कार्यं विज्ञायमानन्तादृशक्रियाप्रधानं यद्यत्तत्र सर्वत्र भविष्यतीति प्रत्ययोदात्तवत्यपि भविष्यतीत्येतत्तात्पर्यकेण तादृशक्रियाबोधकघटिते तिङ्पदस्य लक्षणेति ध्वनितमिति। तत्र विशेषमाह। एते निघाता इति। संहिताधिकाराभावात्कालविलम्बे नोच्चारणन्न क्षतिकरमिति भावः।

## इति तिङन्तस्वरनिरूपणम्।

मूले तिङ्ङतिङ इति निघात इति। एवञ्च निहतस्य विच्छिद्य पाठे श्रवणमिति भावः। संहितायां विशेषमाह। संहितायामित्यादि। तदन्तर्भावादिति। संहिताधिकारान्तर्भावादित्यर्थः। कालव्यवायेऽपि प्रवृत्तिज्ञापनस्य फलमाह। तेनेत्यादिना। पूर्वोक्तसिद्धान्ते शङ्कते। नन्विति। विशिष्य विधानादिति। एवञ्च वैदिकवाक्ये तथोच्चारणन्तच्छाखीयानान्न क्षतिकरमिति भावः। नन्वेवमिति। प्रातिशाख्येन व्यवस्थास्वीकारे सतीत्यर्थः। उपगन्तवै इत्यत्रोपगन्तवैत्येवं। अन्वेतवैइत्यत्रानुएतवै इत्येवमवग्रहः। उत्तरखण्डेति। प्रथमे गकाराकारस्य द्वितीये वकारस्य स्यात्। प्रथमे उपशब्दस्य तवैप्रत्ययान्तगन्तवैशब्देन कुगतीतिसमासेऽव्ययपूर्वपदप्रकृतिस्वरेणोकारस्योदात्तत्वे शेषनिघाते उदात्तादनुदात्तस्येति यकाराकारस्य स्वरितत्वे सति प्रचयस्य द्वितीयेप्येवमेवैकारस्य प्रचयप्राप्तिः। द्वितीये इण्धातोस्तवैप्रत्ययः। उभे वनस्पत्यादिषु युगपदित्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरविधानेन प्रातिशाख्यीयवचनान्तरेण व्यवस्था प्रकृते स्वीकार्येति समाधत्ते। पद्यादीनिति। अनेन प्रातिशाख्यीयवचनान्तरेणासंहितवद्भावे सति तस्यादित इत्यारभ्य नव सूत्रा द्द्वोत्कर्षेण प्रचयविधायकस्य प्राप्तावप्यसंहितवद्भावेनाप्रवृत्तिरिति भावः। रत्नधातम्। अत्र रत्नधातममित्यवग्रहः। अलला भवन्तीरित्यत्रालला भवन्तीरित्यवग्रहः। न प्र-

वर्त्तत इति। पूर्वोक्तरीत्याऽसंहितवद्भावादिति शेषः। परिग्रह इति। अवग्रहयोग्यपदघटितस्य संहितस्य क्रमकाले वेष्टनम्परिग्रहः। वेष्टक इति। क्रमकाले इति शब्दघटितशब्देनोच्चारणरूपं वेष्टनमेव वेष्टकमिति। अलला भवन्तीरित्यलला भवन्तीरिति यथा। सर्वेष्ट सिद्धिरिति। सर्वेषामिष्टानाम्प्रातिशाख्यीयवचनैर्न सिद्धिरित्यर्थः॥

## इति प्रदर्शितरीत्या स्वरविधायकशास्त्र-प्रवृत्तिविवरणम्।

मूले अधिकारसूत्रे एते इति। उभयोरधिकारसूत्रत्वेऽपि लिङ्गमित्याशास्त्रसमाप्ते द्वितीयस्तु तारा धारेति यावदिति विवेकः। अत्रापि लिङ्गं शास्त्रीयम्प्रागुक्तमेव विवक्षितम्। तदर्थं लिङ्गं तत्तच्छब्दप्रतिपाद्यम्। तत्रायं विशेषः। शब्दशक्तिस्वभावेन कस्य चित्सर्वलिङ्गप्रतिपादकता कस्य चिदेकलिङ्गप्रतिपादकता कस्य चिद्विलिङ्गयुक्तार्थप्रतिपादकता चेति। यद्यपि शब्दानामर्थानाञ्चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवस्थायोग्यानामेव सम्भवति न त्वस्मदादीनामज्ञानाम्। तथाप्यस्मदाद्युद्देशेन शास्त्रप्रवृत्तेर्यया लघुनोपायेनास्मदादीनां ज्ञानम्भवेत्तयाह। ऋकारान्ता इत्यादिना। स्त्रीतिपदमेषु सूत्रेषु सम्बध्यते तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम्। तस्य लिङ्गपदेन बहुव्रीहिसमासे स्त्रीलिङ्गा इति सामानाधिकरण्येन तु व्यवहारः। मात्रादिशब्दानां विशेषत उपादानात्स्वस्त्रेति लभ्यम्। अवधारणस्य तु यथालाभस्तम्प्रकारमाह। स्वस्रादिसप्तकस्यैवेति। ङीब्निषेधेन। न षट्स्वस्रादिभ्य इति सूत्रेण ङीपो निषेधेन। कर्त्रीत्यादेरिति। अनेन कर्तृपदेन यौगिकाः शब्दा ऋकारान्ताः परिग्राह्याः। रूढस्य क्रोष्टृप्रभृतिशब्दस्यादिना परिग्रहः। न च सप्तैवेति वक्तव्ये पञ्चैवेति नियमानुपपत्तिरिति वाच्यम्। आदेशत्वालाक्रान्ताः पञ्चैवेत्यर्थात्। यद्यपि भाष्यसम्मते तृज्वत्क्रोष्टुरित्यादि त्रिसूत्र्याः प्रयोग नियमार्थत्वपक्षे स्त्रियाम्वर्त्तमानस्य क्रोष्टृशब्दस्याप्यादेशत्वानाक्रान्तत्वम्। तथापि परिनिष्ठिते शब्देऽयमीकारान्त एव प्रयु-

ष्यत इति भाव: । उणादयो बहुलमिति सङ्गृहीतसाधुत्वकानां व्युत्पन्नत्वं शास्त्रान्तरे प्रसिद्धमिति तदभिप्रायेणाह । अन्यू इत्यादि । अवनि. । अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिरित्यनि: । चमूरिति । कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरित्यू: । दयू: । अत्र वकारस्य ज्वरत्वरेत्यूठ् । अशनिभर । पूर्वसूत्रापवादोऽयम्। सिन्यन्त: । भूमि । नियो मिरित्यतो मिरित्यनुवर्त्य विहितो भुव: किदिति नि: । ग्लानि: । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति नि: । वन्ह्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह । वह्निह । वृष्णि: । सृवृषिभ्यां किदिति नि: । अग्नि: । अङ्गेर्नलोपश्चेति नि: । श्रोणियोन्यू । श्रोणि. योनि: । वह्निश्रीती नि: । ऊर्मि: । अर्त्तेरूच्चेति नि: । ईकारान्तश्च । अत्र ईकार: प्रत्यय एव । पूर्वोत्तरसाहचर्यात् । लक्ष्मीरिति । अत्र लक्षेर्मुट् चेति सूत्रेऽवितृस्तृतन्त्रिभ्य ईरित्यत ईरित्यस्यानुवृत्त्या तेनेकार: प्रत्यय: । एवमव्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम् । तद्यथा । अवीर्नारी रजस्वला । तरीर्नौ: । स्तरीर्धूम:। तन्त्रीर्वीणादेर्गुण: । न च यापो: किद्द्वेचेति सूत्रविहितेकारान्तस्यापि स्त्रीत्वापत्तिरिति वाच्यम् । पुंस्त्वाधिकारोक्तेन योपध: योपध इत्याभ्याम्परत्वाद्बाधात्। यूप इत्यादौ प्रथमस्य समय इत्यादौ द्वितीयस्य चारितार्थ्यात् । एवञ्च ययीपयीशब्दस्य पुंस्त्वेऽपि न क्षति: । ऊङाबन्तश्च । ऊङुत इत्यूङ् । आब्ग्रहणे न टाब्डाब्चापाङ्ग्रहणम् । व्यन्तमेकाचरम् । ईकारोऽत्र प्रत्यय: । ऊकारसाहचर्यात् । विंशत्यादिरानवते: । विंशत्यादय: पङ्क्तिविंशतीति सूत्रनिर्दिष्टा: । दुन्दुभिरक्षेषु । अक्षेषु बोधनीयेषु य: प्रयुज्यत इत्यर्थ: । नाभिरक्षत्रिये । क्षत्रिभिन्ने यो नाभिशब्द: प्रयुज्यते स स्त्रियां स्यात् । इयन्नाभिरिति । पुरुषावयवे इदम् । उभावन्यत्र पुंसि । इदं स्पष्टार्थम् । पूर्वसूत्रयोरक्षेष्वक्षत्रिय इत्यभिधानेन सिद्धे: । कथन्तर्हीति । अत्र यत्कोमलैरिति तदनुपपन्नम् । स्त्रीलिङ्गनाभिशब्दार्थविशेषणत्वात् । सामान्य इति । लिङ्गविशेषाऽविवक्षया नपुंसककोमलैरिति प्रसाध्य तस्य नाभिशब्दार्थविशेषणत्वं स्वीकार्यम् । विशेष्यप्रतिपादकस्य यथा पुंस्त्वन्तथास्यापि भविष्यतीत्याशयेन समाधानान्तरमाह । वस्तुतस्त्विति। चक्रमध्यक्षत्रिययोरित्यत्र चक्रमध्यञ्च क्षत्रियश्चेति द्वन्द्व: । अत एव प्राण्यङ्गसंज्ञयोरिति सङ्गच्छते । तलन्त: । तस्य भावस्त्वतलाविति सूत्रविहिततल्प्रत्यया

न्तः स्त्रियां स्यात्। भूमिविद्युदादिति। अत्राभिधानशब्दो भूम्यादिशब्दशक्यतावच्छेदकधर्मावच्छिन्नशक्तपरस्तेन प्रमेयशब्दव्यावृत्तिः। एवमन्यत्रापि बोध्यम्। यादो नपुंसकम्। पूर्वस्यापवादः। स्थूणोर्णे नपुंसके च। चकारेण स्त्रियामित्यस्यानुकर्षणार्थमस्यात्र लेखः। प्राग्वडिति। स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि स्वरितेनाधिकार इत्यस्याधिकः कार इतिव्याख्यानस्यापि प्रसिद्धत्वादत्र सम्बन्धः। दर्विविदि। दर्विशब्दो वृहभ्यां विनितिविन्नन्तस्तस्मात्सर्वतोऽक्तिन्नर्थादित्येक इति विकल्पेन ङीष् दर्वी इति। तिथिनाडि। एते प्राग्वदिति। स्त्रियां स्युरित्यर्थः। पुंस्येवेति। देवासुरात्मेत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः। भाष्यप्रयोगादिति। तेन भाष्ये णाबिति सूत्रनिर्दिष्टानाम्बहुत्वं प्रायिकमिति कल्प्यते तेनान्यत्र बहुत्वाभावेऽपि न क्षतिः। क्वचिद्व्यभिचारमिति। तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितन्तथाऽन्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति सूचयति॥

## इति स्त्र्यधिकारः।

भावार्थ एवेति। भावे यो घञ् तदन्तस्य पुंस्त्वमित्युक्तम्। एतल्लाभप्रकारमाह। नपुंसकेत्यादि। भयलिङ्गेत्यादि। पूर्वस्यापवादोऽयम्। क्यन्तो घुः। किप्रत्ययोऽन्तः परो यस्मात्तादृशो यो घुसंज्ञको धातुस्तद्घटितः पुमानित्यर्थः। देवासुर। अत्र पञ्चशब्दान्तद्वन्द्वङ्कृत्वा तस्य षष्ठीसमासोऽभिधानशब्देन कर्त्तव्यः। अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरस्तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम्। शब्द। स्वरूपापेक्षया च नपुंसकत्वम्। त्रिविष्टप। स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भ इति। अत एवाहामरसिंहः। क्लिबे त्रिविष्टपमिति। द्यौः स्त्रियाम्। अस्य स्वर्गाभिधानत्वात्पुंस्त्वस्य पूर्वेण प्राप्तेऽस्यारम्भः। इषुबाहु। भुजपर्यायवाचकोऽयम्। बाणकाण्डौ। शराभिधानोऽयम्। नान्त इति। नान्तप्रत्ययान्त इत्यर्थः। अभ्रन्नपुंसकमिति। मेघाभिधानविषये पूर्वस्यापवाद इत्यर्थः। लिङ्गशेषविधिरिति। लिङ्गस्य शेषोऽवशेषस्तस्य विधिः व्यापी। काण्डत्रयस्य व्यापको यदि विशेषशास्त्रेण बाधितो न स्यादित्यर्थः। नपुंसके चेति। चात् पुंसि। वसु चार्थवाचि। अर्थवा-

च्चि वसुशब्दो नपुंसके च द्रष्टव्यः। रुत्वन्तः। नुकारोमकारेत्संज्ञकः। मेरुः। सेतुरित्यत्र सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुनिति तुन् सूर्यवाचकः प्रथमः। दारुकसेरु। जत्वादित्वादुप्रत्ययान्ता एते। कंसं चाप्राणिनि। कंसमिति शब्दस्य निर्देशान्नपुंसके चेत्यस्य सबंधः। अप्राणिनि वाच्ये कंसशब्द इत्यर्थः। दिनानाहनी। दिवसाभिधानाविमौ। खारीमानिके। मानाभिधानत्वात् पुंस्त्वे प्राप्तेऽस्यारम्भः। क्लुत्वञ्चेति चकारः पुंस्त्वस्य समुच्चायकः। नाब्ययजनोपपदानि व्रणाङ्गपदानि। अत्रोपपदशब्दः पूर्वपदपरः। न तु तत्रोपपदमिति तत्संज्ञकपरः। तस्य प्राप्त्यभावात्। क्लीवत्वनिवृत्त्यर्थमिति। नपुंसकाधिकारे मुखनयनेत्यादिवक्ष्यमाणसूत्रेण विवराभिधानत्वेन क्लीवत्वस्याप्तन्तन्निवृत्त्यर्थमित्यर्थः। अमरस्त्विति। एवञ्च तन्मतेऽर्द्धर्चादिष्वयन्द्रष्टव्यः। भावे ल्युडन्तः। इदञ्च सूत्रं यद्यपि नपुंसके भावे क्तः ल्युटोऽनेनैन गतार्थन्तथापि स्पष्टार्थमुपात्तम्। एवमन्तग्रहणञ्चेति बोध्यम्। इध्मप्रव्रश्चन इति। अत्र करणे ल्युट्। निष्ठा च। अत्र निष्ठापदं क्तस्य बोधकम्। इदमपि सूत्रं नपुंसके भावे क्त इत्यनेन गतार्थम्। प्रत्ययग्रहणे तदन्तग्रहणम्। त्वष्यञौ तद्धितौ। भावे इत्यनुवर्त्तते। यद्यपि तस्य भाव इति सूत्रे भावशब्दः। प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः। भावे ल्युडन्त इत्यत्र तु भावशब्दो भावनाबोधक इति भेदस्तथापीह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः। कर्मणि च। चाद्भावे। त्वष्यञावित्याद्यनुवर्त्तते। स्नेनाद्यन्नलोपश्चेति। यद्यपीदं सूत्रम्प्राग् व्याख्यातमेव। तथापीतः प्रभृतिकथितानान्नपुंसकत्वस्य स्पष्टप्रतिपत्त्यर्थसिद्धोपादानमिति बोध्यम्। द्वन्द्वैकत्वमिति। द्वन्द्वश्च प्राणितूर्येत्यादिना येषान्द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकत्वाभिधायका बोध्या इत्यर्थः। अभाषायामिति। इदमपि सूत्रं हेमन्तशिशिरावहोरात्रे च च्छन्दसीतिसूत्रे छन्दसीत्युपादानेन गतार्थम्। हेमन्तशिशिरावित्यत्र तु निर्देशादेव पुंस्त्वप्रतिपादकता बोध्या। स्त्रियाञ्चेति। चेन नपुंसकमित्यनुकर्षः। विभाषा सेनेति विभाषापदोपादानेनेदमपि गतार्थम्। परवदिति। परवल्लिङ्गमिति सूत्रोपात्त इत्यर्थः। परवदितिसूत्रस्य स्मारकमिह परवदिति न त्विदमपूर्वम्। तत्पुरुष इति। द्वन्द्वस्याप्युपलक्षणम्। संख्यापूर्वा रात्रिः। संख्या-

पूर्वं रात्रक्लीबमित्यस्यानुवादः। द्विगुः स्त्रियाञ्चेति। चान्नपुंसकमिति स-
म्बध्यते। इदमपि अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः। पात्राद्यन्तस्य नेत्य-
नेन गतार्थमत एवाह। व्यवस्थयेति। इसुसन्तः। अर्चिशुचिहुसृपिछादिछर्दि-
भ्य इसिः। जनेरुसिः। एतयोरप्राप्तावेतौ। छदिः। स्त्रियामेव। यद्यपि छदि-
रित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन स्त्रियामित्यनेनैव नित्य
स्त्रीत्वलाभे सिद्धे एवकारो व्यर्थः। तथापि पटलञ्छदित्यमरग्रन्थदर्शनेन सा-
हचर्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः। अत एव वक्ष्य-
ति। अमरव्याख्यातार इति। अस्य। मुखनयनेति सूत्रस्य। सीरार्थौदनाः।
सीरशब्दो हलाभिधानः। अर्थशब्दस्तु धनशब्दस्य पर्यायः। ओदनशब्दोऽन्न-
वाची। भिस्साभिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरि-
ति। अटवी स्त्रियाम्। अयं वनाभिधानः। सङ्ख्येति। सङ्ख्यावाचीत्य-
र्थः। शतायुत। अयं शतशब्दोऽनन्तवाची। शतादिरिति पूर्वसूत्रापवादोऽयम्।
लक्षाकोटी। एतयोरपि सङ्ख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम्। क्लीबेऽपी-
ति। एवञ्चायमर्द्धर्चादिषु द्रष्टव्यः। शंकुः पुंसि। अस्य शंकुशब्दस्य सङ्ख्यावि-
शेषवाचकत्वाच्छतादिः सङ्ख्येति नपुंसकत्वे प्राप्तेऽस्यारम्भः। सहस्रः क्व
चित्। क्वचिदिति। अर्थविशेष इत्यर्थः। सहस्रशीर्षा पुरुषः सहस्राक्षः सह-
स्रपादित्यत्रानन्तवाची। नचात्र सहस्रशब्दस्यानन्तपरत्वे सङ्ख्यापरत्वाभावेन
सहस्रपादित्यत्र सङ्ख्यासु पूर्वस्येति पादशब्दान्त्यलोपो न स्यादिति वाच्यम्।
नियतविषयपरिच्छेदकत्वरूपसङ्ख्यात्वाभावेऽपि यथाकथञ्चित्सङ्ख्यायाः प्रतीते-
रिति लोपः। वस्तुतश्छान्दसो लोप इति तूचितम्। मन् द्व्यच्कः। अत्र मन्
प्रत्ययः श्रूयमाणनकारान्तः सर्वधातुभ्यो मनिनिति विहितः। चर्म वर्मेति। च-
रादिधातोर्मनिन् प्रत्ययः। बाहुलकादिडभावः। अणिमादौ व्यिट्। दामेत्य-
त्रापि सर्वधातुभ्यो मनिनित्यनेनैव मनिन्। परन्त्वयं विशेषः। उणादिप्रत्य-
यान्तानां संज्ञाशब्दत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता सा कल्पनीयेति कर्त्त-
र्यपि प्रत्ययः सम्भवतीति। ब्रह्मेति। बृंहेर्नोच्चेति मनिन् प्रत्ययः। असन्तो
द्व्यच्कः। सर्वधातुभ्योऽसुनिति विहितोऽसुन्। तस्यासुनो शेष्वनुवृत्तिस्तदन्ता
अपि बोध्याः। चन्द्रे मोडिदिति विहितासुन् प्रत्ययान्तश्चन्द्रमस् शब्दोऽप्यत्रान-

न्तः तदु ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। एवमप्सरः शब्दोऽपि। चान्तः। चप्रत्ययान्तो नपुंसकं स्यात्। सर्वधातुभ्यस्त्रन्निति त्रन्प्रत्ययो नकारानुबन्धक इति। यात्रा मात्रा। हुयामेतिविहितस्त्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्येतेति नपुंसकत्वे प्राप्तेऽस्यारम्भः। एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः। भृत्यामित्र। पूर्वस्यापवादः। यत्त्विति। दोषान्तरमित्यन्ता तदुक्तिः। मध्योदात्तः। मकारेकारस्य प्रत्ययादुदात्तत्वेन मध्योदात्त इति तद्भावः। चिन्त्य इति। चित्वस्य मत्त्वात्। नन्वमित्रशब्दो नैत्रन्तः किन्तु अमिचिमीति मिधातुविहितक्तान्तमित्रशब्देन नञः समासे सति सिद्ध इत्यत आह। नञ्समासेऽप्येवमिति। अन्तोदात्त इत्यर्थः। परवल्लिङ्गतेति। एवं सति नपुंसकत्वं स्यात्। हरदत्तोक्तन्दूषयति। तत्पुरुषत्यादिना। नञोजरमरेति। यदि तु न मित्रममित्र इति नञ्समासस्तदा न नञो जरमरमित्रेत्यस्य प्राप्तिस्तस्य बहुव्रीहिमात्रविषयत्वादिति बोध्यम्। कुसुमाभिधायित्वेऽपीति। वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः। यदि तु कुसुमविशेषाभिधायकोऽयन्न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति विभाव्यते तदा त्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति। मतान्तरेण। जलजशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः। आहवसंग्रामौ पुंसि। एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते। एवमाजिशब्दोऽपि। फलजातिरिति। फलपदोपादानाद्वृक्षपरस्यामलकीशब्दस्य क्लीवत्वेऽपि न क्षतिः। हरीतकीति। हरीतक्याः फलानि हरीतक्यः। हरीतक्यादिषु व्यक्तिरिति क्लीवत्वाभिधानात्। रथाङ्गादाविति। आदिना देवनाद्यपरिग्रहः॥

## इति नपुंसकाधिकारः।

स्त्रीपुंसयोः। अधिकारोऽयम्। नपुंसकञ्चेति। चात्स्त्रीपुंसयोः। शलाकावाचीति। सा च शलाका काष्ठादिनिर्मिता। तत्र मानमाह। तथा चेति। अविशिष्टलिङ्गम्। तत्तल्लिङ्गवाचकताप्रयुक्तकार्यविशेषशून्यम्। शिष्टा इति। पूर्वोक्तशब्दान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवन्तः। परवदिति। विशेष्यवदित्यर्थः। गुणवचनञ्च। परवदित्यनुवर्त्तते। कृत्याश्च। कृत्यप्रत्ययान्ताः परव-

बोध्याः। सर्वादीनि सर्वनामानि। सर्वनामसंज्ञकानि सर्वादीनि परवद्बोध्यानि। स्पष्टार्थेति। लोकव्युत्पत्त्यैव तत्तल्लिङ्गाभिधानस्य सिद्धत्वात्। अत एव लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भगवता भाष्यकृतोक्तम्। तेन यौगिकेषु शब्देषु लोकव्युत्पत्तिरेव लिङ्गाभिधाने प्रमाणमिति शिवम्॥

## इति लिङ्गानुशासनविवरणम्।

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डल-
सञ्चारिविमलतरानवद्यसद्यशः पार्वणपीयूषभान्वगस्त्यकुलवं-
शावतंसश्रीमद्भवदेवमिश्रात्मजभैरवमिश्रकल्पितायां
शब्देन्दुशेखरटीकायामुत्तरार्द्धं समाप्तम्।

शशपक्षसिद्धिचन्द्राख्ये मन्मथे शुभवत्सरे॥
माघे मास्य सिते पक्षे मूले कामतिथौ शुभा॥ १॥
पूर्णावारे दिनमणेरियञ्चन्द्रकलाभिधा॥
शब्देन्दुशेखरव्याख्या भैरवेण यथामति॥ २॥
कल्पिता रामकृपया प्रमोदं शिवयोः सदा॥
करोतु विदुषाञ्चैवमधिकं प्रीतिमङ्गलम्॥ ३॥

